# कुमारसम्भवटीका सञ्जीवनी ।

## मङ्गलाचरणम् ।

मातापितृभ्यां जगतो नमो वामार्द्धजानये ।
सद्यो दक्षिणदृक्पातसङ्कुचद्वामदृष्टये ॥
अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥
शरणं करवाणि शर्मदं ते चरणं वाणि ! चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब ! कृतार्थसार्थवाहम् ॥

## प्रतिज्ञा ।

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥
भारती कालिदासस्य दुर्व्याख्या-विषमूर्च्छिता ।
एषा सञ्जीवनी व्याख्या तामद्योज्जीवयिष्यति ॥

---

अ...

देवता आत्मा ...
...णयपार्वती...
...श्रयः स्थानमिति ...
...धिको राजा अधिराज...
...१, पा० )। न गच्छन्तीति ...
नगाधिराजः अस्ति। कथम्भूतः ?
...निधो समुद्रौ वगाह्य प्रविश्य। स्थित

# कुमारसम्भवम्।

## प्रथमः सर्गः।



—०:०:०—

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः।
पूर्वापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥१

[illegible] उत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः अस्ति। (कथंभूतः ?) पूर्वापरौ तोयनिधी वगाह्य पृथिव्या मानदण्ड इव स्थितः ॥ १

[illegible] कालिदासः कुमारसम्भवं काव्यं चिकीर्षुः "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" (काव्यादर्शः १।१४) इति शास्त्रात् काव्यादौ वक्ष्यमाणार्थानुगुणं वस्तु निर्दिशति,—

अस्तीति। उत्तरस्यां दिशि। अनेन अस्य देवभूमित्वं सूच्यते। देवता आत्मा अधिष्ठाता यस्य सः; एतेन अस्य वक्ष्यमाणमेनका-[परि]णयपार्वतीजननादिचेतनव्यवहारयोग्यत्वसिद्धिः। हिमस्य [आल]यः स्थानमिति हिमालयो नाम, हिमालय इति प्रसिद्धः। अधिको राजा अधिराजः, "राजाहःसखिभ्यष्टच्" (५, ४, ९१, पा०)। न गच्छन्तीति नगाः अचलाः, तेषाम् अधिराजः नगाधिराजः अस्ति। कथम्भूतः ? पूर्वापरौ प्राच्यपश्चिमौ तोय-[नि]धी समुद्रौ वगाह्य प्रविश्य। अतएव, पृथिव्याः भूमेः मानम्

हस्तादिना परिच्छेदः, भावे ल्युट्, तस्य दण्डः, यद्वा, मीयतेऽनेनेति मानम्, करणे ल्युट् । स चासौ दण्डश्च स इव स्थितः, आयामपरिच्छेदकदण्ड इव स्थित इत्यर्थः । पूर्वापरसागरावगाहित्वञ्च अस्य हिमालयस्य अस्त्येव । उक्तञ्च ब्रह्माण्डपुराणे— "कैलासो हिमवांश्चैव दक्षिणे वर्षपर्वतौ । पूर्वपश्चायतावेतावर्णवान्तरुपस्थितौ ।" अत्र हिमालयस्य उभयाब्धिव्याप्तिसाम्यात् मानदण्डत्वेन उत्प्रेक्षणात् उत्प्रेक्षालङ्कारः । "प्रकृते अप्रकृतगुणक्रियादिसम्बन्धात् अप्रकृतत्वेन प्रकृतस्य सम्भावनमुत्प्रेक्षा" इत्यलङ्कारसर्वस्वकारः । अस्मिन् सर्गे प्रायेण वृत्तमुपजातिः, क्वचिदिन्द्रवज्रोपेन्द्रवज्रे च, तल्लक्षणन्तु—"स्यादिन्द्रवज्रा यदि तौ जगौ ग." । उपेन्द्रवज्रा जतजास्ततो गौ" ॥ अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति ॥ १

१ । वगाह्येति । अव+गाह+ल्यप् । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो"-रिति अल्लोपेन सिद्धमेतत् पदम् । तोयेति । निधीयते यस्मिन्निति निधिः तोयानां निधिः तोयनिधिः । नि+धा+अधिकरणे किः । द्वितीयाद्विवचनेन पदमिदं सिद्धम् । यथा भूमेः परिमाणं कुर्वता जनेन परिमाणार्थं भूमौ स्थापिता दण्डस्तिष्ठति, तथा हिमालयः पृथिव्याः परिमाणार्थमिव स्वयमेव मानदण्ड इव लम्बमानस्तिष्ठतीत्युत्प्रेक्षेयम् । यथा— "मन्ये शङ्के ध्रुवं प्रायः नूनमित्येवमादय" इति साहित्यदर्पणः । आदिशब्दात् इवादयो गृह्यन्ते । विचारः । ननु हिमालयः कियन्तं कालमस्ति तत् कोऽपि वक्तुं न शक्नोति कथमत्र वर्त्तमानप्रयोगः सम्भवतीति ? सत्यं, वैयाकरणिकाश्चतुर्धा वर्त्तमानान् वदन्ति, "प्रवृत्तोपरतश्चैव वृत्ताविरत एव च । नित्यप्रवृत्तः सामीप्यो वर्त्तमानश्चतुर्विधः" । अस्तीति नित्यप्रवृत्तः वर्त्तमानः अतएव न विरोधः । स्थित इति, ननु धातुमात्राद् भू-तवत् भवत इत्यनेन स्थितपदस्य अतीतत्वं सूचितं, तर्हि कथम् अस्तीत्यनेनास्य स-युज्यते ? सत्यं ; स्थितास्ती: परस्परमर्थसम्बन्धवशात् भिन्नकालावपि तयोः प्रयो-दृश्यत. । यथा "वनं गतः श्वो भवितेति रामः इति भट्टिः" । "वसन् ददर्शावतरन्त-दि"ति माघः ।

यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥२

अन्वयः। सर्व्वशैलाः दोहदक्षे मेरौ दोग्धरि स्थिते [ सति ] यं वत्सं परिकल्प्य पृथूपदिष्टां धरित्रीं भास्वन्ति रत्नानि [ भास्वतीः ] महौषधीश्च दुदुहुः ॥ २

इतः परं षोड़शभिः श्लोकैः हिमाद्रिं वर्णयति—तत्र नगाधिराजत्वं निर्वोढुमाह—यमिति। सर्वे च ते शैलाश्च सर्वशैलाः। "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेने"ति (२,१, ४९ पा०) समासः। यं हिमालयं वत्सं परिकल्प्य विधाय दोहदक्षे दोहनसमर्थे मेरौ दोग्धरि स्थिते सति; "यस्य च भावेन भावलक्षणमि"ति (१, ३, ३७ पा०) सप्तमी। पृथूपदिष्टां पृथुना वैण्येन उपदिष्टाम् ईदृक्तया प्रदर्शितां धरित्रीम्, गोरूपधरामिति शेषः। "गौर्भूत्वा तु वसुन्धरा" इति विष्णुपुराणात्। "अकथितञ्चे"ति (१, ४, ५१ पा०) कर्म्मत्वम्। भास्वन्ति च भास्वत्यश्च भास्वन्ति द्युमन्ति,ओषधिविशेषणञ्च एतत्। "नपुंसकमनपुंसकेन" (१, २, ६९ पा०) इत्यादिना नपुंसकैकशेषः। रत्नानि मणीन् जातिश्रेष्ठवस्तूनि च। "रत्नं श्रेष्ठे मणावपि इति विश्वः। "जातौ जातौ यदुत्कृष्टम् तद्रत्नमिति कथ्यते" इति यादवः। महौषधीश्च सञ्जीवनोप्रभृतीश्च, क्षीरत्वेन परिणता इति शेषः। "ताः क्षीरपरिणामिनीः" इति विष्णुपुराणात्। दुदुहुः। "दुहियाचीत्यादि"ना (१, ४, ५१ पा० भा० ) द्विकर्म्मकत्वम्। अत्र प्रयोजकत्वेऽपि शैलानां पश्चभिर्ह्वलैः कर्षति ग्रामं ग्रामणीरितिवत् तत्समर्थाचरणात् कर्तृत्वेन व्यपदेशः। दुहेः स्वरितेत्त्वेऽपि अकर्त्रभिप्रायविवक्षायां परस्मैपदम्। अत्रार्थे प्रमाणम्—"गौर्भूमिरचलाः सर्वे कर्त्तारोऽत्र पयांसि च। ओषध्यश्चैव भास्वन्ति रत्नानि विविधानि च। वत्सश्च हिमवानासीद्दोग्धा मेरुर्महागिरिः" इति। एतेन वत्सस्य मातुः प्रेमास्पदत्वात् अस्य सारग्राहित्वं गम्यते। तथा च अस्य नगस्य रत्नविशेषभोक्तृत्वात् नगाधिराजत्वं युक्तमिति भावः। अत्र हिमवर्णनस्य प्रकृतत्वात् तद्गतौषधिरत्नानां द्वयानामपि प्रकृतत्वात् अत्र दोहनक्रियारूपसमानधर्म्मसम्बन्धात् औपम्यस्य गम्यत्वात् केवलप्राकरणिकविषयः तुल्ययोगितानामालङ्कारः। तदुक्तं—"प्रस्तुतानां तथान्येषां केवलं तुल्यधर्म्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगिता।" न चात्र रूपकपरिणामाद्यलङ्कारशङ्का

कार्य्या, तेषामारोप्यहेतुत्वात् हिमहिमाचलादिषु वत्सत्वदोग्धृत्वादीनामागमसिद्धत्वेन अनारोप्यमाणत्वादिति ॥ २

दुहेः स्वरितेत्वात् कर्त्तृगां स्वार्थक्रियाफलस्यागम्यत्वादात्मनेपदं न भवति। पुरा मेरुर्हिमवन्तं वत्सं विधाय गोरूपां धरां भास्वन्ति विविधानि रत्नानि महौषधीश्च दुदोह । अन्ये शैला आहर्त्तारो बभूवुरित्यागमः। "पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्। एकधर्म्माभिसम्बन्धः स्यात् तदा तुल्ययोगिता"। हिमालयगत-रत्नौषधि-प्रभृतयः एव प्रस्तुत-पदार्थाः, ते एव दोहनादिक्रियारूपैकधर्म्मसम्बन्धा भवन्ति, ततः तुल्ययोगिता। विचारः। ननु शैलानां चेतनाभावे दोहनकर्त्तृत्वारोपणात् न कथं रूपकालङ्कारः? सत्यं रूपकालङ्कारस्य सम्भावनाशङ्कया आगममहिम्नोऽपकर्ष एव सूच्यते। यतः इयं दोहनरूपा घटना आगमलिखितत्वात् सत्यमूला मन्यते ॥ २

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥३

अन्वयः। अनन्तरत्नप्रभवस्य यस्य हिमं सौभाग्यविलोपि न जातम्, एको दोषः गुणसन्निपाते इन्दोः किरणेषु अङ्क इव निमज्जति हि ॥ ३

ननु हिमदोषदूषितस्य तस्य अत्यन्तमनभिगम्यत्वाच्छिन्निगुण इव सर्वमपि सौभाग्यं विफलमित्याशङ्क्याह,—

<u>अनन्तेति</u>। प्रभवति अस्मादिति प्रभवः कारणम् । अनन्तानाम् अपरिमितानां रत्नानां श्रेष्ठवस्तूनां प्रभवस्य यस्य हिमाद्रेः हिमं कर्त्तृ, सुभगस्य भावः सौभाग्यम् ।"हृद्भगसिन्ध्वन्ते पूर्वपदस्य" इति (७, ३, १९ पा० ) उभयपदवृद्धिः। तद्विलुम्पतीति सौभाग्यविलोपि सौन्दर्य्यविघातकं न जातं न अभूत्। तथाहि—एको दोषः गुणसन्निपाते इन्दोः किरणेष्वङ्क इव निमज्जति अन्तर्लीयते इत्यर्थः। न हि स्वल्पो दोषोऽमितगुणाभिभावकः, किन्तु कश्चि इन्दुकलङ्कादिवत् गुणैः अभिभूयते अन्यथा सर्वरम्यवस्तुहानि-प्रसङ्गात् इति भावः। अत्र उपमानुप्राणितोऽर्थान्तरन्यासालङ्कारः। तल्लक्षणन्तु,—'ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन। तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः" इति दण्डी ॥ ३

"सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।
कार्यंञ्च कारणेनेदं कार्येण च समर्थ्यते
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ॥" दर्पणः ॥ ३

अत्र विशेषेण परार्द्धेन सामान्यस्य पूर्वार्द्धस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः । विचारः । न च परदोषाच्छादकगुणपक्षपातिनः कवेरसमदर्शित्वं सूच्यते इति वाच्यं । चेत् कश्चिदेकमेव दोषमवलम्ब्य आक्रामति तर्हि अनन्तरत्नप्रभवादिगुणानामपकर्षसम्भावनादेक एव दोषोऽनन्तगुणान् परिभवितुं न शक्नुयादिति भावः ।

यश्चाप्सरोविभ्रममण्डनानां
सम्पादयित्रीं शिखरैर्बिभर्त्ति ।
बलाहकच्छेदविभक्तरागा-
मकालसन्ध्यामिव धातुमत्ताम् ॥४

अन्वयः । यश्च अप्सरोविभ्रममण्डनानां सम्पादयित्रीं बलाहकच्छेदविभक्तरागाम् अकालसन्ध्यामिव धातुमत्तां शिखरैः बिभर्त्ति ॥ ४

यश्चेति । किञ्चेति चकारार्थः । यः हिमाद्रिः अप्सरसां विभ्रममण्डनानि विलासालङ्करणानि । अथवा विभ्रमो विपरीतन्यासः, "विभ्रमस्त्वरयाऽकाले भूषास्थानविपर्य्ययः" इति दशरूपकात् । तेन मण्डनानि तेषाम् सम्पादयित्रीम् । एतद्धातुरागदर्शिन्योऽप्सरसः सन्ध्याभ्रमेण प्रसाधनाय त्वरयन्तीति भावः । तथात्वे भ्रान्तिमदलङ्कारो व्यज्यते । "कर्तृकर्मणोः कृति" इति ( २, ३, ६५ पा० ) कर्मणि षष्ठी । वारीणां वाहकाः बलाहकाः, पृषोदरादित्वात् साधुः । तेषां छेदेषु खण्डेषु विभक्तः सङ्क्रमितो रागः यया ताम् एतेनाद्रेरभ्रङ्कषत्वं गम्यते । इदं विशेषणद्वयं सन्ध्यायामपि योज्यम् । धातवः सिन्दूरगैरिकादयोऽस्य सन्तीति धातुमान्, नित्ययोगे मतुप्, तस्य भावः धातुमत्ता ताम् । धातुयोगित्वमिति सम्बन्धोऽपि वाच्यार्थः । "समासकृत्तद्धितेषु सम्बन्धाभिधानं भावप्रत्ययेन" इति वचनात् लक्षणया नित्यानुषङ्गिकधातुमित्यर्थः । अकालसन्ध्यामिव अनियतकालप्राप्तसन्ध्यामिव शिखरैर्बिभर्त्ति धत्ते । अत्र सन्ध्याशब्दस्य जातिवाचित्वात् जात्युत्प्रेक्षा ॥ ४

विषमी—यथा, त्वया हर्षरागादेः दयितागमनादिषु । अस्थाने भूषणादीनां विन्यासो विषमो मतः इति दर्पणः । पृषोदरादीनि यथा—वर्णागमो वर्णविपर्य्ययश्च, द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् । "जातिगुणक्रियाद्रव्यं यद्वुत्प्रेक्ष्य द्वयोरपीति दर्पणः । शिखरैरित्यत्र तृतीया करणे ॥ ४

आमेखलं सञ्चरतां घनानां
छायामधःसानुगतां निषेव्य ।
उद्वेजिता वृष्टिभिराश्रयन्ते
शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥५

अन्वयः । सिद्धाः आमेखलं सञ्चरतां घनानाम् अधः सानुगतां छायां निषेव्य वृष्टिभिः उद्वेजिताः ( सन्तः ) यस्य आतपवन्ति शृङ्गाणि आश्रयन्ते ॥ ५

आमेखलमिति । सिद्धाः अणिमादिसिद्धाः देवयोनिविशेषाश्च । "पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनय" इत्यमरः । आ मेखलाभ्यः आमेखलं नितम्बपर्य्यन्तम् । "मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोः" इति विश्वः । "आङ् मर्य्यादाभिविध्योः" ( १, १, १२ पा० ) इत्यव्ययीभावः । सञ्चरतां घनानां मेघानाम् अधःसानुनि मेघमण्डलादधस्तटानि गतां प्राप्ताम् । "द्वितीया-श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" इति ( २, १, २४ पा० ) समासः । छायाम् अनातपम् । "छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपम्" इत्यमरः । निषेव्य वृष्टिभिरुद्वेजिताः क्लेशिताः सन्तः । "उद्वेगस्तिमिते क्लेशे भये मन्थरगामिनि" इति शब्दार्णवः । यस्य हिमाद्रेः आतपवन्ति सातपानि शृङ्गाणि आश्रयन्ते आश्रित्य स्थिता इत्यर्थः । अतिमेघमण्डलमस्य औन्नत्यमिति भावः ॥ ५

वृष्टिभिरनुक्ते कर्त्तरि तृतीया । निषेव्य इत्यत्र "परिनिविभ्यः सेव-सित-सय-सिवु-सह-सुट्-स्तुस्वञ्जामि"ति षत्वम् । अधःसानुगतामिति समस्तपदम् । अधःशब्दयोगेन सानूनि द्वितीया ततः गतशब्दयोगेन द्वितीयातत्पुरुषसमासः ॥ ५

पदं तुषारस्रुतिधौतरक्तं
यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।

विदन्ति मार्गं नखरन्ध्रमुक्तैः
मुक्ताफलैः केशरिणां किराताः ॥६

अन्वयः । यस्मिन् किराताः तुषारस्रुतिधौतरक्तं हतद्विपानां केशरिणां पदम् अदृष्ट्वापि नखरन्ध्रमुक्तैः मुक्ताफलैः मार्गं विदन्ति ॥ ६

पदमिति । यस्मिन्नद्रौ किराताः तुषारस्रुतिभिः हिमनिष्यन्दैः धौतं चालितं रक्तं शोणितं यस्य तत् तथोक्तम् । अतो दुर्ग्रहमिति भावः । हताः द्विपाः गजाः यैः तेषाम् । हतद्विपानां केशरिणां सिंहानां पदं पादप्रक्षेपस्थानम् अदृष्ट्वापि नखरन्ध्रैः नखद्रोणिभिः मुक्तैर्मुक्ताफलैर्मार्गं विदन्ति जानन्ति । अत्र व्याधाः सिंहघातिनो गजेन्द्राश्च मुक्ताकरा इति भावः । "करीन्द्रजीमूतवराहशङ्खमत्स्याहि-शुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषान्तु शुक्त्यु-द्भवमेव भूरि" ॥ ६

६ । नखरन्ध्रमुक्तैरिति, मुक्ताफलैरित्यत्र तृतीया करणे । विचारः । कथं मल्लि-नाथेन पदमेतत् तृतीयासमासेन निष्पादितं, तत् कथं वा सङ्गच्छते ? पदमिद"मपेता-पोढमुक्तपतितापत्रस्तैरल्पशः" इति सूत्रस्य विषयीभूतं भवति । तुषारप्रोथितानां मुक्ता-नामूर्द्धभागानालोक्य मार्गं जानन्ति, न तु अधोभागानित्यर्थः । मुक्तानां सम्यक् प्रकाशत्वं नावगम्यते अतएव अल्पता—लाभस्य वाधःभावात् न कथं पञ्चमीसमासो युज्यते ? वस्तु-तस्तु साम्प्रतं तुषारादेव मुक्ताफलानि मुक्तानि नतु नखरन्ध्रेभ्यस्तत एवास्य सूत्रस्य विषयीभूतं न स्यादिति ।

न्यस्ताक्षरा धातुरसेन यत्र
भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।
व्रजन्ति विद्याधरसुन्दरीणा-
मनङ्गलेखक्रिययोपयोगम् ॥७

अन्वयः । यत्र धातुरसेन न्यस्ताक्षरा कुञ्जरस्य विन्दुशोणाः भूर्जत्वचः विद्याधरसुन्दरी-णाम् अनङ्गलेखक्रियया उपयोगं व्रजन्ति ॥ ७

न्यस्तेति । यत्र हिमाद्रौ धातुरसेण सिन्दूरादिद्रवेण । "शृङ्गा-रादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरः । न्यस्ताक्षराः लिखितवर्णाः अतएव कुञ्जरस्य ये बिन्दवः काये वयोविशेषभाविनः

पद्मकाख्याः । "पद्मकं विन्दुजालकम्" इत्यमरः । ते इव शोणाः रक्तवर्णाः, लिखितभागेषु इति शेषः । भूर्जपत्रवल्कलानि । 'भूर्जपत्रो भुजो भूर्जो मृदुत्वक् चर्मिका अपि' इति यादवः । विद्याधरसुन्दरीणाम्, लिख्यन्ते येषु ते लेखाः पत्रिकाः, अनङ्गस्य लेखाः तेषां क्रियया कामव्यञ्जकलेखकरणेन इत्यर्थः उपयोगं उपकारं व्रजन्ति । दिव्याङ्गनाविहारयोग्योऽयं शैल इति भावः ॥ ७

धातुरसेन, अनङ्गलेखक्रिययेत्युभयत्र तृतीया करणे ॥ ७

यः पूरयन् कीचकरन्ध्रभागान्
दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किन्नराणां
तानप्रदायित्वमिवोपगन्तुम् ॥८

अन्वयः । यः दरीमुखोत्थेन समीरणेन कीचकरन्ध्रभागान् पूरयन् उद्गास्यतां किन्नराणां तानप्रदायित्वम् उपगन्तुम् इच्छतीव ॥ ८

यइति । यः हिमाद्रिः दरी गुहा सैव मुखम् तस्मात् उत्थेन उत्पन्नेन "आतश्चोपसर्गे" ( ३, १, १३६ पा० ) इति कप्रत्ययः । समीरणेन वायुना कीचकाः वेणुविशेषाः 'वेणवः कीचकास्ते स्युर्ये । स्वनन्त्यनिलोद्धताः" इत्यमरः । तेषां रन्ध्रभागान् छिद्रप्रदेशान् पूरयन् धमयन् । 'वांशिकोऽपि वंशरन्ध्राणि मुखमारुतेन पूरयति' इति प्रसिद्धिः । उद्गास्यतां देवयोनित्वात् उच्चैर्गान्धारग्रामेण गानं करिष्यताम् । उक्तञ्च नारदेन—'षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः । न तु गान्धारनामानं स लभ्यो देवयोनिभिः' इति । किन्नराणां देवगायकानां तानप्रदायित्वम्, तानो नाम स्वरान्तरप्रवर्त्तको रागस्थितिप्रवृत्त्यादिहेतुरंशापरनामा वंशवाद्यसाध्यः प्रधानभूतः स्वरविशेषः । 'तानस्त्वंशस्वरो मतः' इत्यभिनवगुप्तः । "गाता यं यं स्वरं गच्छेत् तं तं वंशेन तानयेत्' इति भरतः" तत्प्रदानशीलत्वं तानप्रदायित्वं वांशिकत्वम् उपगन्तुम् इच्छतीव इत्युत्प्रेक्षा । सा च दरीमुखोत्थेन इत्येकदेशविवर्त्तिरूपकोज्जीविता, मुखसाध्यत्वात् तानप्रदायित्वस्य । यत्र अवयवरूपणादवयविरूपणं

गम्यते, तदेकदेशविवर्त्ति रूपकम् । गम्यते चात्र अवयविनः पुंसो रूपणं यच्छब्दनिर्दिष्टे हिमाद्राविति अलं बहुना ॥ ८

समीरणेन तृतीया करणे । एकदेशविवर्त्त्युत्प्रेक्षालङ्कारोऽत्र यथा—अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत् । समस्तवस्तुविषयमेकदेशविवर्त्ति च ॥ दर्पण ॥ ८

कपोलकण्डूः करिभिर्विनेतुं
विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः
सानूनि गन्धः सुरभीकरोति ॥९

अन्वयः । यत्र करिभिः कपोलकण्डूः विनेतुं विघट्टितानां सरलद्रुमाणां स्रुतक्षीरतया प्रसूतः गन्धः सानूनि सुरभीकरोति ॥ ९

कपोलेति । यत्र हिमाद्रौ करिभिः गजैः कपोलकण्डूः गण्डस्थलकण्डूः विनेतुम् अपनेतुं विघट्टितानां घर्षितानां सरलद्रुमाणां सम्बन्धिन्याः, स्रुतानि करिकपोलघर्षणात् क्षरितानि क्षीराणि येषां तेषां भावस्तत्ता, तया हेतुना प्रसूतः उत्पन्नः गन्धः सानूनि सुरभीकरोति । एतेन अस्य गजाकरत्वं गम्यते । तथा च गजायुर्वेदे—"हिमवद्विन्ध्यमलया गजानां प्रभवा नगाः" इति ॥ ९

करिभिरनुक्ते कर्त्तरि तृतीया । स्रुतक्षीरतया हेतौ तृतीया । विचारः । प्रसूत इत्यत्र मल्लिनाथेन सूधातुरुत्पन्नार्थो व्यवक्रियते तत् कथं स्यात् ? अकर्म्मकेभ्यः धातुभ्यः कर्त्तरि क्तः ; धातुरयं सकर्म्मकः, दिवादौ वर्त्तमानः । यथा—"कौशल्ययासावि सुखेन रामः प्राक् केकयीतो भरतस्ततोऽभूत् । प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन । वस्तुतः धातुरयं जननार्थेऽकर्म्मकः न तु प्राणिप्रसवार्थे ।

वनेचराणां वनितासखानां
दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्या-
मतैलपूराः सुरतप्रदीपाः ॥१०

अन्वयः । यत्र दरीगृहोत्सङ्गनिषक्तभासः ओषधयः वनितासखानां वनेचराणाम् अतैलपूराः सुरतप्रदीपाः भवन्ति ॥ १०

वनेचराणामिति । यत्र हिमाद्रौ, रजन्यां दर्य्यः कन्दरा एव गृहाः तेषाम् उत्सङ्गेषु अभ्यन्तरेषु निषक्ताः संक्रान्ताः भासः यासां ताः ओषधयः तृणज्योतींषि । 'अग्नावोषधिषु च तेजो निधाय रविरस्तं याति' इत्यागमः । वनितानां सखायः वनितासखाः "राजाहःसखिभ्यष्टच्" ( ५, ४ ९१ पा० ) । तेषां रममाणाना-मित्यर्थः । वने चरन्तीति वनेचराः किराताः । चरेष्टः (३, २, १६ पा० ) इति टप्रत्ययः । तत्पुरुषे कृति बहुलं (६, ३, १४ पा०) इत्यलुक् । तेषां वनेचराणाम् अतैलपूराः अनपेक्षिततैलसेकाः इत्यर्थः । सुरते सुरतकर्म्मणि प्रदीपाः भवन्ति । अत्र ओषधीषु आरोप्यमाणस्य प्रदीपत्वस्य प्रकृतसुरतापयोगित्वात् परिणामालङ्कारः । तदुक्तम्—"आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः" इति । तथा प्रदीपकारणतैलपूरणनिषेधादकारणकार्य्योत्पत्तिलक्षणा वभावना च इत्युभयोः संसृष्टिः ॥ १०

१० । विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि ।
परिणामो भवेत् तुल्या तुल्याधिकरणो द्विधा ॥
विभावना विना हेतुं कार्य्योत्पत्ति र्यदुच्यते
उक्तानुक्तनिमित्तत्वाद् द्विधा सा परिकीर्त्तिता ॥ दर्पणः ।

उद्वेजयत्यङ्गुलिपार्ष्णिभागान्
मार्गे शिलीभूतहिमेऽपि यत्र ।
न दुर्वहश्रोणिपयोधरार्त्ता
भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥ ११

अन्वयः । यत्र शिलीभूतहिमे मार्गे अङ्गुलिपार्ष्णिभागान् उद्वेजयति अपि दुर्व्वहश्रोणि-पयोधरार्त्ता अश्वमुख्यः मन्दां गतिं न भिन्दन्ति ॥ ११

उद्वेजयतीति । यत्र हिमाद्रौ, शिलीभूतं घनीभूतं हिमं यत्र तस्मिन्, अतएव अङ्गुलीनां पार्ष्णीणाञ्च भागान् प्रदेशान् उद्वेजयति अतिशैत्यात् क्लेशयत्यपि मार्गे । श्रोणयश्च पयोधराश्च श्रोणि-पयोधरम् । दुर्वहेण दुर्धरेण श्रोणिपयोधरेण आर्त्ताः पीड़िताः । आङ्पूर्वादृच्छतेः क्तः । "उपसर्गादृति धाताविऽ"ति ( ५, १, ९१ पा० ) वृद्धिः । अश्वानां मुखानीव मुखानि यासां ताः अश्वमुख्यः

किन्नरस्त्रियः। उष्ट्रमुखवत् समासः। 'स्यात् किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुः' इत्यमरः। मन्दां मन्थरां गतिं न भिन्दन्ति न त्यजन्तीत्यर्थः। पादपीड़ाकरेऽपि अतिभारभङ्गुरशरीरतया न शीघ्रं गन्तुं शक्यते इति भावः॥ ११

११। विचारः। श्रोणिपयोधरार्त्ताः, इत्यादौ मल्लिनाथेन, श्रोणयश्च पयोधराश्च तैन आर्त्ताः इति समस्यते प्रथमं समाहारद्वन्द्वः ततः तृतीयातत्पुरुषः। "द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम्"। ननु पयोधरा एव न जातु अङ्गानि भवन्ति, "अङ्गं प्रतीकोऽवयवोऽपघनः" इत्यमरः। तर्हि कथं समाहारद्वन्द्वोऽत्र विधीयते? इति चेन्न, समासस्य बाहुल्यात्; यथा="ग्रीवाकुञ्चिलताटेषु नित्यं खेदः प्रशस्यते।" "गण्डे चुम्बो ललाटाचि कचोरुभगमूर्द्धसु" इत्यादौ बाहुल्यात् न समाहारः द्वन्द्वः दृश्यते।

दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसां सतीव॥१२

अन्वयः। यः दिवाभीतमिव गुहासु लीनम् अन्धकारं दिवाकरात् रक्षति। उच्चैः शिरसां शरणं प्रपन्ने क्षुद्रेऽपि सति इव ममत्वं नूनम् (अस्ति)॥१२

दिवाकरादिति। यः हिमाद्रिः दिवा दिवसे भीतं भयाविष्टमिव। उलुकमिवेति च ध्वनिः। गुहासु लीनमन्धकारं ध्वान्तं दिवा दिनं करोतीति दिवाकरस्तस्मात् दिवाकरात्। "दिवाविभानिशाप्रभाभास्करे"त्यादिना (३, २. २१ पा०) टप्रत्ययः। "भीत्रार्थानां भयहेतुः" (१,४, २५ पा०) इत्यपादानत्वात् पञ्चमी। रक्षति त्रायते। ननु क्षुद्रसंरक्षणमनर्हमित्याशङ्क्याह—क्षुद्र इति। उच्चैःशिरसां उन्नतानां शरणं प्रपन्ने शरणागते क्षुद्रे नीचेऽपि सति सज्जने इव नूनं ममत्वं मम अयमित्यभिमानः अस्तीति शेषः। ममशब्दात् त्वप्रत्ययः। अर्थान्तरन्यासोऽलङ्कारः॥ १२

१२। विचारः। दिवाभीतं मल्लिनाथो दत्तवानस्य प्रतिशब्दं भयाविष्टं तेनातीरकालस्य प्रयोगोऽयं बुध्यते, तर्हि आरम्भे क्तः इत्यवधारितः। अव्ययोऽयं दिवाशब्दः यथा—दिवाह्नीत्यर्थ दोषा च नक्तञ्च रजनावित्यमरः। ननु अव्ययेन सह सुबन्तपदस्य यः समासः सोऽव्ययीभाव एव भवति तर्हि कथं पदमेतत् विशेषणं पुंलिङ्गस्येत्यर्थः। मल्लिनाथस्तु दिवसे

भयाविष्टमिति कृतवान्, तर्हि किमयं सप्तमीतत्पुरुषः ? शौण्डादि गणान्तर्गतोऽयं दिवा शब्दः न दृश्यते । वस्तुतः सुप्सुपेति लक्षणेन समासो विहितः, अन्यथास्य गतिर्नास्ति ॥ १२

लाङ्गूलविक्षेपविसर्पिशोभै
रितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं
कुर्वन्ति वालव्यजनैश्चमर्य्यः ॥१३

अन्वयः। चमर्य्यः इतस्ततः लाङ्गूलविक्षेपविसर्पिशोभैः चन्द्रमरीचिगौरैः वालव्यजनैः यस्य गिरिराजशब्दम् अर्थयुक्तं कुर्व्वन्ति ॥ १३

लाङ्गूलेति । चमर्य्यः मृगीविशेषाः इतस्ततः लाङ्गुलानि वालधयः । "पुच्छोऽस्त्री लोमलाङ्गूले वालहस्तश्च वालधिः" इत्यमरः। तेषां विक्षेपैः विधूननैः विसर्पिण्यः विसृमराः शोभाः कान्तयो येषां तैः चन्द्रमरीचिभिः इव गौरैः शुभ्रैः ।"गौरः करीषे सिद्धार्थे शुक्ले पीतेऽरुणेऽपि च" इति यादवः। "उपमानानि सामान्यवचनैः" (२, १, ५५ पा०) इति समासः, वालव्यजनैः चामरैः यस्य हिमाद्रेः गिरिराजशब्दं गिरिराज इति नाम अर्थयुक्तम् अभिधेयवन्तं कुर्व्वन्ति । राजानो हि छत्रचामरादिचिह्निता इति भावः ॥ १३

वालव्यजनैरित्यत्र तृतीया करणे । चमरीति मृगीविशेषा यथा—"गोकर्णपृषतैणर्श्य रोहितायमरा मृग" इत्यमरः। चमति तृणादिकं खादतीति चम् संज्ञायामरच् स्त्रियां ङीप् ॥ १३

यत्रांशुकाक्षेपविलज्जितानां
यदृच्छया किम्पुरुषाङ्गनानाम् ।
दरीगृहद्वारविलम्बिविम्बाः
तिरस्करिण्यो जलदा भवन्ति ॥१४

अन्वयः। यत्र अंशुकाक्षेपविलज्जितानां किम्पुरुषाङ्गनानां यदृच्छया दरीगृहद्वार-विलम्बिविम्बा जलदाः तिरस्करिण्यो भवन्ति ॥ १४

यत्रेति । यत्र हिमाद्रौ अंशुकाक्षेपेण वस्त्रापहरणेन विलज्जितानां किम्पुरुषाङ्गनानां किन्नरस्त्रीणां यदृच्छया दैवगत्या दरी-

दरीगृहद्वारेषु विलम्बिविम्बाः लम्बमानमण्डलाः जलदास्तिरस्करिण्यः जवनिकाः भवन्ति । "प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा" इत्यमरः । तिरसोऽन्यतरस्यामिति (८, ३, ४२ पा०) सत्वम् । अत्र जलदेषु आरोप्यमाणस्य तिरस्करिणीत्वस्य प्रकृतेपयोगित्वात् परिणामालङ्कारः ॥ १४

यदृच्छयेति या इच्छा निपातनात् कर्मधारयः । प्रकृत्यादिभ्यस्तृतीया । जलदेति जलदाः तिरस्कारिणी भवन्तीत्यत्र उद्देश्यविधेयान्वयः ॥ १४

भागीरथीनिर्झरशीकराणां
वोढ़ा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैःकिरातै-
रासेव्यते भिन्नशिखण्डिबर्हः ॥१५

अन्वयः । भागीरथीनिर्झरशीकराणां वोढ़ा, मुहुः कम्पितदेवदारुः भिन्नशिखण्डिबर्हः यद्वायुः अन्विष्टमृगैः किरातैः आसेव्यते ॥ १५

भागीरथीति । भागीरथीनिर्झरशीकराणां गङ्गाप्रवाहपाथःकणानाम् । कर्म्मणि षष्ठी । वोढ़ा प्रापकः । वहेस्तृच् । मुहुः पुनः पुनः, सद्यो वा । 'पौनःपुन्ये भृशार्थे च सद्यो वा स्यान्मुहुः पदम्' इति वैजयन्ती । कम्पिताः देवदारवः येन स तथोक्तः । भिन्नानि विश्लेषितानि शिखण्डिनाम् बर्हाणि गतिलाघवार्थं किरातकटिबद्धानि येन स तथोक्तः, क्रमाद्विशेषणत्रयेण शैत्यसौरभ्यमान्द्यान्युक्तानि । यस्य हिमाद्रेः वायुः अन्विष्टमृगैः मार्गितमृगैः, श्रान्तैः इति भावः । "अनिष्टं मार्गितं मृगितं" इत्यमरः । किरातैः आसेव्यते ॥ १५

भागीरथीति । भगीरथेन अवतारिता इत्यर्थे अण् ततः स्त्रियां ङीप् ॥ १६

सप्तर्षिहस्तावचितावशेषा-
ण्यधो विवस्वान् परिवर्त्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि
प्रबोधयत्यूर्द्ध्वमुखैर्मयूखैः ॥१६

अन्वयः । सप्तर्षिहस्तावचितावशेषाणि यस्य अग्रसरोरुहाणि पद्मानि अधःपरिवर्त्तमानः विवस्वान् ऊर्द्ध्वमुखैः मयुखैः प्रबोधयति ॥ १६

सप्तर्षीति । सप्त च ते ऋषयश्च सप्तर्षयः । "दिक्सङ्ख्ये संज्ञायाम् (२, १, ५०, पा०) इति समासः । तेषां हस्तैः अवचितेभ्यः लूनेभ्य अवशेषाणि अवशिष्टानि । "शेषोऽप्रधाने सन्तापे चिष्वन्यवोपयुज्यते" इति केशवः । कर्म्मणि घञ् प्रत्ययः, अनेन पद्मानां साफल्यं सूचितम् । यस्य हिमाद्रेः । रोहन्तीति रुहाणि । इगुपध-ज्ञा-प्री किरः कः (३, १, १३५ पा०) । इति कप्रत्ययः । अग्रे उपरि यानि सरांसि तेषु रुहाणि पद्मानि अधः परिवर्त्तमानः भ्रमन् विवस्वान् सूर्यः ऊर्द्धमुखैः मयूखैः प्रबोधयति विकासयति । न कदाचित् अधोमुखैः अतिमार्त्तण्डमण्डलत्वादग्र-भूमेरिति भावः । सप्तर्षिमण्डलं ध्रुवादपि ऊर्द्ध्वमिति ज्योतिषिकाः । अतः तेषामग्रसरोरुहभागित्वं युक्तम् ॥ १६

मयूखैरित्यत्र करणे तृतीया । १६

यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमञ्च ।
प्रजापतिः कल्पितयज्ञभागं
शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ १७

अन्वयः । यस्य यज्ञाङ्गयोनित्वं धरित्रीधरणक्षमं सारञ्च अवेक्ष्य प्रजापतिः स्वयमेव कल्पितयज्ञभागं शैलाधिपत्यम् अन्वतिष्ठत् ॥ १७

यज्ञाङ्गेति । यस्य हिमाद्रेः यज्ञाङ्गानां यज्ञसाधनानां सोमलतादीनां योनिः प्रभवः, तस्य भावः तत्वम् । "यज्ञाङ्गार्थं मया सृष्टो हिमवानचलेश्वरः" इति विष्णुपुराणात् । धरित्रीधरणक्षमं भूभारधरणयोग्यं, सारं बलञ्च । "सारो बले स्थिरांशे च" इत्यमरः । अवेक्ष्य ज्ञात्वा, प्रजापतिः स्वयमेव, कल्पितो यज्ञभागः यस्मिन् तत् तथोक्तम् । "सोमस्य राज्ञः कुरङ्ग इन्दोः शृङ्गी समुद्रस्य शिशुमारो हिमवतो हस्ती" इति श्रुतेरिति भावः । शैलानामाधिपत्यम् अधिपतित्वम् । "प्रत्यन्तपुरोहितादिभ्यो यक्" इति (५, १, १२८ पा०) यक्-प्रत्ययः । अन्वतिष्ठत् ददाति स्म इत्यर्थः ।

उक्तञ्च ब्रह्माण्डपुराणे,—"शैलानां हिमवन्तञ्च नदीनाञ्चैव सागरम् । गन्धर्वाणामधिपतिञ्चक्रे चित्ररथं विधिः" इति ॥१७

धरित्रीधरणक्षमञ्चेति सागर-तरङ्गाघातात् शिफाभिः धरणी परित्राण-सामर्थ्येन लोकपालत्वात्तदर्थं यज्ञभागमाप्नुमर्हः इति भावः । विचारः—अन्वतिष्ठत्, ददातिस्मेति प्रतिक्रिया मल्लिनाथेन विहिता, अनुपूर्व्वस्य स्थाधातो दानार्थे वर्त्तमानत्वात् न कथं सम्प्रदानं ? यथा गुरवे धनं निर्य्यातयतीतिवद् यतः निःपूर्व्वस्य यातेः दानार्थत्वात् सम्प्रदानमभूत् । धातूनामनेकार्थत्वादनुपूर्व्वस्य स्थाधातो दानार्थः प्रतिपाद्यते, सम्प्रदानन्तु विवक्षावशात् नाभूदिति । १७

स मानसीं मेरुसखः पितॄणां
कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीया-
मात्मानुरूपां विधिनोपयेमे ॥१८

अन्वयः । मेरुसखः स्थितिज्ञः सः पितॄणां मानसीं मुनीनामपि माननीयाम् आत्मानुरूपां मेनां कन्यां कुलस्य स्थितये विधिना उपयेमे ॥ १८

सम्प्रति कथां प्रस्तौति,—स मानसीमिति । मेरोः सखा मेरुसखः, बन्धुसम्पन्न इति भावः । स्थितिज्ञः मर्य्यादाभिज्ञः । अनेन श्रुतसम्पत्तिः सूच्यते । स हिमवान्, पितॄणां मानसीं मनःसङ्कल्पजन्यां मुनीनामपि माननीयां योगब्रह्मवादिभ्यां पूज्यामित्यर्थः । उक्तञ्च विष्णुपुराणे,—"तेभ्यः शुभास्पदं जज्ञे मेनका धारिणी तथा । ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विज !" इति । आत्मानुरूपां कुलशीलसौन्दर्य्यादिभिः सदृशीं मेनां मेनकादेवीति नामवतीं कन्यां कुलस्य स्थितये प्रतिष्ठायै, विधिना यथाशास्त्रेण उपयेमे परिणीतवान् । "उपाद्यमः स्वकरणे" ( १, ३, ५६ पा० ) इत्यात्मनेपदम् । "तेषान्तु मानसी कन्या मेना नाम महागिरेः । पत्नी हिमवतो यस्याः पुत्रो मैनाक उच्यते" इति ब्रह्माण्डपुराणात् ॥ १८

स्थितयेति चतुर्थी निमित्तार्थे, विधिना प्रकृतादित्वात् तृतीया । मनसः सङ्कल्पेन जाता, इत्यर्थे अण् स्त्रियां ङीप् । १८

कालक्रमेणाथ तयोः प्रवृत्ते
स्वरूपयोग्ये सुरतप्रसङ्गे ।

मनोरमं यौवनमुद्वहन्त्या
गर्भोऽभवद्भूधरराजपत्न्याः ॥१९

अन्वयः । अथ कालक्रमेण तयोः स्वरूपयोग्ये सुरतप्रसङ्गे प्रवृत्ते (सति) मनोरमं यौवनम् उद्वहन्त्या भूधरराजपत्न्याः गर्भः अभवत् ॥ १९

कालक्रमेणेति । अथ कालक्रमेण गच्छता कालेन इत्यर्थः । तयोः मेनकाहिमवतोः स्वरूपयोग्ये सौन्दर्य्यानुगुणे । यद्वा, रूप्यते निश्चीयते अनेनेति रूपं ज्ञानं, तद्योग्ये शास्त्रानुसारिणीत्यर्थः । सुरतप्रसङ्गे सुरतकर्म्मणि प्रवृत्ते सति मनोरमं यौवनमुद्वहन्त्या भूधर-राजपत्न्या मेनकाया गर्भोऽभवत् ॥ १९

१९। कालक्रमेणेति, कालक्रमेणेत्यत्र तृतीया हेतौ प्रकृत्यादिभ्यो वा। यौवनस्य मनोरमत्वात् सुरतप्रसङ्गे निरन्तरासक्तिरस्तीति भावः। राजपत्नीति कथनेन गर्भस्य महत्त्वं सूचितम्। यथा "आकरे पद्मरागाणां जन्म काचमणेः कुतः" इति।

असूत सा नागवधूपभोग्यं
मैनाकमम्भोनिधिबद्धसख्यम् ।
क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्रा-
ववेदनाज्ञं कुलिशक्षतानाम् ॥२०

अन्वयः । सा नागवधूपभोग्यम् अम्भोनिधिबद्धसख्यं पक्षच्छिदि वृत्रशत्रौ क्रुद्धे अपि कुलिशक्षतानाम् अवेदनाज्ञं मैनाकम् असूत ॥२०

असूतेति । सा मेना नागवधूपभोग्यं, नागकन्यापरिणेतार-मित्यर्थः । अम्भोनिधिना बद्धसख्यं समुद्रकृतमैत्रीकम् । सख्यमूलं सूचयति—पक्षच्छिदि पक्षच्छेत्तरि । "सत्सूद्विषे"त्यादिना ( ३, २, ६१ पा०) क्विप्प्रत्ययः । वृत्रशत्रौ क्रुद्धे कुपिते सत्यपि कुलिशक्षतानां वज्रप्रहाराणाम् । सम्बन्धसामान्ये षष्ठी जानातीति ज्ञः । "इगुप-धज्ञा" (३,१.१३५ पा०) इति कप्रत्ययः । वेदनानां ज्ञः । अथवा, वेदनां जानातीति वेदनाज्ञः । "आतोऽनुपसर्गे" कः (३,२,३, पा०) इति कप्रत्ययः । उपपदमतिङ् ( २, २, १९ पा० ) इति समासः । स न भवतीति अवेदनाज्ञः तं, कुलिशक्षतवेदनानभिज्ञमित्यर्थः । सापेक्षत्वेऽपि गमकत्वात् समासः । पक्षच्छेदोद्यतशक्रात् त्राणाय

शरणागमनमनयोः सख्यमूलमिति भावः। मैनाकं पुत्रमसूत। सर्वपर्व्वतपक्षच्छेदेऽपि अयमच्छिन्नपक्ष एवेति मैनाकस्योत्कर्षः। तादृक्पुत्रवत्वं हिमाद्रेः, इति सार्थकं मैनाकस्य वर्णनम्। "पिता न ज्ञायते यस्या भ्राता यदि न विद्यते। नोपयच्छेत्तु तां कन्यां धर्मलोपभयात् सुधीः" इति अभ्रातृककन्यापरिणयनिषेधात्, प्रकृते पार्वती भ्रातृमती एवेति सूचनार्थं मैनाकवर्णनमिति तात्पर्य्यार्थः॥ २०

पुरा किल भगवता इन्द्रेण पर्व्वतानां पक्षवायुना बहवो जीवाः समुरिति हेतोः लोकहिताय मैनाकं विना सर्व्वेषामद्रीनां पक्षाः चिच्छेदिरे इति पौराणिकी वार्त्तानुसन्धेया। २०

अथावमानेन पितुः प्रयुक्ता
दक्षस्य कन्या भवपूर्वपत्नी।
सती सती योगविसृष्टदेहा
तां जन्मने शैलवधूं प्रपेदे॥२१

अन्वयः। अथ दक्षस्य कन्या भवपूर्व्वपत्नी सती सती (देवी) पितुः अवमानेन प्रयुक्ता योगविसृष्टदेहा (सती) जन्मने तां शैलवधूं प्रपेदे॥ २१

अथेति। अथ मैनाकजननान्तरं दक्षस्य प्रजापतेः कन्या भवस्य महादेवस्य पूर्वपत्नी पूर्वभार्य्या सती पतिव्रता। "सती साध्वी पतिव्रता" इत्यमरः। सती नाम देवी। पितुः दक्षस्य। कर्त्तरि षष्ठी। अवमानेन स्वभर्त्तृवज्ञया प्रयुक्ता प्रेरिता योगमार्गेण विसृष्टदेहा त्यक्तदेहा सती जन्मने पुनरुद्भवाय तां शैलवधूं मेनकां प्रपेदे। अत्र पुरा किल सतीदेवी दक्षाध्वरे तत्कृतां स्वभर्त्तृवज्ञामसहमाना पितरं प्रसूतिश्च उपेक्ष्य मत्कर्त्तव्यकार्य्यं लज्जामातैव करिष्यतीति निर्द्धार्य्य देवकार्य्याणि साधयितुञ्च योगाग्निना स्वशरीरं ददाह इति पुरावृत्तकथा अनुसन्धेया॥ २१

अथावमानेनेति। अवमानेन अनुक्ते कर्त्तरि तृतीया, जन्मने चतुर्थी निमित्तार्थे। प्रपेदे—प्राप। २१

सा भूधराणामधिपेन तस्यां
समाधिमत्यामुदपादि भव्या।

सम्यक्प्रयोगादपरिक्षतायां
नीताविवोत्साहगुणेन सम्पत् ॥२२

अन्वयः । भव्या सा भूधराणाम् अधिपेन समाधिमत्यां सम्यक्प्रयोगात् अपरिक्षतायां नीतौ उत्साहगुणेन सम्पदिव उदपादि ॥ २२

मेति । भव्या कल्याणी भूधराणामधिपेन हिमवता समाधिमत्यां नियमवत्यां तस्यां मेनकायां सम्यक्प्रयोगात् साध्वाचरणाद्धेतोः अपरिक्षतायाम् अभ्रष्टायां नीतौ उत्साहशक्त्या कर्त्री सम्पदिव उदपादि उत्पादिता । उत्पद्यतेर्ण्यन्तात् कर्मणि लुङ् । "चिण् भावकर्मणोः" (३, १, ६६,पा०) इति चिणप्रत्ययः । चिणो लुक् ( ६, ४, १०४, पा० ) इति तस्य लुक् ॥२२

हिमालयस्य भूधराणामधिपत्वेन भार्य्या-संरक्षणसमर्थत्वात् तस्या समाधिमतीत्वं युक्तमिति अधिपेन उत्साहगुणेन च तृतीया अनुक्ते कर्त्तरि । सम्यक्प्रयोगात् इतौ पञ्चमी ॥ २२

प्रसन्नदिक् पांशुविविक्तवातं
शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजङ्गमानां
सुखाय तज्जन्मदिनं बभूव ॥२३

अन्वयः । प्रसन्नदिक्, पांशुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टि तज्जन्मदिनं स्थावरजङ्गमानां शरीरिणां सुखाय बभूव ॥ २३

प्रसन्नेति । प्रसन्ना निर्मला दिशो यस्मिन् तत् प्रसन्नदिक्, पांशुविविक्ताः रजोरहिताः वाता यस्मिन् तत् तथोक्तम् । शङ्खस्य स्वनात् स्वनस्य वा अनन्तरं पुष्पवृष्टिः यस्मिन् तत् तथोक्तम्, तस्याः पार्वत्या जन्मदिनम्, स्थितिशीलाः स्थावराः शैलवृक्षादयः । "स्थेशभासपिसकसो वरच्" ( ३,२,१७५ पा० ) इति वरच्प्रत्ययः । जङ्गम्यन्ते भृशं गच्छन्तीति जङ्गमाः देवतिर्य्यङ्मनुष्यादयः, स्थावराश्च जङ्गमाश्च तेषां द्वयानामपि शरीरिणां सुखाय आनन्दाय बभूव ॥२३

सुखाय चतुर्थी निमित्तार्थे । यस्या इच्छया ईदृगपरं जगत् सम्भवेत्, तस्याः प्रकृतेरीदृशी दशा युक्ता । अन्यथा महात्मनां महिम्नः कथं लोका जानन्तीति भावः । २३

तया दुहित्रा सुतरां सवित्री
स्फुरत्प्रभामण्डलया चकाशे।
विदूरभूमिर्नवमेघशब्दा-
दुद्भिन्नया रत्नशलाकयेव ॥२४

अन्वयः। सवित्री स्फुरत्प्रभामण्डलया तया दुहित्रा विदूरभूमिः नवमेघशब्दात् (अनन्तरं) उद्भिन्नया रत्नशलाकयेव सुतरां चकाशे ॥ २४

तयेति। स्फुरत्प्रभामण्डलया तया दुहित्रा सवित्री जनयित्री। "स्वरतिसूयतिसूतिधूञूदितो वा" (८, २, ४४ पा०) इति इडागमः। विदूरस्य अद्रेः प्रान्तभूमिः विदूरभूमिः। "अविदूरे विदूरस्य गिरेरुत्तुङ्गरोधसः। काकतालीयसीमान्ते मणीनामाकरो भवेत्" इति वृद्धः। नवमेघशब्दादुद्भिन्नया रत्नशलाकया रत्नाङ्कुरेण इव सुतरां चकाशे रराज ॥ २४

दुहित्रा रत्नशलाकया च तृतीया हेतौ करणे वा। नवमेघशब्दादित्यत्र पञ्चमी हेत्वर्थे। उपमानोपमेययोः साधारणधर्मत्वादत्र पूर्णोपमालङ्कारः यथा—सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च। उपमेयं चोपमानं भवेद्वाच्यमियं पुनः ॥ २४

दिने दिने सा परिवर्द्धमाना
लब्धोदया चान्द्रमसीव लेखा।
पुपोष लावण्यमयान् विशेषान्
ज्योत्स्नान्तराणीव कलान्तराणि ॥२५

अन्वयः। लब्धोदया दिने दिने परिवर्द्धमाना सा चान्द्रमसी लेखेव लावण्यमयान् विशेषान् ज्योत्स्नान्तराणि कलान्तराणीव पुपोष ॥ २५

दिने दिने इति। लब्ध उदयो यया सा लब्धोदया उत्पन्नेत्यर्थः। अभ्युदितेत्यन्यत्र। दिने दिने प्रतिदिनम्। "नित्यवीप्सयोः" (८, १, ४ पा०) इति वीप्सायां द्विरुक्तिः। परिवर्द्धमाना, उभयत्र समानमेतत्। सा बाला चन्द्रमस इयं चान्द्रमसी लेखेव लावण्यमयान् कान्तिविशेषप्रचुरान्। "मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इति

भूपाल: । विशेषान् अवयवान् । "विशेषोऽवयवे व्यक्तौ" इत्युत्पलमाला । ज्योत्स्नायाम् अन्तरमन्तर्द्धानं येषां तानि ज्योत्स्नान्तराणि ज्योत्स्नया अन्तर्हितानि, तन्मयानीति यावत् । अन्याः कलाः कलान्तराणीव । सुप्सुपेति समासः । "स्थानात्मीयान्यतादर्थ्यरन्ध्रान्तर्धिषु चान्तरम्" इति शाश्वतः । पुपोष उपचितवती । इयं वाक्योपमा इत्याह दण्डी । तल्लक्षणन्तु,—"वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते । एकानेकेवशब्दत्वात् सा तु वाक्योपमा द्विधा" ॥ २५

अत्रोपमानोपमेययोः तद्धितसमासानुगतत्वात् पूर्णोपमालक्षणाक्रान्तवाक्योपमालङ्कारः । यथा—ते तद्धिते समासेऽथ वाक्ये पूर्णा यथैव तदिति दर्पणः । २५

तां पार्वतीत्याभिजनेन नाम्ना
बन्धुप्रियां बन्धुजनो जुहाव ।
उमेति मात्रा तपसो निषिद्धा
पश्चादुमाख्यां सुमुखी जगाम ॥२६

अन्वयः । बन्धुजनः बन्धुप्रियां ताम् अभिजनेन नाम्ना पार्वतीति जुहाव । पश्चात् मात्रा उमेति तपसो निषिद्धा सुमुखी ( सा ) उमाख्यां जगाम ॥ २६

तामिति । बन्धुप्रियां तां बालां बन्धुजनः पित्रादिः । अभिजनादागतेन आभिजनेन पित्रादिपूर्वसम्बन्धोपाधिकेन इत्यर्थः । "अभिजनाः पूर्वबान्धवाः" इति काशिका । नाम्ना । पर्वतस्यापत्यं स्त्री पार्वती । "तस्यापत्यं" ( ४, १, ९२ पा० ) इत्यण्प्रत्ययः । इति जुहाव आहूतवान् । ह्वयतेर्लिटि रूपम् । पर्वतजन्यत्वोपाधिना पार्वतीति नाम्ना प्रसिद्धिरिति भावः । पश्चात् अभिजननामप्रवृत्त्यनन्तरं मात्रा जनन्या, उ इति सम्बोधने । "उ इति वितर्कसम्बोधनपादपूरणेषु" इति गणव्याख्याने । माशब्दो निषेधे । उ हे वत्से ! मा मा कुरु इत्येवंरूपेण तपसः तपश्चर्यायाः "वारणार्थानामीप्सितः" (१, ४, २७ पा०) इति अपादानत्वात् पञ्चमी । निषिद्धा निवारिता सती सुमुखी सा बाला उमा इति आख्यां नामधेयम् उमाख्यां जगाम ॥ २६

नाम्ना प्रकृत्यादित्वात् तृतीया, मात्रा अनुक्ते कर्त्तरि तृतीया । तपसः पञ्चमी अपादाने । २६

महीभृतः पुत्रवतोऽपि दृष्टि-
स्तस्मिन्नपत्ये न जगाम तृप्तिम्।
अनन्तपुष्पस्य मधोर्हि चूते
द्विरेफमाला सविशेषसङ्गा ॥२७

अन्वयः। पुत्रवतोऽपि महीभृतः दृष्टिः तस्मिन् अपत्ये तृप्तिं न जगाम, तथाहि अनन्त-पुष्पस्यापि मधोर्द्विरेफमाला सविशेषसङ्गा ॥ २७

महीभृत इति। पुत्राश्च दुहितरश्च पुत्राः। "भ्रातृपुत्रौ स्वसृदुहितृभ्यां" (१, २, ६८ पा०) इत्येकशेषः। ते अस्य सन्तीति पुत्रवान्। भूमार्थे मतुप्। तस्य पुत्रवतोऽपि बह्वपत्यस्य अपीत्यर्थः। महीभृतः हिमाद्रेः दृष्टिः चक्षुः तस्मिन्नपत्ये तोके "अपत्यं तोकं तयोः समे" इत्यमरः। तस्यां पार्वत्यामित्यर्थः। तृप्तिं न जगाम। तथाहि—अनन्तपुष्पस्य नानाविधकुसुमस्य अपि मधोः वसन्तस्य सम्बन्धिनी द्विरेफमाला भृङ्गपङ्क्तिः चूतस्य विकारे चूते चूतकुसुमे, "अवयवे च प्राण्योषधिवृक्षेभ्यः" (४, ३, १३५ पा०) इति विकारार्थोत्पन्नस्याण्प्रत्ययस्य लुप्प्रकरणे "पुष्पमूलेषु बहुलं" (४, ३, १६६ पा० सू० वा०) इति पठनाल्लुक्। सविशेषः सातिशयः सङ्गः यस्याः सा तथोक्ता अत्यन्तासक्तेत्यर्थः ॥ २७

न पतति वंशोऽस्मादित्यपत्यम्। न पत्+यत्। जगाम प्राप। सर्व्वे गत्यर्थाः प्राप्त्यर्था इति। हिमवतो द्विरेफमालायाः च प्रेमास्पदीभूतानां पुत्राणां कुसुमानाञ्च वस्तूनां साधर्म्यं प्रतिबिम्बनात् दृष्टान्तालङ्कारोऽत्र युज्यते यथा—दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति। दर्पणः। २७

प्रभामहत्या शिखयेव दीप-
स्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी
तया स पूतश्च विभूषितश्च ॥२८

अन्वयः। प्रभामहत्या शिखया दीप इव त्रिमार्गया त्रिदिवस्य मार्ग इव संस्कारवत्या गिरा मनीषी इव तया स पूतश्च विभूषितश्च (बभूव) ॥ २८

प्रभेति । प्रभामहत्या प्रकाशाधिकया शिखया ज्वालया दीप इव । शिखादीपयोः अवयवावयविभावाद्भेदेन व्यपदेशः । त्रयो मार्गा यस्यास्तया त्रिमार्गया मन्दाकिन्या, तृतीया द्यौर्लोक इति त्रिदिवः स्वर्गः । वृत्तिविषये त्रिशब्दस्य त्रिभागवत्पूरणार्थत्वम् । पृषोदरादित्वात् दिवशब्दादकारागमः । पुंस्त्वं लोकात् । दीव्यतेघञर्थे क-विधानम् । दीव्यन्त्यत्र जना इति दिव इति चीरस्वामी । तस्य मार्ग इव । संस्कारः व्याकरणजन्या शुद्धिः तद्वत्या गिरा वाचा "भद्रैषां लक्ष्मीर्निहिताधिवाचि" इति श्रुतेरिति भावः । मनस ईषा मनीषा सास्यास्तीति मनीषी विद्वान् इव । शकन्ध्वादित्वात् ( ६, १, ९४; वा० साधुः । तया पार्वत्या सः हिमवान् पूतः शोधितस्य विभूषितश्च । अत्र शिखागिरोरविशिष्टयोः उपमानानर्हत्वात् न विशेषणाधिक्यदोषः । इयं मालोपमा ॥ २८

शिखया, त्रिमार्गया, गिरा च तृतीया, अनुक्ते कर्त्तरि करणे वा । प्रभामहत्येत्यत्र महत्-शब्दस्य विशेषण-वाचित्वात् तृतीयातत्पुरुष एव सङ्गच्छते । "कर्त्तव्यो महदाश्रयः"—इत्यादौ केऽपि महत्शब्दस्य विशेष्यवाचित्वं तर्कयन्ति तन्न साधु । एकस्योपमेयस्य बहूपमानत्वान्मालोपमालङ्कारो एव युज्यते यथा—मालोपमा यदेकस्योपमानं बहु दृश्यते । दर्पणः । २८

मन्दाकिनीसैकतवेदिकाभिः
सा कन्दुकैः कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां
क्रीड़ारसं निर्विशतीव बाल्ये ॥२९

अन्वयः । सा बाल्ये क्रीड़ारसं निर्विशतीव सखीनां मध्यगता मन्दाकिनीसैकतवेदिकाभिः, कन्दुकैः कृत्रिमपुत्रकैश्च मुहुः रेमे ॥ २९

मन्दाकिनीति । सा पार्वती बाल्ये वयसि क्रीड़ानां रसः स्वादः रुचिरिति यावत्, तं क्रीड़ारसम् । "रसो गन्धे रसः स्वादे" । इति विश्वः । निर्विशतीव । "निर्वेशो भृतिभोगयोः" इति विश्वः । आच्छीनद्योर्नुम् ( ७, २, ८० ) इति विकल्पात् नुमभावः । सखीनां मध्यगता सती मन्दाकिन्या सैकतेषु पुलिनेषु वेदिकाभिः कन्दुकैः, क्रियया निवृत्तैः कृत्रिमैः, "ड्वितः क्त्रिः" (३, ३, ८८ पा०)

इति क्तिप्रत्ययः । "ह्रस्य प् नित्यं" ( ४, ४, २० पा० ) इति मवा-गमश्च । पुत्रकैः पाञ्चालिकाभिः । "पाञ्चालिका पुत्रिका स्याद्वस्त्र-दन्तादिभिः कृता" इत्यमरः । "सञ्ज्ञायां कन्" ( ५, ३, ८७ पा० ) इति कन् प्रत्ययः । मुहुः पुनः पुनः रेमे ॥ २९

वेदिकाभिः तृतीया करणे । कन्दुकैः गुलिकाभिरित्यत्र तृतीया करणे । कृत्रिमपुत्रकैः पुत्तलिकाभिरित्यत्र करणे तृतीया । सखीनामित्यत्र सम्बन्धसामान्ये षष्ठी । निर्द्धारोऽत्र न प्रभवति जातिगुणक्रियाभिः पार्व्वती न निर्द्धारिता । अलङ्कारोऽत्र जात्युत्प्रेक्षा यथा—"वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता । वाच्ये वादिप्रयोगेस्यादिति-दर्पणः । २९

तां हंसमालाः शरदीव गङ्गां
महौषधिं नक्तमिवात्मभासः ।
स्थिरोपदेशामुपदेशकाले
प्रपेदिरे प्राक्तनजन्मविद्याः ॥३०

अन्वयः । स्थिरोपदेशां ताम् उपदेशकाले प्राक्तनजन्मविद्याः शरदि गङ्गां हंसमाला इव नक्तं महौषधिम् इव प्रपेदिरे ॥ ३०

तामिति । स्थिरः स्थेयान् उपदेशः प्राग्भवीयो यस्याः तादृशीं, मेधाविनीमित्यर्थः । तां पार्व्वतीम् उपदेशकाले प्राक्तनजन्मविद्याः पूर्वजन्माभ्यस्तविद्या इत्यर्थः । शरदि गङ्गां हंसमाला इव नक्तम् रात्रौ महौषधिं तृणविशेषम् आत्मभासः स्वदीप्तय इव प्रपेदिरे । उपमानसामर्थ्यात् उपदेशमन्तरेण एवेति गम्यते ॥ ३०

शरदि गङ्गायाः निर्मलवारिणि प्रवमाना हंसानां प्रतिबिम्बनसम्भावनत्वात् तस्या बुद्धेः शास्त्रोपदेशधारणचमत्वं सूचितम्, औषधिभासानां रात्रावौज्ज्वल्येन तस्याः शास्त्रो-पदेशस्य साफल्यमिति । ३०

असम्भृतं मण्डनमङ्गयष्टे-
रनासवाख्यं करणम् मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं
बाल्यात् परं साथ वयः प्रपेदे ॥३१

अन्वयः । अथ सा अङ्गयष्टेः असंभृतं मण्डनम् अनासवाख्यं मदस्य करणम्, कामस्य पुष्पव्यतिरिक्तम् अस्त्रम्, बाल्यात् परं वयः प्रपेदे ॥ ३१

असम्भृतमिति । अथ सा पार्व्वती अङ्गयष्टेः असम्भृतं अयत्नसिद्धं मण्डनं प्रसाधनम् अनासवाख्यम् आसवाख्यारहितं मदस्य करणं कामस्य पुष्पव्यतिरिक्तमस्त्रम् अस्त्रभूतं बाल्यात् शैशवात् परम् अनन्तरभावि वयः यौवनं प्रपेदे प्राप । यौवनेनैव हि युवतयः प्रसाध्यन्ते चेति भावः । अत्र द्वितीयपादे आसवरूपकारणाभावेऽपि तत्कार्य्यमदोक्तेर्विभावनालङ्कारः । तदुक्तं—"कारणाभावे कार्य्योत्पत्तिर्विभावना" इति । प्रथमतृतीययोस्तु आरोप्यमाणयोः मण्डनमदनास्त्रत्वयोः प्रकृतोपयोगात् परिणामालङ्कारः । तल्लक्षणन्तु ( ११ श्लोकव्याख्याने ) उक्तम् ॥ ३१

पुष्पव्यतिरिक्तम् पुष्पेभ्यः व्यतिरिक्तः पञ्चमीतत्पुरुषः । बाल्याद् अनन्तरार्थे पञ्चमी । "विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते ।" दर्पणः । अन्यत् पदव्याख्याने उक्तमितः पूर्व्वमिति । ३१

उन्मीलितं तूलिकयेव चित्रं
सूर्य्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि
वपुर्विभक्तं नवयौवनेन ॥ ३२

अन्वयः । नवयौवनेन विभक्तं तस्या वपुः तूलिकया उन्मीलितं चित्रमिव, सूर्य्यांशुभिः भिन्नम् अरविन्दमिव चतुरस्रशोभि बभूव ॥ ३२

उन्मीलितमिति । नवयौवनेन प्रथमयौवनेन विभक्तम् अभिव्यञ्जितं, पीनजघनादिसंस्थानमित्यर्थः । तस्याः पार्वत्याः वपुः तूलिकया कूर्चिकया, शलाकया इत्यर्थः । "तूलिका कथिता लेख्यकूर्चिका तूलशय्ययोः" इति विश्वः । उन्मीलितं रञ्जनद्रव्येणोल्लासितं समुत्कीर्णं रूपमिति यावत्, चित्रम् आलेख्यम् इव सूर्य्यांशुभिः भिन्नं विकसितम् अरविन्दं पद्मम् इव । चतस्रः अस्रयो यस्य तच्चतुरस्रम् अन्यूनातिरिक्तं यथा तथा शोभत इति चतुरस्रशोभि । ताच्छील्ये णिनिः । बभूव । चित्रारविन्दयोस्तूलिकातरणिकिरणसम्बन्ध इव स्वतःसिद्धस्य एव अङ्गसौष्ठवस्य यौवनप्रादुर्भावः अभिव्यञ्जको बभूव इत्यर्थः ॥ ३२

तुलिकया, "अंशुभिः यौवनेनेत्यत्र तृतीया अनुक्ते कर्त्तरि । मालोपमालङ्कारोऽत्र स्फुट एव, तल्लक्षणन्तु पूर्व्वमुक्तमिति । ३२

अभ्युन्नताङ्गुष्ठनखप्रभाभिः
निक्षेपणाद्रागमिवोद्गिरन्तौ ।
आजह्रतुस्तच्चरणौ पृथिव्यां
स्थलारविन्दश्रियमव्यवस्थाम् ॥ ३३

अन्वयः । अभ्युन्नताङ्गुष्ठनखप्रभाभिः निक्षेपणात् रागम् उद्गिरन्तौ इव स्थितौ तच्चरणौ पृथिव्याम् अव्यवस्थां स्थलारविन्दश्रियम् आजह्रतुः ॥ ३३

देवतानां रूपं पादाङ्गुष्ठप्रभृति वर्ण्यते, मानुषाणां केशादारभ्येति धार्मिकाः । सम्प्रति सप्तदशभिः श्लोकैः पार्वत्याः पादादिकेशान्तवर्णनमारभते,—अभ्युन्नतेति । अभ्युन्नतयोः अङ्गुष्ठनखयोः प्रभाभिः निमित्तेन निक्षेपणात् निर्भरन्यासाद्धेतोः रागम् अन्तर्गतं लौहित्यम् । "रागः क्लेशादिके रक्ते मात्सर्य्ये लोहितादिषु" इति शाश्वतः । उद्गिरन्तौ वमन्तौ वहिर्निःसारयन्तौ इव स्थितौ इत्यर्थः । अत्रोद्गिरतेः गौणार्थत्वात् न ग्राम्यतादोषः प्रत्युत गुण एव । यथाह दण्डी,—"निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्ति व्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते" इति । तस्याः चरणौ तच्चरणौ पृथिव्यामव्यवस्थाम् व्यवस्थारहितां सञ्चारिणीमित्यर्थः । स्थलारविन्दश्रियम् आजह्रतुः । स्थलविशेषणात् नियतलौहित्यलाभः । अत्र सामुद्रिकाः,—"यस्या रक्ततलौ पादावुन्नताग्रौ तलस्पृशौ । निगूढगुल्फौ निहतौ सा स्यान्नृपतिसम्मता" इति । अत्र उपमानधर्म्मस्य अरविन्दश्रियः चरणयोः उपमेययोः असम्भवात् अरविन्दश्रियमिति प्रतिबिम्बीकरणाक्षेपात् निदर्शनालङ्कारः । सा च सम्बन्धेऽसम्बन्धलक्षणातिशयोक्त्यनुप्राणिता, अव्यवस्थामित्यनेन स्थलारविन्दस्य स्थैर्य्यसम्बन्धेऽपि असम्बन्धाभिधानात् । निदर्शनालक्षणन्तु —"असम्भवद्धर्म्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना" इति ॥ ३३

सम्भवन् वस्तु सम्बन्धोऽसम्भवन् वापि कुत्रचित्
यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना । दर्पणः ।

नखप्रभाभि हेतौ तृतीया । निक्षेपणात् हेतौ पञ्चमी । ३३

सा राजहंसैरिव सन्नताङ्गी
गतेषु लीलाञ्चितविक्रमेषु ।
व्यनीयत प्रत्युपदेशलुब्धै-
रादित्सुभिर्नूपुरशिञ्जितानि ॥ ३४

अन्वयः । प्रत्युपदेशलुब्धैः नूपुरशिञ्जितानि आदित्सुभिः राजहंसैः सन्नताङ्गी सा लीलाञ्चितविक्रमेषु गतेषु व्यनीयत इव ॥ ३४

सेति । प्रत्युपदेशलुब्धैः । "गुरुशुश्रुषया विद्या पुष्कलेन धनेन वा । अथ वा विद्यया विद्या, चतुर्थी नोपपद्यते" इति न्यायादिति भावः । तदेव व्यनक्ति,—नूपुरशिञ्जितानि आदित्सुभिः आदातुमिच्छुभिः, मञ्जीरशिञ्जितमञ्जुकूजितोपदेशमिच्छद्भिरित्यर्थः । राजहंसैः सन्नताङ्गी कुचभारादिति भावः । सा पार्वती लीलाभिः विलासैः अञ्चिताः पूजिताः विक्रमाः पादन्यासा येषु तेषु । अञ्चेः पूजायाम् ( ७, २. ५३, पा० ) इतीडागमः । "लीला विलासक्रिययोः" इत्यमरः । गतेषु व्यनीयत इव विनीता किमु ? अन्यथा कथमस्या हंसगमनमित्युत्प्रेक्षा ॥ ३४

सम् सम्यक् नतं अवनतं कुचभारादिति अङ्गं शरीरस्य पूर्व्वाङ्गं यस्या इति सन्नताङ्गी "अङ्गगात्रकण्ठेभ्यः" ङीप् । प्रत्युपदेशे लुब्धास्तैः सप्तमी तत्पुरुषः सुप्सुपा वा । आदित्सुभिः आ + दा + सन् + उः ततः तृतीयाबहुवचनेन पदमेतत्सिद्धम् । राजहंसैरित्यत्र तृतीया अनुक्ते कर्त्तरि । विपूर्व्वस्य नीधातोर्दानार्थत्वाभावान्न सम्प्रदानत्वं विनिमयत्वेन शिक्षार्थस्याप्रतिपादकत्वान्न चापादानम् । ३४

वृत्तानुपूर्वे च न चातिदीर्घे
जङ्घे शुभे सृष्टवतस्तदीये ।
शेषाङ्गनिर्माणविधौ विधातु-
र्लावण्य उत्पाद्य इवास यत्नः ॥ ३५

अन्वयः । वृत्तानुपूर्व्वे नातिदीर्घे च शुभे तदीये जङ्घे सृष्टवतः विधातुः शेषाङ्गनिर्म्माणविधौ उत्पाद्ये लावण्ये यत्नः आसेव ॥ ३५

वृत्तेति । वृत्ते वर्तुले, पूर्वमनुगते अनुपूर्वे, गोपुच्छाकारे इत्यर्थः । वृत्ते च ते अनुपूर्वे च वृत्तानुपूर्वे नातिदीर्घे च । अत्रा-

विभाषया न समासः। नञ्चो विशेषणत्वञ्च शब्दप्रयोगादेव ज्ञेयम्। शुभे मङ्गले, तस्या इमे तदीये जङ्घे प्रसृते। "जङ्घा तु प्रसृता" इत्यमरः। सृष्टवतः निर्मितवतः विधातुः स्रष्टुः शेषाङ्गनिर्म्माण-विधौ, जङ्घाव्यतिरिक्तावयवनिर्माणार्थमित्यर्थः। उत्पाद्ये पुनःसम्पाद्ये लावण्ये कान्तिविशेषविषये। लावण्यलक्षणन्तु—उक्तम्। यत्नः आसेव बभूव इवेति उत्प्रेक्षा। उपादानमन्तरेण कार्य्यस्य दुष्करत्वात् तदङ्गानाञ्च लावण्योपादानकत्वात् पूर्व्वसम्पादितस्य च जङ्घार्थमेव कार्त्स्न्येन विनियोगात् पुनर्लावण्यसम्पादने यत्नः स्यादेव इति एतादृक्सौन्दर्य्ये तज्जङ्घे इति भावः। आसेति बभूवार्थे। "तिङन्तप्रतिरूपकमव्ययम्" इत्याह शाकटायनः। वल्लभस्तु—"न तिङन्तप्रतिरूपकमव्ययम्," "अस्तेर्भुरि"ति (२, ४, ५२ पा०) भ्वादेशनियमात् तादृक्तिङन्तस्यैवाभावात्, किन्तु कवीनामयं प्रामादिकः प्रयोगः" इत्याह। वामनस्तु—"असगतिदीप्त्यादानेषु इति धातोर्लिटि रूपमिदम्" इत्याह। असु इत्यनुदात्तेत् दीप्त्यर्थे, आस दिदीपे प्रवृत्त इत्यर्थः ॥२५

प्रथमश्चकारः पादपूरणार्थः। द्वितीयस्तु पूर्वार्थद्योतकः समुच्चयार्थः। शेषाङ्गनिर्म्माणविधौ शेषाणि अङ्गानि कर्म्मधारयः तेषां निर्माणं षष्ठीतत्पुरुषः तस्य विधिः तस्मिन्। उत्+पद+णिच्+यत् कर्म्मणि। २५

नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
देकान्तशैत्यात् कदलीविशेषाः।
लब्ध्वापि लोके परिणाहि रूपं
जातास्तदूर्व्वोरुपमानबाह्याः ॥ ३६

अन्वयः। नागेन्द्रहस्ताः त्वचि कर्कशत्वात् कदलीविशेषाः एकान्तशैत्यात् लोके परिणाहि रूपं लब्ध्वा अपि तदूर्व्वोः उपमानबाह्याः जाताः ॥ ३६

नागेन्द्रेति। नागेन्द्राणाम् ऐरावतादीनां हस्ताः कराः त्वचि चर्म्मणि कर्कशत्वात् कदलीविशेषाः रामरम्भादयः एकान्तशैत्यात् नियतशैत्याद्धेतोः लोके परिणाहि वैपुल्ययुक्तम्। "परिणाहो विशालता" इत्यमरः। रूपं लब्ध्वापि। अपिशब्दात् करिकदलीस्तम्भस्य तादृक्परिणाहो नास्तीति भावः। तस्या ऊर्व्वोः तदूर्व्वोः

उपमानवाह्या जाता: उपमानक्रियानार्हा बभूवु: । तदूर्वोर्न कार्कश्यं, नापि एकान्तशैत्यमिति भाव: ॥ ३६

कर्कशत्वात् । हेतौ पञ्चमी । एकान्तं शैत्य तस्मात् हेतौ पञ्चमी । कदलीनां विशेषाः षष्ठी तत्पुरुष: । उपमानेन बाह्या: वहिस् + ष्यः । अत्रोपमेयस्योपमानादाधिक्ये हेतौरूपमानगतनिकर्षकारणत्वाद्व्यतिरेकालङ्कार: । तल्लक्षणन्तु यथा—आधिक्यमुपमेयस्योपमानान्न्यूनताथवा, व्यतिरेक एक उक्ते हेतौ नोक्ते स च विधा ॥३६

एतावता नन्वनुमेयशोभि
काञ्चीगुणस्थानमनिन्दितायाः ।
आरोपितं यद्गिरिशेन पश्चा-
दनन्यनारीकमनीयमङ्कम् ॥ ३७

अन्वय: । पश्चात् गिरिशेन ( तत् ) अनन्यनारीकमनीयम् अङ्कम् आरोपितम् इति यत् एतावता ननु अनिन्दितायाः काञ्चीगुणस्थानम् अनुमेयशोभि ॥ ३७

एतावतेति । अनिन्दितायाः अनवद्यायाः पार्वत्याः काञ्चीगुणस्थानं नितम्बविम्बम् एतावता ननु एतावतैव । "प्रश्नावधारणेऽनुज्ञाविनयामन्त्रणे ननु" इत्यमर: । शोभते इति शोभि, आवश्यके णिनि:, ततस्त्वप्रत्यय: । अनुमेयं शोभित्वं शोभा यस्य तत् अनुमेयशोभि । "त्वप्रत्ययस्तु गतार्थत्वात् न प्रयुक्त:" इत्याह वामन: । पश्चात् आदौ नैःस्वर्थ्येऽपि पश्चात् तपश्चर्य्यानन्तरमित्यर्थ: । गिरौ शेते इति गिरिश: शिव: । गिरौ डश्छन्दसीति ( ३, २, १५, पा० ) डप्रत्यय: । भाषायामपि क्वचिदिष्यते । अथवा, गिरि: कैलासोऽस्यास्ति गिरिश: । लोमादित्वात् ( ५, २, १०० पा० ) श प्रत्यय: । तेन गिरिशेन । अन्यासां नारीणां कमनीय: कमयितुं शक्यो न भवतीति । अनन्यनारीकमनीय: तम् अङ्कं निजोत्सङ्गम् आरोपितम् अधिरोपितमिति यत्, एतावता लिङ्गेनेति पूर्व्वेणान्वय: । रोहतेर्ण्यन्तात् कर्म्मणि क्त: । "रुह: पोऽन्यतरस्याम्" इति ( ७, ३, ४३ पा० ) हकारस्य पकार: । गत्यर्थविवक्षायां द्विकर्म्मत्वम् । प्रधाने कर्म्मणि क्त: । गिरिजानितम्बविम्बं विश्वातिशायिसौन्दर्य्यं गिरिशाङ्कारूढत्वात् व्यतिरेकेण नार्य्यन्तरनितम्बविम्बवत् । विपक्षे हेत्वनुक्तिरेव बाधिका । दाक्षायणीनितम्बविम्बस्य तु पक्षसपक्षयो:

अन्यतरभावानतिवृत्तेः निष्कलङ्कमनुमानमिति अलमस्थान-संरम्भेण ॥ ३७

एतावता करणे तृतीया। गिरिशेन अनुक्ते कर्त्तरि तृतीया। अनन्य-नारीकमनीयमित्यत्र हेतोरनुक्तौ उपमानस्य स्फुटताभावात् न व्यतिरेकालङ्कारः। एतावता, अनुमेयशोभीत्येताभ्यां आश्रयस्य काञ्चीगुणस्थानस्य आधिक्यात् आश्रयिणः अङ्गस्याधारत्वादा-श्रयाश्रयी अलङ्कार एव युज्यते। ३७

तस्याः प्रविष्टा नतनाभिरन्ध्रं
रराज तन्वी नवलोमराजिः ।
नीवीमतिक्रम्य सितेतरस्य
तन्मेखलामध्यमणेरिवार्चिः ॥ ३८

अन्वयः। नीवीमतिक्रम्य नतनाभिरन्ध्रं प्रविष्टा तन्वी तस्याः नवलोमराजिः सितेतरस्य तन्मेखलामध्यमणेः अर्चिरिव रराज ॥३८

तस्या इति। नीवीं वस्त्रग्रन्थिम्। "स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च" इत्यमरः। अतिक्रम्य अतीत्य नतं निम्नं नाभिरन्ध्रं प्रविष्टा प्रविशन्ती तन्वी सूक्ष्मा तस्याः पार्वत्याः नवरोमराजिः सितेतरस्य असितस्य इन्द्रनीलस्येत्यर्थः। तस्याः पार्वत्याः मेखला तन्मेखला। तस्या इत्यनुवृत्तौ पुनः तच्छब्दोपादानं वाक्यान्तरत्वात् सोढ़व्यम्। यद्वा, तस्याः नीव्या मेखला तन्मेखला, तत्र तद-वस्थानात्। तस्याः मध्यमणेरर्चिः प्रभा इव रराज। "ज्वाला-भासोर्नपुंस्यर्चिः" इत्यमरः ॥ ३८

प्रविष्टा इत्यत्र यौवनस्य प्रथमाविर्भावसूचनात् आरम्भोक्तः। तन्वीति। स्तोकाल्प-क्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु इत्यमरः। 'वोतो गुणवचनात्' इति ङीप्। ३८

मध्येन सा वेदिविलग्नमध्या
वलित्रयं चारु बभार बाला ।
आरोहणार्थं नवयौवनेन
कामस्य सोपानमिव प्रयुक्तम् ॥ ३९

अन्वयः। वेदिविलग्नमध्या सा बाला मध्येन चारु वलित्रयं कामस्य आरोहणार्थं नवयौवनेन प्रयुक्तं सोपानमिव बभार ॥ ३९

मध्येनेति । "वेदिः परिष्कृता भूमिः" इत्यमरः । वेदिविलग्न-मध्या वेदिवत् कृशमध्या तनुमध्येति यावत् । सा बाला पार्वती मध्येन मध्यभागेन चारु सुन्दरं वलित्रयं कामस्य आरोहणार्थं नवयौवनेन प्रयुक्तं रचितं सोपानमिव बभार इत्युत्प्रेक्षा ॥ ३९

वेदिविलग्नमध्येति । लज्जते देहमूर्द्धाधोभागं समसूत्रेण बध्नातीति लग्नः विगतो लग्नः विलग्नः वेदिः तद्वत्, अथर्वणिकवेदस्यापर वेदापेक्षया कृशमध्यता निर्दिष्टेति भावः । मध्येन करणे तृतीया । यौवनेन तृतीया करणे । उप+अन्+घञ्, तेन उपानेन सह वर्त्तमानं सोपानमिति । ३९

अन्योन्यमुत्पीड़यदुत्पलाक्ष्याः
स्तनद्वयं पाण्डु तथा प्रवृद्धम् ।
मध्ये यथा श्याममुखस्य तस्य
मृणालसूत्रान्तरमप्यलभ्यम् ॥ ४०

अन्वयः । अन्योन्यम् उत्पीड़यत् पाण्डु उत्पलाक्ष्याः स्तनद्वयं तथा प्रवृद्धं यथा श्याम-मुखस्य तस्य मृणालसूत्रान्तरमपि अलभ्यम् ॥ ४०

अन्योन्यमिति । अन्योऽन्यं परस्परम् । "कर्म्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये इति (८, १,१२ पा० वा०) द्विरुक्तिः । "समास-वच्च बहुलमिति बहुलवचनादसमासपक्षेपि पूर्वपदस्थस्य सुपः सुर्वक्तव्यः" इति तत्रत्यवार्त्तिकम् । उत्पीड़यत् उपघ्नत् पाण्डु गौरम् उत्पलाक्ष्याः स्तनद्वयं तथा तेन प्रकारेण प्रवृद्धम् । कर्त्तरि क्तः । श्याममुखस्य कृष्णचूचुकस्येति स्वरूपवर्णनम्, तस्य स्तन-द्वयस्य मध्ये यथा येन प्रकारेण मृणालसूत्रान्तरं बिसतन्तुमात्रा-वकाशोऽपि अलभ्यं लब्धुमशक्यम् । "अन्तरमवकाशावधिपरि-धानान्तर्धिभेदतादर्थ्ये" इत्यमरः । अत्र सम्बन्धे असम्बन्धरूपाति-शयोक्त्यलङ्कारः । कुचयोः पीवरत्वातिशयार्थमवकाशसम्बन्धेऽपि असम्बन्धाभिधानादिति ॥ ४०

स्तनद्वयस्याधिक्येदावस्थानात् उत्पलाक्षीतिविशेषणाच्च अस्याः उत्कृष्टजातीयस्त्रीत्वं सूचितं । ४०

शिरीषपुष्पाधिक-सौकुमार्य्यौ
बाहू तदीयाविति मे वितर्कः ।

पराजितेनापि कृतौ हरस्य
यौ कण्ठपाशौ मकरध्वजेन ॥ ४१

अन्वयः। तदीयौ बाहू शिरीषपुष्पाधिक-सौकुमार्य्यौ इति मे वितर्कः, (कुतः) यौ पराजितेनापि मकरध्वजेन हरस्य कण्ठपाशौ कृतौ ॥ ४१

लोके सुकुमारत्वमेव कुसुमास्त्रस्य साधकत्वमिति स्थितिं सत्याह:—शिरीषेति। तस्या इमौ तदीयौ बाहू, शिरीषपुष्पादधिकं सौकुमार्य्यं मार्दवं ययोः तथोक्तौ इति मे वितर्कः ऊहः। कुतः? यौ बाहू पराजितेनापि पूर्वनिर्जितेनापि मकरध्वजेन कामेन हरस्य कण्ठपाशौ कण्ठबन्धनरज्जू कृतौ कण्ठालिङ्गनं प्रापितौ इत्यर्थः। तदसाध्यसाधनात् तत आधिक्यमिति भावः। अत्र बाह्वोः आरोपितकण्ठपाशत्वस्य प्रकृतवैरनिर्य्यातनोपयोगात् परिणामालङ्कारः ॥ ४१

"विषयात्मतया रोप्ये प्रकृतार्थोपयोगिनि।
परिणामो भवेत्तुल्या तुल्याधिकरणो द्विधा" ॥

बाहू, वितर्कश्च लिङ्गार्थे प्रथमा। मकरध्वजेन तृतीया अनुक्ते कर्त्तरि। ४१

कण्ठस्य तस्याः स्तनबन्धुरस्य
मुक्ताकलापस्य च निस्तलस्य।
अन्योऽन्यशोभाजननाद् बभूव
साधारणो भूषणभूष्यभावः ॥ ४२

अन्वयः। स्तनबन्धुरस्य तस्याः कण्ठस्य निस्तलस्य मुक्ताकलापस्य च अन्योन्यशोभाजननात् भूषणभूष्यभावः साधारणो बभूव ॥ ४२

कण्ठस्येति। स्तनाभ्यां बन्धुरस्य उन्नतस्य तस्याः पार्वत्याः कण्ठस्य गलस्य निस्तलस्य वर्त्तुलस्य मुक्ताकलापस्य मुक्ताभूषणस्य च। "वर्त्तुलं वृत्तं बन्धुरन्तून्नतानतम्" "कलापो भूषणे बर्हे तूणीरे संहतावपि" इति चामरः। अन्योन्यशोभाजननात् भूषणभूष्यभावः अलङ्कारालङ्कार्य्यभावः साधारणः समानो बभूव। उभौ अपि अन्योन्यस्य भूष्यौ भूषणे च बभूवतुः इत्यर्थः। अत्र कण्ठमुक्ताकलापयोः

शोभाक्रियाद्वारेण अन्योऽन्यभूषाजनकत्वात् अन्योन्यालङ्कारः। तदुक्तं—परस्परं क्रियाजननमन्योन्यमिति ॥ ४२

अन्योन्यशोभाजननात् पञ्चमी हेतौ।

"अन्योन्यमुभयोरेकक्रियायाः करणं मिथः"। दर्पणः। ४२

चन्द्रं गता पद्मगुणान् न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखन्तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥ ४३

अन्वयः। लोला लक्ष्मीः चन्द्रं गता पद्मगुणान् न भुङ्क्ते, पद्माश्रिता चान्द्रमसीम् अभिख्यां ( न भुङ्क्ते ), उमामुखं प्रतिपद्य तु द्विसंश्रयां प्रीतिम् अवाप ॥ ४३

इदानीं पार्वतीवदनं चन्द्रकमलसदृशमित्येतदेव वचोभङ्ग्याह, चन्द्रमिति। लोला चपला परिभ्रमणशीला इत्यर्थः। लक्ष्मीः कान्त्यभिमानिनी देवता चन्द्रं गता प्राप्ता सती पद्मगुणान् सौगन्ध्यादीन् न भुङ्क्ते न अनुभवति। पद्माश्रिता सती चन्द्रमस इमाम् चान्द्रमसीम् अभिख्यां शोभाम्। "अभिख्या नामशोभयोः" इत्यमरः। अमृतत्वदानन्दिनीं न भुङ्क्ते। उमामुखं प्रतिपद्य तु द्वे चन्द्रपद्मे संश्रयः कारणं यस्यास्ताम् द्विसंश्रयां प्रीतिम् आनन्दम् अवाप, तत्र उभयगुणसम्भवादिति भावः। अत्र उपमानभूतचन्द्रपद्मापेक्षया उपमेयस्य उमामुखस्य अधिकगुणवत्त्वोक्त्या व्यतिरेकालङ्कारः। तदुक्तं—"भेदप्राधान्येनोपमानादुपमेयस्याधिक्ये विपर्य्यये वा व्यतिरेकः" इति ॥ ४३

लक्ष्मीशब्दात् सुलोपो न भवति यथा—

अवीलक्ष्मीतरीतन्त्रीह्रीधीश्रीणामुणादितः।
स्त्रीलिङ्गानामसमीपात्तु न सुलोपः कदाचन ॥

भुङ्क्ते, भुजोऽनवने इत्यात्मनेपदम्। ४३

पुष्पं प्रवालोपहितं यदि स्यात्
मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्य्याद्विशदस्य तस्याः
ताम्रौष्ठपर्य्यस्तरुचः स्मितस्य ॥ ४४

अन्वयः । यदि पुष्पं प्रवालोपहितं मुक्ताफलं वा स्फुटविद्रुमस्थं स्यात् ततः ( तदयम् ) विशदस्य ताम्रौष्ठपर्य्यस्तरुचः तस्याः स्मितस्य अनुकुर्य्यात् ॥ ४४

पुष्पमिति । पुष्पं पुण्डरिकादिकं प्रवाले वालपल्लवे उपहितं निहितं स्याद् यदि । "प्रवालो वल्लकीदण्डे विद्रुमे बालपल्लवे" इति विश्वः । मुक्ताफलं वा स्फुटे निर्म्मले विद्रुमे तिष्ठतीति स्फुटविद्रुमस्थं स्यात् यदि । ततः तर्हि विशदस्य शुभ्रस्य ताम्रे अरुणे ओष्ठे पर्य्यस्ता प्रसृता रुक् कान्तिर्यस्य तथोक्तस्य तस्याः पार्वत्याः स्मितस्य अनुकुर्य्यात्, स्मितमनुकुर्य्यादित्यर्थः । अत्र "माषाणामश्नीयात्" इतिवत् सम्बन्धमात्रविवक्षया षष्ठी । अत्र पुष्पप्रवालयोः मुक्ताविद्रुमयोश्च असम्बन्धेऽपि सम्बन्धोक्त्या अतिशयोक्तिः । सा च सम्भावना इत्यलङ्कारसर्वस्वकारः । विशेषतस्तु पुष्पमुक्ताफलयोरुपमानयोः प्रकृतोत्कर्षार्थमुपमेयताकल्पनात् प्रतीपालङ्कारः । तदुक्तम्—उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपः" इति लक्षणात् । स च पूर्वोक्तातिशयोक्त्यनुप्राणित इति ॥ ४४

शैलाधिपस्यानुचकार लक्ष्मीमिति "न गुरोरनुकुर्व्वीत गतिभाषितचेष्टित" मित्यादावनुपूर्वः कृधातुः सकर्म्मको दृश्यते । अत्र च विवक्षया षष्ठीष्यते । उपमेयेन पार्वतीस्मितेन उपमानयोः पुष्पमुक्ताफलयोरपकर्षत्वेनोपमेयकल्पनात् प्रतीपनामालङ्कारः स चातिशयोक्त्यनुप्राणितः भवतिः । प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् । निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते । ४४

स्वरेण तस्याममृतस्रुतेव
प्रजल्पितायामभिजातवाचि ।
अप्यन्यपुष्टा प्रतिकूलशब्दा
श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥ ४५

अन्वयः । अभिजातवाचि तस्याम् अमृतस्रुतेव स्वरेण प्रजल्पितायां ( सत्याम् ) अन्यपुष्टा अपि ताड्यमाना वितन्त्रीरिव श्रोतुः प्रतिकूलशब्दा ( भवति ) ॥ ४५

स्वरेणेति । अभिजातवाचि मधुरभाषिण्यां तस्यां पार्वत्यां, अमृतस्रुता अमृतस्राविणा इव । क्विप् । स्वरेण नादेन प्रजल्पितायां आलपन्त्याम्, कर्त्तरि क्तः, अन्यैः काकादिभिः पुष्टा अन्यपुष्टा कोकिलापि । मुख्यया वृत्त्या जातिवचनत्वाभावात् ङीब्भावः । ताड्य-

माना वाद्यमाना विषमवद्धा तन्त्रोर्वितन्त्रीरिव। अवितृस्तृतन्त्रिभ्य (३, १६८, उ० ) इति तन्त्रिधातोरौणादिक ईप्रत्ययः। ङीब-भावात् न हल्ङ्याब्भ्य इति ( ६, १, ६८ पा० ) सुलोपः। तदुक्तम्—"अवीलक्ष्मीतरीतन्त्रीह्रीधीश्रीणामुणादितः। स्त्रीलिङ्गानामभीषान्तु न सुलोपः कदाचन" इति। एते ङीबन्ता न भवन्तीत्यर्थः। श्रोतुः जनस्य प्रतिकूलशब्दा कर्णकटोरनादा भवतीति शेषः॥ ४५

अभिजातवाचीत्यस्य प्रतिशब्दो मधुरभाषिण्यामिति तत् कथं सङ्गच्छते। अभि-पूर्व्वः जन् धातुरुत्पन्नार्थे वृद्ध्यर्थे च वर्त्तमानः ताभ्यां मधुरार्थौ न निष्क्रान्तः। 'ख्याते हृष्टे प्रतीतोऽभिजातस्तु कुलजे बुधे" इत्यमरः। "अभिजातः कुलिने स्यान्नाय्यपण्डितयोस्त्रिष्विति मेदिनी। ख्यातार्थत्वात् मधुरोऽर्थः निष्क्रामतीति केचित् वदन्ति। अत्र कुत्सुतन्त्रीस्वरयो-रुपमानयोरपकर्षत्वादुपमेयस्य पार्वतीकण्ठस्वरस्याधिक्येनातिशयोक्त्यनुप्राणितो व्यतिरेका-लङ्कारः। सूत्रमस्य पदव्याख्याने उक्तमिति। ४५

प्रवातनीलोत्पलनिर्विशेष-
मधीरविप्रेक्षितमायताक्ष्या।
तया गृहीतं नु मृगाङ्गनाभ्यः
ततो गृहीतं नु मृगाङ्गनाभिः॥ ४६

अन्वयः। आयताक्ष्या तया प्रवातनीलोत्पलनिर्विशेषम् अधीरविप्रेक्षितं मृगाङ्गनाभ्यः गृहीतं नु, मृगाङ्गनाभिः ततः ( तत् ) गृहीतं नु॥ ४६

प्रवातेति। प्रवाते प्रभूतवातस्थले यन्नीलोत्पलं ततः निर्विशेषं निर्भेदं, तत्सदृशमित्यर्थः। अधीरविप्रेक्षितं चकितविलोकितम् आयताक्ष्या विशालनेत्रया पार्वत्या मृगाङ्गनाभ्यः हरिणीभ्यः गृहीतम् प्राप्तम् नु? अथवा मृगाङ्गनाभिः ततः तस्याः पार्वत्याः, पञ्च-म्यास्तसिल्। गृहीतं नु? अत्र विवक्षितस्य परस्परग्रहणस्य उत्प्रेक्षणात् उत्प्रेक्षा इति केचित्। तदुपजीविसन्देहालङ्कार इत्यन्ये। उभयोः सङ्कर इत्यपरे॥ ४६

निर्नास्ति विशेषो यस्मात्, प्रवाते यन्नीलोत्पलं तेन निर्विशेषं पार्व्वत्या मृगाङ्ग-नाभ्यः सकाशात् तादृक् प्रेक्षणं गृहीतम् उतताभिः तस्याः सकाशात् तद्गृहीतमेतत् निश्चेतु-मशक्यत्वात् सन्देहालङ्कारः

यथा—सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः।
शुद्धनिश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा। दर्पणः।४६

तस्याः शलाकाञ्जननिर्मितेव
कान्तिर्भ्रुवोरायतलेखयोर्या ।
तां वीक्ष्य लीलां चतुरामनङ्गः
स्वचापसौन्दर्य्यमदं मुमोच ॥ ४७

अन्वयः। आयतलेखयोः तस्याः भ्रुवोः शलाकाञ्जननिर्म्मितेव या कान्तिः, अनङ्गः लीलाचतुरां तां वीक्ष्य स्वचापसौन्दर्य्यमदं मुमोच ॥ ४७

तस्या इति। अयतलेखयोः दीर्घरेखयोः तस्याः पार्वत्या भ्रुवोः सम्बन्धिनी, शलाकया अञ्जनेन निर्मितेव स्थिता या कान्तिः, लीलाचतुरां विलाससुभगां तां कान्तिं वीक्ष्य अनङ्गः स्वचापसौन्दर्य्येण यो मद तं मुमोच, इह सौन्दर्य्यातिशयोक्तिः ॥ ४७

शलाकाञ्जननिर्म्मितेवेत्यत्र उत्प्रेक्षानुप्राणितः अनङ्गस्य स्वचापसौन्दर्य्यमदपरिहारं प्रतिभ्रूकान्तिदर्शनहेतुत्वात् काव्यलिङ्गालङ्कारः यथा—हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते। दर्पणः। ४७

लज्जा तिरश्चां यदि चेतसि स्या-
दसंशयं पर्व्वतराजपुत्र्याः ।
तं केशपाशं प्रसमीक्ष्य कुर्य्युः
बालप्रियत्वं शिथिलं चमर्य्यः ॥ ४८

अन्वयः। तिरश्चां चेतसि लज्जा स्यात् यदि असंशयं चमर्य्यः पर्व्वतराजपुत्र्याः तं केशपाशं प्रसमीक्ष्य बालप्रियत्वं शिथिलं कुर्य्युः ॥ ४८

लज्जेति। तिरश्चां तिर्य्यग्जातीनां चेतसि लज्जा स्याद् यदि, संशयाभावः असंशयम्, सन्देहो नास्तीत्यर्थः। पर्वतराजपुत्र्याः। शार्ङ्गरवाद्यञो ङीन् (४, १, ७३ पा०) इति ङीन्। तं प्रसिद्धं केशपाशं केशकलापम्। "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" इत्यमरः। प्रसमीक्ष्य दृष्ट्वा चमर्य्यः मृगीविशेषाः, बालाः प्रिया यासामिति विग्रहे बालप्रियास्तासां भावः बालप्रियत्वम्, प्रियबालत्वमित्यर्थः। आहिताग्न्यादिपाठात् वा परनिपातः। "त्वतलोर्गुणवचनस्ये" ति (६, ३, ३५ पा० वा०) पुंवद्भावः। शिथिलं कुर्युः। निर्लज्जत्वात् न शिथिलयन्तीत्यर्थः। अतएव अत्र निर्लज्जत्वकरण-

हेतोराद्यपादे वाक्यार्थत्वेनोक्त्या काव्यलिङ्गाख्यालङ्कारः । तदुक्तम्,— "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति ॥ ४८

सर्वोपमाद्रव्यसमुच्चयेन
यथाप्रदेशं विनिवेशितेन ।
सा निर्म्मिता विश्वसृजा प्रयत्ना-
देकस्थसौन्दर्य्यदिदृक्षयेव ॥ ४९॥

अन्वयः । सा विश्वसृजा एकस्थसौन्दर्य्यदिदृक्षयेव प्रयत्नात् यथाप्रदेशं विनिवेशितेन सर्व्वोपमाद्रव्यसमुच्चयेन निर्म्मिता ॥ ४९

सर्वेति । किंबहुना सा पार्वती विश्वसृजा विधात्रा, एकत्र तिष्ठतीति एकस्थम्, तस्य सौन्दर्य्यस्य स्ववस्तुगतस्य इत्यर्थः । दिदृक्षयेव प्रयत्नात् क्रमात् विनिवेशितेन स्थापितेन सर्वेषामुपमाद्रव्याणां चन्द्रारविन्दाद्युपमानवस्तूनां समुच्चयेन समाहारेण निर्मिता । दिदृक्षया इवेति फलोत्प्रेक्षा दर्शनार्थित्वात् विश्वसृज इति ॥ ४९

द्रव्यसमुच्चयेन तृतीया करणे, विश्वसृजा अनुक्ते कर्त्तरि तृतीया, प्रयत्नात् हेत्वर्थे पञ्चमी, दिदृक्षया तृतीया हेतौ । उत्प्रेक्षालङ्कारः । ४९

तां नारदः कामचरः कदाचित्
कन्यां किल प्रेक्ष्य पितुः समीपे ।
समादिदेशैकवधूं भवित्रीं
प्रेम्णा शरीरार्द्धहरां हरस्य ॥ ५०

अन्वयः । कामचरः नारदः कदाचित् पितुः समीपे कन्यां तां प्रेक्ष्य किल प्रेम्णा हरस्य शरीरार्द्धहराम् एकवधूं भवित्रीं समादिदेश ॥ ५०

तामिति । कामेनेच्छया चरतीति कामचरो नारदः कदाचित् पितुः हिमवतः समीपे कन्यां तां पार्वतीं प्रेक्ष्य किल, प्रेम्णा न तु अन्यथा, हरस्य शिवस्य, अर्द्धं हरतीति अर्द्धहरा । "हरतेरनुद्यमनेऽच्" ( ३, २, ९ पा० ) इत्यच् प्रत्ययः । शरीरस्यार्द्धहरां शरीरार्द्धहराम् । कुलधुरन्धरादिवदवयवद्वारा, समुदायविशेषकत्वात् समासः । अन्यथा तु अर्द्धस्य समप्रविभागवचनत्वात् अर्द्धशरीरेति स्यात् ।

एकवधूम् असपत्नीकां भार्य्याम्। "पूर्वकाले"त्यादिना ( २, १, ४९ पा० ) समासः। भवित्रीं भाविनीं समादिदेश। हरस्य अर्द्धाङ्गहारिण्येकपत्नी भविष्यतीति आदिष्टवानित्यर्थः ॥ ५० ॥

किलेति वार्त्तायामिति, वार्त्ता सम्भाव्ययोः किल इत्यमरः। प्रेम्णा हेतौ तृतीया। ५०

गुरुः प्रगल्भेऽपि वयस्यतोऽस्या-
स्तस्थौ निवृत्तान्यवराभिलाषः।
ऋते कृशानोर्न हि मन्त्रपूत-
मर्हन्ति तेजांस्यपराणि हव्यम् ॥ ५१

अन्वयः। गुरुः अतः अस्याः वयसि प्रगल्भे अपि निवृत्तान्यवराभिलाषः तस्थौ, ( तथा हि ) मन्त्रपूतं हव्य कृशानोः ऋते अपराणि तेजांसि नार्हन्ति ॥ ५१

गुरुरिति। गुरुः पिता। "गुरुर्गीष्पतिपित्राद्यौ" इत्यमरः। अतः नारदवचनाद्धेतोः अस्याः पार्वत्याः प्रगल्भे वयस्यपि यौवने सत्यपि निवृत्तोऽन्यस्मिन् वरे जामातरि अभिलाषो यस्य स तथोक्तः सन्। "वरो ना रूपजामात्रोः" इति वैजयन्ती। तस्थौ, वरान्तरं न अन्विष्टवानित्यर्थः। ननु कुतोऽसौ निर्बन्ध इत्यत आह,—ऋत इति। तथाहि—मन्त्रैः पूतं संस्कृतम्, हूयत इति हव्यम् आज्यादिकं कृशानोः पावकात् ऋते कृशानुं विना, "अन्यारादितर"-त्यादिना ( २, ३, २९ पा० ) पञ्चमी। अपराणि तेजांसि सुवर्णादीनि नार्हन्ति, न भजन्तीत्यर्थः। ईश्वरादन्यस्य तद्योग्यस्य अभावात् उपेक्षेति भावः ॥ ५१

अतः हेत्वर्थे पञ्चमी। विनाशब्दप्रयोगाभावेऽपि विनार्थविवक्षया विनोक्तिरेवायं यथा—

विनोक्तिर्यद्विनान्येन नासाध्वन्यदसाधु वा। दर्पणः।५१।

अयाचितारं न हि देवदेव-
मद्रिः सुतां ग्राहयितुं शशाक।
अभ्यर्थनाभङ्गभयेन साधु-
र्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥ ५२

अन्वयः। अद्रिः अयाचितारं देवदेवं सुतां ग्राहयितुं नशशाक, (तथाहि) साधुः अभ्यर्थनाभङ्गभयेन इष्टे अपि अर्थे माध्यस्थ्यम् अवलम्बते॥ ५२

तर्हि तमेवाहूय दीयताम्, इत्याशङ्क्याह,—अयाचितारमिति। अद्रिः हिमवान् अयाचितारम् अयाचमानं देवदेवं महादेवं सुतां पार्वतीं ग्राहयितुं स्वयमाहूय परिग्राहयितुं न शशाक न उत्सेहे। तथाहि—साधुः सज्जनः। "साधुर्वार्द्धुषिके चारौ सज्जने चाभिधेयवत्" इति विश्वः। अभ्यर्थनाभङ्गभयेन याच्ञावैफल्यभीत्या इष्टेऽप्यर्थे विषये माध्यस्थ्यम् औदासीन्यम् अवलम्बते॥ ५२॥

अभ्यर्थनाभङ्गभयेनेत्यत्र तृतीया हेत्वर्थे; श्लोकपूर्वार्द्धं प्रति परार्द्धस्य हेतुत्वात् काव्यलिङ्गालङ्कारः। ५२

यदैव पूर्वे जनने शरीरं
सा दक्षरोषात् सुदती ससर्ज।
तदाप्रभृत्येव विमुक्तसङ्गः
पतिः पशूनामपरिग्रहोऽभूत्॥ ५३

अन्वयः। सुदती सा पूर्वे जनने यदैव दक्षरोषात् शरीरं ससर्ज, तदाप्रभृत्येव पशूनां पतिः विमुक्तसङ्गः अपरिग्रहः अभूत्॥ ५३

न च तथैव स्थितः, किन्तु उपायान्तरं चिन्तितवानिति वक्तुं प्रस्तौति,—यदेति। शोभना दन्ता यस्याः सा सुदती। "वयसि दन्तस्य दतृ" (५, ४, १४१ पा०) इति दत्रादेशः। "उगितश्च" (४, १, ६ पा०) इति ङीप्। सा पार्व्वती पूर्वे जनने पूर्व्वस्मिन् जन्मनि। "पूर्वादिभ्यो नवभ्यो वे"ति (७, १, १६ पा०) स्मिन्नादेशविकल्पः। "पूर्वे ज्वलने" इति पाठे पूर्वं दाक्षायणीत्वे ज्वलने योगाग्नौ। यदा यस्मिन् काले दक्षरोषाच्छरीरं देहं ससर्ज तत्याज। तदाप्रभृत्येव तदाद्येव यथा तथा पशूनां पतिः शिवः विमुक्तसङ्गः त्यक्तविषयासङ्गः सन् अपरिग्रहः अपत्नीकः अभूत्, स्त्यन्तरं न परिजग्राह इत्यर्थः। "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः॥ ५३

दक्षरोषात् पञ्चमी हेतौ। विचारः—ननु तदा इत्ययं शब्दसप्तम्यर्थप्रतिपादकः तर्हि कथं समासस्य ईदृशः विग्रहः स्यात्, तदा प्रभृति यस्मिन् इति वाक्ये तदेत्यत्र सप्तम्यर्थः

प्रश्नीत्यव प्रश्नार्थः, नायं व्यधिकरणः तस्य क्रियाविशेषणं न दृश्यते अतएव कागतिः ? सत्यं, स कालः आद्यः यस्मिन् इति वाक्ये नायं निष्पद्येत इति भावः । ५३

स कृत्तिवासास्तपसे यतात्मा
गङ्गाप्रवाहोक्षितदेवदारु ।
प्रस्थं हिमाद्रेर्मृगनाभिगन्धि
किञ्चित् क्वणत्किन्नरमध्युवास ॥ ५४

अन्वयः । कृत्तिवासा यतात्मा सः गङ्गाप्रवाहोक्षितदेवदारु मृगनाभिगन्धि क्वणत्किन्नरं किञ्चित् हिमाद्रेः प्रस्थं तपसे अध्युवास ॥ ५४

स इति। कृत्तिवासाः चर्माम्बरः । "अजिनं चर्म कृत्तिः स्त्री" इत्यमरः । यतात्मा नियतचित्तः स पशुपतिः तपसे तपोऽर्थं गङ्गाप्रवाहेणोक्षिताः सिक्ता देवदारवो यस्मिन् तत्तथोक्तम् । मृगनाभिगन्धि कस्तूरीगन्धवत्, कस्तूरीमृगसञ्चारादिति भावः । "मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम्" इत्यमरः । क्वणन्तः गायन्तः किन्नराः यस्मिन् तत्तथोक्तम् । किञ्चित् किमपि हिमाद्रेः प्रस्थं सानुम् अध्युवास, कुत्रचित् प्रस्थे उवास इत्यर्थः । "उपान्वध्याङ्वसः" इति ( १, ४, ४८, पा० ) आधारस्य कर्मत्वम् । "प्रस्थोऽस्त्री सानुमानयोः" इत्यमरः ॥ ५४

तपसे निमित्तार्थे चतुर्थी । गङ्गाप्रवाहेत्यनेन प्रस्थस्य पवित्रता, क्वणत्किन्नरमित्यनेन निर्विघ्नत्वं सूचितं । मृगनाभिगन्धि पदमेतत् "गन्धात् समवेतादित्पूतपूतिसुरभिरित्यस्य सूत्रस्य विषयीभूतं न ।" मृगनाभेर्गन्धः विद्यते अस्येति मत्वर्थीयो इन् । ५४

गणा नमेरुप्रसवावतंसा
भूर्जत्वचः स्पर्शवतीर्दधानाः ।
मनःशिलाविच्छुरिता निषेदुः
शैलेयनद्धेषु शिलातलेषु ॥ ५५

अन्वयः । गणाः नमेरुप्रसवावतंसाः स्पर्शवतीः भूर्जत्वचो दधानाः मनःशिलाविच्छुरिताः शैलेयनद्धेषु निषेदुः ॥ ५५

गणा इति । गणाः प्रमथगणाः । "गणाः प्रमथसङ्घौघाः" इति वैजयन्ती । नमेरुप्रसवावतंसा सुरपुन्नागकुसुमशेखराः ।

"नमेरुः सुरपुन्नागः" इति विश्वः। स्पर्शवतीः सुखस्पर्शाः, मृद्वीरित्यर्थः। प्रशंसायां मतुप्। भूर्जत्वचः भूर्जवल्कलानि दधानाः, वसाना इत्यर्थः। मनःशिलाभिः धातुविशेषैः विच्छुरिताः अनुलिप्ताश्च सन्तः। शिलायां भवं शैलेयं गन्धौषधिविशेषः। शिलायाः, "ढक्छौभ्यां ठक्" (४, १, १२० पा॰) इति भवार्थे ठक्। "शिलाजतु च शैलेयम्" इति यादवः। तेन नद्धेषु व्याप्तेषु शिलातलेषु निषेदुः उपविविशुरित्यर्थः॥ ५५

नमेरूणां प्रसवाः अवतंसाः येषां। स्पर्शः सुखस्पर्शः विद्यते आसां मतुप् स्त्रियां ङीप्। ५५

तुषारसंघातशिलाः खुराग्रैः
समुल्लिखन् दर्पकलः ककुद्मान्।
दृष्टः कथञ्चिद्गवयैर्विविग्नै-
रसोढ़सिंहध्वनिरुन्ननाद॥ ५६

अन्वयः। तुषारसङ्घातशिलाः खुराग्रैः समुल्लिखन् दर्पकलः ककुद्मान् विविग्नैः गवयैः कथञ्चित् दृष्टः असोढ़सिंहध्वनिः उन्ननाद॥ ५६

तुषारेति। तुषारसङ्घाताः हिमघनाः, त एव शिलाः ताः खुराग्रैः समुल्लिखन् विदारयन्, दर्पेण कलो मधुरध्वनिः यस्य सः दर्पकलः विविग्नैः भीतैः गवयैः गोसदृशमृगविशेषैः कथञ्चित् कृच्छ्रेण दृष्टः, ककुदमस्यास्तीति ककुद्मान् वृषभः. असोढ़ः सिंहानां ध्वनिः येन स सिंहध्वनिमसहमानः सन् उन्ननाद उच्चैर्ननाद, जगर्ज इत्यर्थः। स्वभावोक्तिरलङ्कारः। तदुक्तम्,—"स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्" इति॥ ५६

खुराग्रैरित्यत्र तृतीया करणे। गवयैस्तृतीया अनुक्ते कर्त्तरि। स्वभावोक्तिरलङ्कारो यथा—स्वभावोक्तिर्दुरूहार्थ स्वक्रिया रूपवर्णनम्। दर्पणः। ५६

तत्राग्निमाधाय समित्समिद्धं
स्वमेव मूर्त्यन्तरमष्टमूर्त्तिः।
स्वयं विधाता तपसः फलानां
केनापि कामेन तपश्चचार॥ ५७

अन्वयः। तपसः फलानां स्वयं विधाता अष्टमूर्त्तिः तत्र स्वमेव मूर्त्यन्तरं समित्‌समिद्धम् अग्निम् आधाय केनापि कामेन तपश्चचार ॥ ५७

तत्रेति। तपसः फलानामिन्द्रत्वादीनां स्वयं विधाता जनयिता दाता इत्यर्थः। अष्टौ मूर्त्तयो यस्य सः अष्टमूर्त्तिः ईश्वरः। "भूतार्कचन्द्रयज्वानो मूर्त्तयोऽष्टौ प्रकीर्त्तिताः" इति। तत्र प्रस्थे स्वं स्वकीयमेव मूर्त्यन्तरं मूर्त्तिभेदं समिद्भिः समिद्धं दीपितम् अग्निमाधाय प्रतिष्ठाप्य केनापि कामेन कयापि फलकामनया तपश्चचार चक्रे। "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते" इति न्यायात् कामेन इत्युक्तम्। तस्यावाप्तसमस्तकामत्वात् केनापीत्युक्तम् ॥ ५७

फलानामित्यत्र कर्म्मणि षष्ठी। अष्टमूर्त्तयः यथा—क्षितिः, जलं, तेजः, मरुत्, व्योम, चन्द्रः, सूर्य्यः, यजमानः इत्याद्याः मूर्त्तयः। कामेनेत्यत्र हेतौ तृतीया। ५७

अनर्घ्यमर्घ्येण तमद्रिनाथः
स्वर्गौकसामर्च्चितमर्च्चयित्वा।
आराधनायास्य सखीसमेतां
समादिदेश प्रयतां तनूजाम् ॥ ५८

अन्वयः। अद्रिनाथः अनर्घ्यं स्वर्गौकसां अर्च्चितं तम् अर्घ्येण अर्च्चयित्वा अस्य आराधनाय सखीसमेतां प्रयतां तनूजां समादिदेश ॥ ५८

अनर्घ्यमिति। अद्रीणां नाथः अद्रिनाथः हिमवान्, अर्घं मूल्यमर्हतीत्यर्घ्यः। "मूल्ये पूजाविधावर्घः" इत्यमरः। "दण्डादिभ्यो यः" (५, १, ६६ पा०) इति यप्रत्ययः। अर्घ्यः न भवतीति अनर्घ्यः तमनर्घ्यममूल्यमित्यर्थः। स्वर्गः ओकः स्थानं येषां स्वर्गौकसां देवानाम् अर्चितं, देवैः पूज्यमानमित्यर्थः। "मतिबुद्धिपूजार्थेभ्यश्च" (३, २, १८८ पा०) इति वर्त्तमाने क्तः। "क्तस्य च वर्त्तमाने" (२, ३, ६७ पा०) इति षष्ठी। तम् ईश्वरम् अर्घ्येण पूजार्थोदकेन। "पादार्घाभ्याञ्चे"ति (५, ४, २४ पा०) यत्प्रत्ययः। "षट् तु त्रिष्वर्घ्यमर्घार्थे, पाद्यं पादाय वारिणि" इत्यमरः। अर्च्चयित्वा पूजयित्वा अस्य ईश्वरस्य आराधनाय

सखीभ्यां जयाविजयाभ्यां समेतां प्रयतां तनूजां सुतां समादिदेश आज्ञापयामास ॥ ५८

अर्च्चेण तृतीया करणे, आराधनाय तुमर्थे चतुर्थी । अस्येति कर्म्मणि षष्ठी । ५८

प्रत्यर्थिभूतामपि तां समाधेः
शुश्रूषमाणां गिरिशोऽनुमेने ।
विकारहेतौ सति विक्रियन्ते
येषां न चेतांसि त एव धीराः ॥ ५९

अन्वयः । गिरिशः समाधेः प्रत्यर्थिभूतामपि शुश्रूषमाणां ताम् अनुमेने, विकारहेतौ सति ( विकारहेतुना ) येषां चेतांसि न विक्रियन्ते त एव धीराः ॥ ५९

प्रत्यर्थीति । गिरिशः शिवः समाधेः प्रत्यर्थिभूतां प्रतिपक्षभूतामपि, सुप्सुपेति समासः । श्रोतुमिच्छन्तीं शुश्रूषमाणां सेवमानाम् । सेवका हि सेव्ये दत्तकर्णा भवन्ति, इच्छार्थे सन्प्रत्ययः । "ज्ञा-श्रु स्मृ-दृशां सनः" ( १, ३, ५७ पा० ) इत्यात्मनेपदम् । तां पार्वतीम् अनुमेने अङ्गीचकार न प्रतिषिद्धवान् इत्यभिप्रायः । न च एतावता धीरस्य कश्चित् विकार इत्याशयः । धीरत्वमेवार्थान्तरन्यासेनाह,—विकारेति । विकारस्य प्रकृतेरन्यथात्वस्य हेतौ स्त्रीसन्निधानादिकारणे सति विद्यमानेऽपि येषां चेतांसि न विक्रियन्ते न विकृतं नीयन्ते, त एव धीराः । विक्रियन्ते इति कर्म्मणि लट् ॥ ५९

विकारहेतौ भावे सप्तमी । ५९

अवचितबलिपुष्पा वेदिसम्मार्गदक्षा
नियमविधिजलानां बर्हिषाञ्चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥ ६०

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
उमोत्पत्तिर्नाम प्रथमः सर्गः ॥ १

अन्वयः। सा सुकेशी अवचितबलिपुष्पा वेदिसम्मार्गदक्षा नियमविधिजलानां बर्हिषाञ्च उपनेत्री तच्छिरश्चन्द्रपादैः नियमितपरिखेदा प्रत्यहं गिरिशम् उपचचार ॥ ६०

शुश्रूषाप्रकारमेवाह,—अवचितेति। सुकेशी शोभनमूर्द्धजा। "स्वाङ्गाच्चोपसर्जनादसंयोगोपधादि"ति (४, १, ५४ पा० ) ङीष्। सा पार्वती अवचितानि लूनानि बलिपुष्पाणि पूजाकुसुमानि यया सा, वेदेः नियमवेदिकायाः सम्मार्गे सम्मार्जने दक्षा, नियमविधेः नित्यकर्मानुष्ठानस्य यानि जलानि तेषां बर्हिषां कुशानाञ्च उपनेत्री आनेत्री सती तस्य गिरिशस्य शिरसि चन्द्रस्य पादैः रश्मिभिः। "पादा रश्म्यङ्घ्रितुर्य्यांशाः" इत्यमरः। नियमितपरिखेदा निवर्त्तितपरिश्रमा सती, अहन्यहनि प्रत्यहम्। "अव्ययं विभक्तिसमीपसमृद्धी"त्यादिना (२, १, ६ पा० ) नियतार्थेऽव्ययीभावः। "नपुंसकादन्यतरस्याम्" ( ५, ४, १०९ पा० ) इति टच् प्रत्ययः। गिरिशमुपचचार शुश्रूषाञ्चक्रे ॥ ६०

जलानां बर्हिषाञ्चेत्यादौ कर्मणि षष्ठी। चन्द्रपादैस्तृतीया अनुक्ते कर्त्तरि। ६०

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां प्रथमः सर्गः ॥ १ ॥

---

## द्वितीयः सर्गः ।



तस्मिन् विप्रकृताः काले तारकेण दिवौकसः ।
तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः ॥ १

अन्वयः । तस्मिन् काले तारकेण विप्रकृताः दिवौकसः तुरासाहं पुरोधाय स्वायम्भुवं धाम ययुः ॥ १

तस्मिन्निति । तस्मिन् काले पार्वतीशुश्रूषाकाले तारकेण तारकनाम्ना वज्राङ्गपुत्रेण केनचित् असुरेण विप्रकृताः उपप्लुताः दिवमोकः स्थानं येषां ते दिवौकसः देवाः । "दिवं स्वर्गोऽन्तरीक्षे च" इति विश्वः । द्यौः ओक इति पक्षे पृषोदरादित्वात् साधुः । तुरं त्वरितं सहते अभिभवतीति तुराषाट् । साहयतेश्चौरादिकात् क्विप् । "नहिवृतिवृषि"त्यादिना ( ६, ३, ११६ पा० ) पूर्वपदस्य दीर्घः । प्रकृतिग्रहणे प्रातिपदिकस्यापि ग्रहणात् । मुग्धबोधकारस्तु तुराशब्दष्टावन्त इत्याचष्टे । तं तुरासाहम् देवेन्द्रम् । अजादिषु साढ़रूपत्वाभावात् । "सहेः साढः सः" ( ८, ३, ५६, पा० ) इति षत्वं न भवति । पुरोधाय पुरस्कृत्य, स्वयम्भुवो ब्रह्मण इदं स्वायम्भुवम् । संज्ञापूर्वकविधेरनित्यत्वात् । "ओर्गुणः" ( ६, ४, १४६ पा० ) इति गुणो न । धाम स्थानं ययुः ब्रह्मलोकं जग्मुरित्यर्थः ॥ १

विचार । ननु तुरं साहयतीति वाक्ये नहिवृतिवृषिव्यधिरुचितनिषु क्वानिति सूत्रे साहीति न दृश्यते, तर्हि कथं दीर्घः स्यात् ? सत्यं, तत्र इतिपूर्वस्य नित्यत्वात् स तत्साहचर्यात् कारकपूर्वस्यापीति फलितार्थः । १

तेषामाविरभूद्ब्रह्मा परिम्लानमुखश्रियाम् ।
सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥ २

अन्वयः । परिम्लानमुखश्रियां तेषां ब्रह्मा सुप्तपद्मानां सरसां प्रातः दीधितिमान् इव आविरभूत् ॥ २

तेषामिति । परिम्लाना परिक्षीणा मुखश्रीः मुखकान्तिः येषां तथोक्तानां तेषां देवानां ब्रह्मा सुप्तपद्मानां मुकुलितारविन्दानां सरसां प्रातर्दीधितिमान् सूर्य्य इव आविरभूत् प्रकाशोऽभूदित्यर्थः । "प्रकाशे प्रादुर्भावः स्यात्" इत्यमरः । सूर्य्योपमानेन तेषां ग्लानि-हरत्वं सूचितम् । अत्रोपमालङ्कारः । तल्लक्षणन्तु—"स्वतःसिद्धेन भिन्नेन सम्मतेन च धर्मतः । साम्यमन्येन वर्ण्यस्य वाच्यञ्चेकपदोपमा" इति ॥ २

२ । तेषां सम्बन्धे षष्ठी तेषां पुरतः इत्यर्थः । परि+म्लै+क्तः । दीधितिः+मतुप् ।

**अथ सर्वस्य धातारं ते सर्वे सर्वतोमुखम् ।**
**वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥ ३**

अन्वयः । अथ सर्व्वे ते सर्व्वतोमुखं वागीशं सर्वस्य धातारं प्रणिपत्य अर्थ्याभिः वाग्भिः उपतस्थिरे ॥ ३

अथ इति । अथ आविर्भावानन्तरं सर्वे ते देवाः सर्वतः समन्ततः मुखानि यस्य तं सर्वतोमुखं चतुर्मुखमित्यर्थः । वाचां विद्यानाम् ईशं सर्वस्य जगतः धातारं स्रष्टारं ब्रह्माणं प्रणिपत्य नमस्कृत्य अर्थादनपेताभिः अर्थ्याभिः, अर्थयुक्ताभिरित्यर्थः । "धर्मपत्यर्थन्यायादनपेते" ( ४, ४, ९२ पा० ) इति यत्प्रत्ययः । वाग्भिरुपतस्थिरे तुष्टुवुरित्यर्थः । "उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्वि"ति वक्तव्यं ( १, ३, २५ पा० वा० ) इत्यात्मनेपदम् ॥ ३

३ । सर्व्वतोमुखं सर्वत इत्यव्ययपदं । सर्वस्येत्यत्र कर्मणि षष्ठी, क्रीडार्थस्य तृन्प्रत्ययस्य कारकषष्ठी निषेधः स्यात् । वाग्भिः तृतीया करणे । प्रणिपत्येत्यत्र "नेर्गदनदपतेत्यादिना नकारस्य णत्वं ।

**नमस्त्रिमूर्त्तये तुभ्यं प्राक् सृष्टेः केवलात्मने ।**
**गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ ४**

अन्वयः । हे भगवन् ! सृष्टेः प्राक् केवलात्मने पश्चात् गुणत्रयविभागाय भेदम् उपेयुषे ( अतएव ) त्रिमूर्त्तये तुभ्यं नमः ॥ ४

स्तुतिप्रकारमाह, नम इत्यादिभिर्द्वादशभिः श्लोकैः नम इति । हे भगवन्नित्यध्याहार्य्य व्याख्येयम् । सृष्टेः प्राक् । "अन्यारादि"-

त्यादिना ( २, ३, २८ पा० ) अन्युत्तरपदयोगे पञ्चमी। केवलात्मने एकरूपाय "आत्मा वा इदमेक एवाग्र आसीत्" इति श्रुतिः। "निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः" इत्यमरः। पश्चात् सृष्टिप्रवृत्तिकाले। विभज्यते अनेनेति विभागः गुणानां सत्त्वादीनां त्रयम् एव विभागो यस्य तस्मै। "गुणाः सत्त्वं रजस्तमः" इत्यमरः। भेदम् उपाधिं स्रष्टृत्वादिकमित्यर्थः, उपेयुषे प्राप्तवते। "उपेयिवाननाश्वानननूचानश्च" इति ( ३, २, १०८ पा० ) निपातः। अतएव त्रिमूर्त्तये ब्रह्मविष्णुरुद्ररूपिणे तुभ्यं नमः, "नमः स्वस्ती"-त्यादिना ( २, ३, १६ पा० ) चतुर्थी। उक्तञ्च—"नमो रजोजुषे सृष्टौ स्थितौ सत्त्वमयाय च। नमोरूपाय संहारे त्रिरूपाय स्वयम्भुवे" इति ॥ ४

सृष्ट्युत्पत्तेः प्राक् स भगवान् एक एव आसीत्, पश्चात् जगतां सृष्ट्यनन्तरं तेषां पालनाय सत्त्वमयीं मूर्तिं संहाराय तमोमयीं मूर्तिं च आश्रितवान् इत्यर्थः। स एक एव गुणभेदेन कार्य्यभेदात् ब्रह्माविष्णुरुद्ररूपं उपाधित्रयं दधौ। ४

**यदमोघमपामन्तरुप्तं वीजमज ! त्वया।**
**अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे ॥ ५**

अन्वयः। हे अज ! त्वया अपाम् अन्तः यत् अमोघं वीजम् उप्तम् अतः चराचरं विश्वम् ( उत्पन्नम् ), ( त्वम् ) तस्य प्रभवः गीयसे ॥ ५

यदिति। न जायत इत्यजः हे अज ! अपां जलानां अन्तः त्वया यदमोघम् अवन्ध्यं वीर्य्यम् उप्तं निक्षिप्तम्। 'मुक्तम्' इति पाठे विसृष्टमित्यर्थः। "शुक्रं तेजोरेतसी च वीजवीर्य्येन्द्रियाणि च" इत्यमरः। अतः ते वीजात् चराचरं स्थावरजङ्गमात्मकम्। समाहारे द्वन्द्वैकवद्भावः। विश्वं जगत् उत्पन्नमिति शेषः। तस्य विश्वस्य प्रभवत्यस्मादिति प्रभवः कारणं गीयसे। अत्र मनुः—"अप एव ससर्ज्जादौ तासु वीजमवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्" इति ( १, अ० ८, ९, श्लो० )। "अतश्चराचरं विश्वं प्रसवस्तस्य गीयते" इति पाठे अत इदं चराचरं विश्वं तस्य वीजस्य प्रसवो गीयते लोके इति शेषः ॥ ५

अतः हेतौ पञ्चमी। विश्वं प्रभवः इत्यत्र उद्देश्यविधेयान्वयः। तस्य कर्त्तरि षष्ठी। ५

तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।
प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥ ६

अन्वयः । एकस्त्वं तिसृभिः अवस्थाभिः महिमानम् उदीरयन् प्रलयस्थितिसर्गाणां कारणतां गतः ॥ ६

तिसृभिरिति । एकः सृष्टेः प्राक् केवलः त्वं तिसृभिरवस्थाभिः त्रैगुण्यमयीभिः हरिहरब्रह्मस्वरूपाभिः महिमानं निजशक्तिं उदीरयन् विजृम्भयन् प्रलयस्थितिसर्गाणाम् अन्तस्थित्युत्पत्तीनां कारणतां गतः । इदं "पश्चाद्भेदमुपेयुषे" इत्यस्य विवरणम्, अतो न गतार्थत्वदोषः ॥ ६

अवस्थाभिः करणे तृतीया । प्रलयस्थितिसर्गाणामित्यत्र इतरेतरद्वन्द्वः । ६

स्त्रीपुंसावात्मभागौ ते भिन्नमूर्त्तेः सिसृक्षया ।
प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ॥ ७

अन्वयः । स्त्रीपुंसौ सिसृक्षया भिन्नमूर्त्तेस्ते आत्मभागौ, तावेव प्रसूतिभाजः सर्गस्य पितरौ स्मृतौ ॥ ७

भूतसृष्टिकर्तृत्वमुक्त्वा मिथुनसृष्ट्यर्थं मूर्त्तिमतो ब्रह्मणो भेदमाह स्त्रीपुंसाविति । स्त्री च पुमांश्च स्त्रीपुंसौ । 'अचतुरे'त्यादिना (५, ४, ७७ पा० ) अच्प्रत्ययान्तो निपातः । सिसृक्षया स्रष्टुमिच्छया भिन्नमूर्त्तेः द्विधाकृतविग्रहस्य ते तव आत्मनो देहस्य भागौ आत्मभागौ । "आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि" इति विश्वः । तावेव भागौ प्रकृतिभाजः उत्पत्तिभाजः । सृज्यत इति सर्गः तस्य निजसृष्टेरित्यर्थः । माता च पिता च पितरौ । "पिता मात्रे" ति (१, २, ७० पा० ) एकशेषः । स्मृतौ वृद्धैरिति शेषः । अत मनुः—"द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत् । अर्द्धेन नारी तस्यां स विराजमसृजत्प्रभुः" इति ( १ अ०, ३२ श्लो० ) ॥ ७

सिसृक्षया हेतौ तृतीया । आत्मनो देहं द्विधा स्त्रीपुंस्वरूपं भागं कृत्वा जगतां मातापितरौ भवन्तीति भावः ॥ ७

स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते ।
यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ॥ ८

अन्वयः । स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते यौ स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ॥ ८

स्वकालेति । स्वकालस्य परिमाणेन । "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते" इत्युक्तरूपेण व्यस्तम् विभक्तं रात्रिन्दिवम् रात्र्यहनी यस्य तस्य । यद्यपि "अचतुरा" दिसूत्रेण (५, ४, ७७ पा० ) रात्रौ च दिवा च रात्रिन्दिवमिति सप्तम्यर्थे वृत्तौ द्वन्द्व इत्युक्तं, तथापि "दोषामन्यमहः दिवामन्या रात्रि"रित्यादौ कर्मवदत्रापि प्रातिपदिकार्थवृत्तित्वं कथञ्चित्प्रयोगबलादाश्रयणीयम् । ते तव यौ तु स्वप्नावबोधौ तौ एव भूतानां प्रलयोदयौ संहारसृष्टी । यदाहुः—"यदा स देवो जागर्त्ति यदैव चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते" ( मनु १ अ०, ५२ श्लो० ) इति । एतच्च दैनन्दिनसृष्टिप्रलयाभिप्रायकं महाप्रलयस्य ब्रह्मणो वर्षशतान्ते भावित्वात् ॥ ८

स्वकालपरिमाणेन तृतीया करणे हेतौ वा । व्यस्तरात्रिन्दिवस्य, व्यस्तं रात्रिन्दिवं येन । ८

जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः ॥९

अन्वयः । त्वं जगद्योनिः,( स्वयम् ) अयोनिः, त्वं जगदन्तः ( स्वयं ) निरन्तकः, त्वं जगदादिः ( स्वयम् ) अनादिः, त्वं जगदीशः ( स्वयं ) निरीश्वरः ॥ ९

जगदिति । हे भगवन् ! त्वं जगद्योनिः जगत्कारणं स्वयं अयोनिः अनादित्वात् अकारणकः । त्वम् अन्तयतीत्यन्तः पचाद्यच् । जगतः अन्तः जगत्संहर्त्ता स्वयं निरन्तकः नित्यत्वात् अन्तरहितः । त्वं जगतामादिः जगदादिः सृष्टेः प्रागपि सन्नित्यर्थः,अतएव त्वम् अनादिः आदिरहितः । जगतामीशः नियन्ता स्वयं निरीश्वरः अनियम्य इत्यर्थः । "यतो वा इमानि भूतानि जायन्ते" इत्यादि श्रुतिरेवात्र प्रमाणम् । अत्र अयोनिरित्यादौ नञ्तत्पुरुषाश्रयणे विरोधः बहुव्रीहिणा तु तत्परिहार इति विरोधाभासालङ्कारः । यथाहुः—"विरोधाभासत्वे विरोधः" इति ॥ ९

९ । जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः । क्रिया क्रियाद्रव्याभ्यां यद् द्रव्यं द्रव्येण वा मिथः । विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः ॥

आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥१०

अन्वयः। हे भगवन्! त्वं कृतिना आत्मना आत्मानं वेत्सि, (कृतिना) आत्मना आत्मानं सृजसि, (कृतिना) आत्मना आत्मन्येव प्रलीयसे ॥ १०

तव तु प्रपञ्चस्येव जन्मतिरोधानज्ञानेषु परापेक्षेत्याह,—आत्मानमिति। हे भगवन्! त्वम् आत्मानम् लोकानुग्रहार्थं ब्रह्मरूपेण उत्पिपादयिषितं स्वस्वरूपम् आत्मना एव वेत्सि जानासि। सर्वापि क्रिया कर्त्तव्यार्थज्ञानपूर्विकेति भावः। तथा आत्मानम् आत्मनैव आत्मनि एवेत्यत्रापि सम्बध्यते स्वस्मिन्नेव सृजसि। अधिष्ठानमपि स्वयमेव इत्यर्थः, "स्वे महिम्नि प्रतिष्ठितम्" इति श्रुतेः। कृतिना समर्थेन, इदं सर्वत्र सम्बध्यते। आत्मना स्वेनैव आत्मन्येव प्रलीयसे स्वस्मिन्नेव प्रलीनो भवसि। लीयतेर्देवादिकात् कर्त्तरि लट् "प्रकृत्यादिभ्य उपसंख्यान"मिति (२, ३, १८ पा०) वार्त्तिकात् सर्वत्रात्मनेति तृतीया। न हि ते प्रपञ्चस्य इव ज्ञानोत्पत्तिलयेषु परापेक्षेति फलितार्थः॥ १०

विभूतिष्विति। अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा।
ईशित्वञ्च वशित्वञ्च तथा कामावशायिता॥ इत्यष्टधा विभूतयः सन्तीति भावः।१०

द्रवः सङ्घातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥११

अन्वयः। हे भगवन्! (त्वम्) द्रवः, संघातकठिनः, स्थूलः, सूक्ष्मः, लघुः, व्यक्तेतरश्च असि (एवं) विभूतिषु ते प्राकाम्यम्॥ ११

द्रव इति। त्वम् इत्यनुषज्यते। हे भगवन्! त्वं द्रवः सरित्समुद्रादिवत् रसात्मकोऽसि। सङ्घातेन निविड़संयोगेन कठिनः महीधरादिवत्। स्थूलः इन्द्रियग्रहणयोग्यो घटादिवत्। सूक्ष्मः अतीन्द्रियः परमाण्वादिवत्। लघुः उत्पतनयोग्यस्तूलादिवत्। गुरुः हेमाद्रिवत् अचलनीयः। व्यक्तः कार्य्यरूपोऽसि, व्यक्तेतरः कारणरूपश्चासि। एवं विभूतिषु अणिमादिषु ते तव प्रकामस्य भावः प्राकाम्यं यथाकामत्वम्॥ ११

११। विचारः। तत्र तु प्रपञ्चस्य इव जन्मतिरोधानज्ञानेषु न परापेक्षेत्यनेन कर्म्मफलस्य वैयर्थ्यम् ईश्वरस्य निर्लिप्तत्वं न सूचितम्। सर्व्वभूतेषु प्रपञ्चस्य ईश्वरस्य विद्यमानत्वात् सर्व्वमेव सङ्गच्छते।

उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्।
कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥१२

अन्वयः। हे भगवन्! यासाम् उद्घातः प्रणवः, त्रिभिः न्यायैः उदीरणम्, कर्म्म यज्ञः, फलं स्वर्गः त्वं तासां गिरां प्रभवः ॥ १२

उद्घात इति। भगवन्! यासां गिरां वाचाम् उद्घातः उपक्रमः प्रणवः चोङ्कारात्मकः। "ओङ्कारप्रणवौ समौ" इति "स्यादभ्यादानमुद्घात आरम्भः" इति चामरः। इदमुपसंहारस्यापि उपलक्षणम्। "ब्रह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वतः। स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यति" इति मनुः। ... विशेषतः" इति निरुक्तपरिशिष्टयोर्यास्कः। नीयन्ते एभिरर्थविशेषा इति न्यायाः स्वराः। उक्तञ्च,—स्वरविशेषादर्थप्रतिपत्तिः यथेन्द्रशत्रुः स्वरतोऽपराधादिति। यासां गिरां त्रिभिर्न्यायैः उदात्तानुदात्तस्वरितैः स्वरैः उदीरणम् उच्चारणम्। यासां कर्म प्रतिपाद्यमित्यर्थः यज्ञः ज्योतिष्टोमादिः न तु चैत्यवन्दनादिरिति भावः। फलं स्वर्गः कर्म्मद्वारेति शेषः। कर्म्मस्वर्गौ ब्रह्मापवर्गयोरप्युपलक्षणे। त्वं तासां गिरां वेदानामित्यर्थः। प्रभवति अस्मादिति प्रभवः कारणम्। प्रणेता स्मर्त्ता वा मतभेदेन ॥ १२

यासां गिराम् उच्चारणभेदात् पदार्थज्ञानेन प्राणिनः सुखं दुखं च अनुभवन्ति, तासां वेदानां त्वं प्रभवः प्रणेता इत्यर्थः। न्यायैः करणे तृतीया। १२

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम्।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥१३

अन्वयः। [ हे भगवन्! ] त्वां पुरुषार्थप्रवर्त्तिनीं प्रकृतिम् आमनन्ति, त्वामेव तद्दर्शिनम् उदासीनं पुरुषं विदुः ॥ १३

साङ्ख्यमतेन स्तुवन्ति,—त्वामिति। हे भगवन्! त्वां पुरुषस्यार्थौ भोगापवर्गरूपस्तदर्थं प्रवर्त्तित इति पुरुषार्थप्रवर्त्तिनीम् तां प्रकृतिं त्रैगुण्यात्मकं मूलकारणम्। "प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे

इति यादवः । आमनन्ति कथयन्ति । म्ना अभ्यास इति धातोर्लट् । "पाघ्राध्मास्थाम्ने" त्यादिना ( ७, ३, ७८ पा० ) मनादेशः । प्रकृति-पुरुषभेदाग्रहणात् प्रकृतिपुरुषाभेदव्यपदेश. । त्वामेव । तां प्रकृतिं साक्षित्वेन पश्यतीति तद्दर्शिनम् उदासीनं कूटस्थं पुरुषं विदुः विदन्ति । "विदो लटो वे"ति ( ३, ४, ८३ पा० ) झेर्जुसादेशः । "अजामेकां लोहितशुक्लकृष्णाम्" इति श्रुतिरत्र प्रमाणम् ॥ १३

पुरुषार्थप्रवर्त्तिनीमिति ऐहिक सुखानुसन्धानार्थं धावमानां प्रकृतिं पश्यन्तं कूटस्थं स्थूलदेहनिवासिनं त्वामेव पुरुषं जानन्ति । १३

त्वं पितॄणामपि पिता देवानामपि देवता ।
परतोऽपि परश्चासि विधाता वेधसामपि ॥ १४

अन्वयः । हे भगवन् ! त्वं पितॄणामपि पिता, देवानामपि देवता, परतोऽपि परः, वेधसामपि विधाता असि ॥ १४

त्वमिति । भगवन् ! त्वं पितॄणाम् अग्निष्वात्तादीनामपि पिता तेषामपि तर्पणीय इत्यर्थः । देवानाम् इन्द्रादीनामपि देवता तेषामपि यजनीय इत्यर्थः । परतोऽपि परश्चासि सर्वोत्तरोऽसीत्यर्थः । "इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः । मनसश्च परा बुद्धिर्बुद्धेरात्मा महांस्ततः । महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति सर्वोत्तरत्वाभिधानात् । वेधसां दक्षादीनामपि विधाता स्रष्टासि ॥ १४

बहिःपदार्थाः प्रथमं इन्द्रियाणि लभन्ते ततस्तानि विहाय मनो गच्छन्ति, ततः बुद्धिं तदनन्तरं जीवात्मानं त परित्यज्य महात्मानं प्राप्नुवन्ति, ततःपरं यत्र गच्छन्ति तदव्यक्तं ततः परं श्रेष्ठः पुरुषः अस्ति, ततः परं न किमपि भवतीति शेषः । वेधसां षष्ठी कर्मणि । १४

त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः ।
वेद्यञ्च वेदिता चासि ध्याता ध्येयञ्च यत्परम् ॥ १५

अन्वयः । हे भगवन् ! शाश्वतस्त्वमेव हव्यं होता च, भोज्यं भोक्ता च, वेद्यं च वेदिता च, यत् परं ध्येयं तच्च ध्याता च असि ॥ १५

त्वमेवेति । शश्वत्सिद्धः शाश्वतः । शैषिकोऽण् प्रत्ययः, यद्यपि कालाट्ठञिति ठञ् अपवादः, अतएव सूत्रकारस्यापि प्रयोगः ।

"येषाञ्च विरोधः शाश्वतिकः" (२, ४, ९ पा०) इति, तथापि प्रयोगवशात्साधुरिति वामनः इति। शाश्वतः इति प्रयुक्तेः शाश्वतस्त्वमेव हूयत इति हव्यं हविराज्यादिकम्। जुहोतीति होता यजमानश्चासि भोज्यं अभ्यवहार्य्यम्। "भोज्यं भक्ष्ये" (७, ३, ६९ पा०) इति निपातनात् कुत्वाभावः। भोक्ता अन्नादश्चासि। वेद्यं साक्षात्कार्य्यं वस्तु वेदिता साक्षात्कर्त्ता चासि। ध्याता स्मर्त्ता यत्प वस्तु ध्येयं तच्चासि। साक्षात्कारसाधनभूतप्रत्ययविशेषप्रवाहो ध्यानम्॥ १५

शश्वत्शब्दोऽयं कालवाचकोऽव्ययः ततः कथं अण्-प्रत्ययः स्यात्? वृत्तिकारस्तु कालवाचकात् अण्प्रत्ययं विहितवानिति। १५

इति तेभ्यः स्तुतीः श्रुत्वा यथार्था हृदयङ्गमाः।
प्रसादाभिमुखो वेधाः प्रत्युवाच दिवौकसः॥ १६

अन्वयः। वेधाः तेभ्यः इति यथार्थाः हृदयङ्गमाः स्तुतीः श्रुत्वा प्रसादाभिमुखः सन्, दिवौकसः प्रत्युवाच॥ १६

इतीति। वेधाः ब्रह्मा इति तेभ्यः देवेभ्यः। "आख्यातोपयोगे" (१, ४, २९ पा०) इति अपादानत्वात् पञ्चमी। यथार्थाः सत्याः अतएव हृदयं गच्छन्तीति हृदयङ्गमाः मनोहराः। "खच्प्रकरणे गमेः सुप्युपसंख्यानं" (३, २, ३८ पा० वा०) इति खच्प्रत्ययः। "अरुर्द्विषत् अजन्तस्य मुमि"ति (६, ३, ६७ पा०) मुमागमः। स्तुतीः स्तोत्राणि श्रुत्वा प्रसादाभिमुखः अनुग्रहप्रवणः सन् दिवौकसः देवान् प्रत्युवाच॥ १६

तेभ्यः अपादाने पञ्चमी। ६१

पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी॥ १७

अन्वयः। चतुष्टयी शब्दानां प्रवृत्तिः पुराणस्य कवेः तस्य चतुर्मुखसमीरिता सती चरितार्था आसीत्॥ १७

अथ कविराह—पुराणस्येति। द्रव्यगुणक्रियाजातिभेदेन चत्वारोऽवयवा यस्या इति चतुष्टयी चतुर्विधा। "संख्याया अवयवे

तयप्'' (५, २, ४२ पा०) इति तयप् । "टिड्ढाणञ्द्वयसजि"त्यादिना ( ४, १, १५ पा० ) ङीप् । शब्दानां प्रवृत्तिः वैखरीमुखा वाग्वृत्तिः । उक्तञ्च,—"वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा । द्योतितार्था च पश्यन्ती सूक्ष्मा वागनपायिनी" इति पुराणस्य पुरातनस्य पृषोदरादित्वात् साधुः । कवेः कवयितुः तस्य ब्रह्मणः चतुर्भिर्मुखैः समीरिता सती । "तद्धितार्थे"त्यादिना ( १, २, ५१० ) उत्तरपदसमासः । समाहारे चतुर्मुखी स्यात् । चतुर्मुखोच्चारणाच्चातुर्विध्यं सफलमासीदित्यर्थः ॥ १७

शब्दप्रवृत्तिमाह वैखरी पदार्थयोगजानेन प्रवृत्तिः । मध्यमा—कर्णकुहरप्रविष्टेन प्रवृत्तिः । द्योतितार्था—चक्षुर्भ्यां दर्शनेन जाता प्रवृत्तिः । सूक्ष्मा—अनपायिन्या वाचा प्रवृत्तिः । १७

स्वागतं स्वानधीकारान् प्रभावैरवलम्ब्य वः ।
युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥ १८

अन्वयः । हे प्राज्यविक्रमाः ! स्वान् अधीकारान् प्रभावैः अवलम्ब्य युगपत् प्राप्तेभ्यः युगबाहुभ्यः वः स्वागतम् ॥ १८

भगवानाह । स्वागतमिति । हे प्राज्यविक्रमाः ! प्रभूतपराक्रमाः ! देवाः "प्राज्यं भूरि प्रभूतञ्च" इति यादवः । स्वान् स्वकीयान् अधीकारान् नियोगान् । "उपसर्गस्य घञी"ति ( ६, ३, १२२ पा० ) वा दीर्घः । प्रभावैः सामर्थ्यैः अवलम्ब्य आस्थाय । यथाधिकारं स्थित्वा अपीत्यर्थः । युगपत् समकालं प्राप्तेभ्यः युगपत् प्राप्ता महत्कार्य्यमनुमीयत इति भावः । युगबाहुभ्यः दीर्घबाहुभ्यः इत्यर्थः । आजानुबाहुत्वं भाग्यलक्षणम् । वः युष्मभ्यम् । "बहुवचनस्य वस्नसावि"ति ( ८, १, २१ पा० ) वसादेशः । "कर्म्मणा यमभिप्रैती"त्यत्र (१, ४, ३२ पा०) कर्म्मपदेन क्रियाग्रहणात् सम्प्रदानत्वम् । स्वागतं शोभनमागमनम् काकुरत्रानुसन्धेया ॥ १८

१८ । प्रभावैस्तृतीया करणे । प्राज्यविक्रमाः इति—प्राज्यः विक्रमो येषामिति । ( विचारः ) ननु प्राज्यविक्रमाणां देवानां एतादृशी दुर्गतिः कथं स्यात् । ब्रह्मणो वागियं न सङ्गता सत्यं । जगद्वरो तारकः तान् पीड़यितुं शक्नुयात् अन्यथा तस्य का शक्तिरिति ।

किमिदं द्युतिमात्मीयां न बिभ्रति यथा पुरा ।
हिमक्लिष्टप्रकाशानि ज्योतींषीव मुखानि वः ॥ १९

अन्वयः । ( हे वत्साः ! ) हिमक्लिष्टप्रकाशानि ज्योतींषीव वः मुखानि पुरा यथा आत्मीयां द्युतिं न बिभ्रति इदं किम् ॥ १९

किमिति । 'वत्साः' इत्युत्तरश्लोकीयसम्बोधनमत्रापि अनुषञ्जनीयम् । हे वत्साः ! पुत्रकाः हिमेन नीहारेण क्लिष्टप्रकाशानि मन्दप्रभाणि ज्योतींषि नक्षत्राणि इव "दीप्तितारान्हुताशेषु ज्योतिः" इति शाश्वतः । वः युष्माकं मुखानि पुरा यथा पूर्व्वम् इव आत्मीयां द्युतिं न बिभ्रति । इदं किम् ? किंनिबन्धनमित्यर्थः, किमिदमित्यनेन वाक्यार्थः परामृश्यते ॥ १९

१९ । हिमेन क्लिष्टः मन्दः प्रकाशः येषां अतोपमालङ्कारः ।

प्रशमादर्चिषामेतदनुद्गीर्णसुरायुधम् ।
वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते ॥ २०

अन्वयः । अर्चिषां प्रशमात् अनुद्गीर्णसुरायुधम् एतत् वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रि इव लक्ष्यते ( किमिदम् ? ) ॥ २०

उक्तमेव प्रपञ्चयति सप्तभिः श्लोकैः प्रशमादित्यादिभिः,— प्रशमादिति । अर्चिषां तेजसां प्रशमात् निर्व्वाणात् अनुद्गीर्णसुरायुधम् अनुदितचित्रप्रभमित्यर्थः । एतत् वृत्रस्य हन्तुः इन्द्रस्य कुलिशम् वज्रं कुण्ठिता अश्रयो यस्य तत् कुण्ठिताश्रि कुण्ठितकोटि इव लक्ष्यते दृश्यते ॥ २०

२० । प्रशमात् पञ्चमी हेतौ । अर्चिषां कर्त्तरि षष्ठी ; उपमालङ्कारः । वृत्रस्य षष्ठी कर्म्मणि ।

किञ्चायमरिदुर्वारः पाणौ पाशः प्रचेतसः ।
मन्त्रेण हतवीर्य्यस्य फणिनो दैन्यमाश्रितः ॥ २१

अन्वयः । किञ्च अयम् अरिदुर्व्वारः प्रचेतसः पाणौ पाशः मन्त्रेण हतवीर्य्यस्य फणिनः दैन्यम् आश्रितः ( किमेतत् ? ) ॥ २१

किञ्चेति । किञ्चायम् अरिदुर्वारः रिपुदुष्प्रधर्षः प्रचेतसः वरुणस्य । "प्रचेता वरुणः पाशी" इत्यमरः । पाणौ पाशः रज्जुः आयुधविशेषः । मन्त्रेण गारुड़ेन हतवीर्य्यस्य प्रतिबद्धशक्तेः फणिनः सर्पस्य दैन्यं शोच्यत्वम् आश्रितः । अत्र फणिनिष्ठदैन्यस्य पाशे

असम्भवात् दैन्यमिव दैन्यमिति कल्पनात् असम्भवद्वस्तुसम्बन्धो निदर्शनालङ्कारः ॥ २१

अरिदुर्वारः, अरिषु दुर्वारः, दुः—वृ+णिच्+खल् कर्म्मणि । निदर्शनालङ्कारस्य सूत्रमुक्तं पूर्व्वम् । २१

**कुवेरस्य मनःशल्यं शंसतीव पराभवम् ।**
**अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २२**

अन्वयः । अपविद्धगदः (अतएव) भग्नशाखः द्रुम इव ( स्थितः ) कुवेरस्य बाहुः मनः-शल्यं पराभवं शंसतीव ॥ २२

कुवेरस्येति । अपविद्धा त्यक्ता गदा येन सः अपविद्धगदः अत-एव भग्नशाखो द्रुम इव स्थितः कुवेरस्य बाहुः मनःशल्यं दुःखहेतु-त्वात् मनसः शल्यप्रायमित्यर्थः । पराभवं शत्रुकृतमिति शेषः । शंसतीव कथयतीव लक्षणया अनुमापयतीत्यर्थः । बाहौ मुख्य-कथनस्य असम्भवात् इवशब्दोऽपि अतएव ॥ २२

२२ । भग्ना शाखा यस्य सः । अत्रोत्प्रेचानुप्राणित उपमालङ्कार एव ।

**यमोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा ।**
**कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥ २३**

अन्वयः । यमः अपि अस्तमितत्विषा दण्डेन भूमिं विलिखन् अमोघे अपि अस्मिन् निर्व्वाणालातलाघवं कुरुते ॥ २३

यमोऽपीति । अस्तं नाशम् इताः प्राप्ताः अस्तमिति मकारान्त-मव्ययम् । तस्य "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नै"-रिति ( २, १, २४ पा० ) समासः । अस्तमितास्त्विषः यस्य तेन निस्तेजस्केन दण्डेन यमोऽपि भूमिं विलिखन् अमोघेति प्रागिति भावः । अस्मिन् दण्डे निर्वाणालातस्य शान्तोल्मुकस्य । अलातं नाम भूलेखनशलाका तस्य यत् लाघवं क्लैव्यं तत् कुरुते । "अलात-मुल्मुकं ज्ञेयम्" इति हलायुधः । "निर्वाणोऽवाते"इति ( ८, २, ५० पा०) निपातनात् निष्ठानत्वम् । अत्रापि "लाघवमिव लाघव"-मिति कल्पनात् निदर्शनालङ्कारः ॥ २३

दण्डेन तृतीया करणे । २३

अमी च कथमादित्याः प्रतापक्षतिशीतलाः ।
चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥२४

अन्वयः । प्रतापक्षतिशीतलाः अमी ( द्वादश ) आदित्याश्च चित्रन्यस्ता इव प्रकामालोकनीयतां कथं गताः ॥ २४

अमी इति । प्रतापक्षत्या तेजसां क्षयेण शीतलाः अमी आदित्याश्च द्वादशेति शेषः । कथम् ? केन हेतुना इत्यर्थः । चित्रन्यस्ताः चित्रलिखिता इव प्रकामम् अत्यन्तम् आलोकनीयतां दृश्यतां गताः प्राप्ताः ॥ २४

"वरुणार्यमादि यद्वादशात्मदिवाकराः ।
भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥" द्वादश सूर्य्याः । २४

पर्य्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते ।
अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २५

अन्वयः । मरुतां पर्य्याकुलत्वात् वेगभङ्गः अम्भसां प्रतीपगमनात् ओघसंरोध इव अनुमीयते ( किमेतत् ) ॥ २५

पर्य्याकुलत्वादिति । मरुतां वायूनां सप्तसप्तानामिति शेषः । पर्य्याकुलत्वात् स्खलितगतित्वात् हेतोः वेगस्य भङ्गः अम्भसां जलानां प्रतीपगमनात् उत्तानावरोहादित्यर्थः । ओघस्य संरोधः प्रवाहप्रतिबन्धः इव अनुमीयते ॥ २५

प्रतीपगमनात् पञ्चमी हेतौ । २५

आवर्जितजटामौलिविलम्बिशशिकोटयः ।
रुद्राणामपि मूर्द्धानः क्षतहुङ्कारशंसिनः ॥ २६

अन्वयः । आवर्जितजटामौलिविलम्बिशशिकोटयः रुद्राणामपि मूर्द्धानः क्षतहुङ्कारशंसिनः ( भवन्ति, किमेतत् ) ॥ २६

आवर्जितेति । आवर्जितेषु परिभवदुःखावनतेषु जटानां मौलिषु जटाजूटेषु विलम्बिन्यः स्रंसिन्यः शशिकोटयः चन्द्ररेखाः येषां ते तथोक्ताः, रुद्राणामपि एकादशानामिति शेषः । मूर्द्धानः क्षतं हुङ्कारं शंसन्ति इति तथोक्ताः, हुङ्कारक्षयानुमापका इत्यर्थः । हुङ्कारशस्त्रा हि रुद्रा इति भावः ॥ २६

एकादशानां रुद्राणां नामानि ;—अजैकपादः, अहिर्ब्रध्नः, विरूपाक्षः, सुरेश्वरः, जयन्तः, बहुरूपः, त्र्यम्बकः, अपराजितः, सविता, हरः । २६

**लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।**
**अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥२७**

अन्वयः । प्रथमं लब्धप्रतिष्ठाः यूयं बलवत्तरैः परैः उत्सर्गाः अपवादैरिव किं कृतव्यावृत्तयः ॥ २७

लब्धेति । प्रथमं पूर्वं लब्धप्रतिष्ठाः लब्धस्थितयः लब्धावकाशा इति अन्यच । यूयं बलवत्तरैः पौरुषातिरेकात् प्रबलतरैः निरवकाशैरिति अपरच । परैः शत्रुभिः उत्सर्गाः सामान्यशास्त्राणि "मा हिंस्यात्" इत्येवमादीनि । अपोद्यन्ते एभिरिति अपवादैः "गामालभेत" इत्यादिभिः विशेषशास्त्रैः इव किं ? कृतव्यावृत्तयः कृतप्रतिष्ठाभङ्गाः । कृतविषयसङ्कोचरूपबाधा इति अन्यत्र । "विषयसङ्कोच एव बाध" इत्याचार्य्याः । निषेधशास्त्रस्य वैदिकहिंसापरिहारेण लौकिकमात्रे व्यवस्थापनात् विषयसङ्कोच इति अलमतिगहनावगाहनेन ॥ २७

बलवत्तरैः, अपवादैः, परैः तृतीया अनुक्ते कर्त्तरि । यथा "मा हिंस्यादि" त्यादिना सामान्यशास्त्राणि 'गामालभेत' इत्यादिभिः विशेषशास्त्रैः बाध्यन्ते, तथा प्रथमं लब्धप्रतिष्ठाः यूयम् ततः परैः असुरैः कृतव्यावृत्तयः विहितप्रतिष्ठाभङ्गाः भवथ किम् ? इति शेषः । २७ ।

**तद्ब्रूत वत्साः किमितः प्रार्थयध्वं समागताः ।**
**मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ॥२८**

अन्वयः । हे वत्साः समागताः ( यूयम् ) इतः किं प्रार्थयध्वं तत् ब्रूत, मयि लोकानां सृष्टिः, रक्षा युष्मासु अवस्थिता ॥ २८

तदिति । तत् तस्मात् कारणात् हे वत्साः ! पुत्रकाः ! "वत्सस्तर्णकपुत्राद्योर्वर्षे वत्सं वक्षसि" इति विश्वः । स्वयं पितामहत्वात् 'वत्साः' ! इत्यामन्त्रयते । सम्भूय आगताः समागताः इतः मत्तः किं प्रार्थयध्वं किमिच्छतेत्यर्थः । ब्रूत । लोकरक्षणे यूयमेव कर्त्तार इत्याह,—मयि लोकानां सृष्टिः, रक्षा युष्मासु अवस्थिता । अतस्तदर्थमपि नास्ति मदपेक्षेत्यर्थः ॥ २८

२८। इत: पञ्चमी अपादाने। इन्द्रादिनां लोकपालत्वात् तेषु लोकरचा इत्ता। लोकानां कर्म्मणि षष्ठी।

ततो मन्दानिलोद्भूतकमलाकरशोभिना।
गुरुं नेत्रसहस्रेण नोदयामास वासव:॥ २९

अन्वय। तत: वासव: गुरु मन्दानिलोद्भूतकमलाकरशोभिना नेत्रसहस्रेण नोदयामास॥ २९

तत इति। तत: भगवत्प्रश्नानन्तरं वासव: इन्द्र: गुरुं वृहस्पतिम् "गुरुर्गोष्पतिपित्रादौ" इत्यमर:। मन्दानिलोद्भूत: य: कमलाकर: स इव शोभते इति तेन तथोक्तेन नेत्राणां सहस्रेण नोदयामास प्रेरयामास। सहस्र ग्रहणम् आस्थातिशयार्थम्। अनिमेषाणामपि प्रयत्नवशात् अचिस्पन्दो न विरुध्यते॥ २९

नेत्राणां सहस्रं तेन। सहस्रादीनां संख्यावाचकत्वादेकवचनं। आदश्य: संख्या संख्येये वर्त्तते न तु संख्यावचने। तृतीया करणे। २९

स द्विनेत्रं हरेश्चक्षु: सहस्रनयनाधिकम्।
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम्॥ ३०

अन्वय:। हरे: सहस्रनयनाधिकं द्विनेत्रं चक्षु: स वाचस्पति: प्राञ्जलि: सन् जलजासनम् इदम् उवाच॥ ३०

स इति। हरे: इन्द्रस्य। "इन्द्रो दुश्च्यवनो हरि:" इति हलयुध:। सहस्रान्नयनेभ्योऽधिकं सहस्रनयनाधिकं तदगोचरदर्शित्वादिति भाव:। द्वे नेत्रे यस्य तत् द्विनेत्रम्। प्रसिद्धात् चक्षुषोऽयं विशेष इत्यर्थ:। चक्षु: चक्षुर्भूत: चक्षुस्त्वारोपस्य प्रकृतोपयोगात् परिणामालङ्कार:। स वाचस्पति:। कस्कादित्वात् (८, ३, २८ पा०) अलुक्सत्वे। "षष्ठ्या: पतिपुत्रे"त्यादिना (८, ३, ५३ पा०) सत्वमिति स्वामी, तन्न छन्दोविषयत्वात्। प्राञ्जलि: सन् जलजासनं ब्रह्माणम् इदमुवाच॥ ३०

द्विनेत्रं स इत्यादौ उद्देश्यविधेयान्वय:। ३०

एवं यदात्थ भगवन्नामृष्टं न: परै: पदम्।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो॥ ३१

अन्वयः । हे भगवन् (त्वम्) यत् आत्थ (तत्) एवम्, नः पदं परैः आमृष्टम्, हे प्रभो! प्रत्येक विनियुक्तात्मा कथं न ज्ञास्यसि ॥ ३१

एवमिति । हे भगवन्! षड़् गुणैश्वर्य्यसम्पन्न! यदात्थ "हृतव्यावृत्तयः परैरिति" यद्ब्रवीषि । "ब्रुवः पञ्चानाम्" (३, ४, ८४ पा०) इत्यादिनाहादेशः । "वर्त्तमानसामीप्ये वर्त्तमानवद्वे"ति (३, ३, १३१ पा०) वर्त्तमानप्रयोगः । वामनस्तु भ्रान्तोऽयं प्रयोग इत्याह । आहेति भूते णलन्तभ्रमवदिति । आहेत्युपलक्षम् तदेव सत्यम्, नः अस्माकं पदम् अधिकारः परैः शत्रुभिः आमृष्टम् आक्षिप्तम् । हे प्रभो! प्रत्येकं प्रतिपुरुषं विनियुक्तात्मा प्रवेशितस्वरूपः सर्वान्तर्यामीत्यर्थः । कथम्? न ज्ञास्यसि न वेत्सि । वर्त्तमानेऽपि वचनभङ्ग्या भविष्यन्निर्देशः प्रसिद्धः । "अपह्नवे ज्ञः" "अकर्म्मकाच्चे"ति (१, ३, ४४, ४५ पा०) आत्मनेपदविकल्पः ॥ ३१

परैः तृतीया अनुक्ते कर्त्तरि । ३१

भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ ३२

अन्वयः । भवल्लब्धवरोदीर्णः तारकाख्यः महासुरः धूमकेतुरिव लोकानाम् उपप्लवाय उत्थितः ॥ ३२

उक्तमेव प्रपञ्चयति,—भवल्लब्ध इति । भवतः त्वत्तः लब्धेन वरेणोदीर्णः उद्धतः । तारक इत्याख्या नामधेयं यस्य सः तारकाख्यः । महान् असुरः महासुरः । "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमाने"रिति (२, १, ६१ पा०) तत्पुरुषः । धूमकेतुः उत्पातविशेष इव लोकानामुपप्लवाय उपद्रवाय उत्थितः उत्पन्नः ॥ ३२

लोकानां कर्म्मणि षष्ठी । उपप्लवाय चतुर्थी तादर्थ्ये । उत्+ऋ+क्तः, उदीर्णः । ३२

पुरे तावन्तमेवास्य तनोति रविरातपम् ।
दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते ॥ ३३

अन्वयः : अस्य पुरे रविः तावन्तमेव आतपं तनोति यावन्मात्रेण दीर्घिकाकमलोन्मेषः साध्यते ॥ ३३

पुर इति । अस्य तारकस्य पुरि रविः सूर्य्यः तावन्तं तावन्मात्रमेव आतपं तनोति । यावन्मात्रेण यावतैव, यावती मात्रा मितिर्यस्य यावन्मात्रं तेन वा । अल्पपरिमाणेन इत्यर्थः । "मात्रा परिच्छदे । अल्पे च परिमाणे स्यान्मात्रं कार्त्स्न्येऽवधारणे" इत्यमरः । दीर्घिकासु क्रीड़ावापीषु कमलानामुन्मेषः विकाशः साध्यते निष्पाद्यते । कठोरकिरणोऽपि मन्दोष्णः सन्नेव तद्भीत्या पुरि प्रकाशते इत्यभिप्रायः ॥ ३३

यावन्मात्रेण प्रकृत्यादिभ्यस्तृतीया । तस्य शासनात् रवेरीदृशी दशा जाता अन्येषां का कथेति भावः । ३३

सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते ।
नादत्ते केवलां लेखां हरचूड़ामणीकृताम् ॥ ३४

अन्वयः । चन्द्रस्तं सर्व्वदा सर्व्वाभिः कलाभि निषेवते, केवलां हरचूड़ामणीकृतां लेखां न आदत्ते ॥ ३४

सर्वाभिरिति । चन्द्रस्तं तारकं सर्वदा कृष्णपक्षेऽपि इत्यर्थः । सर्वाभिः कलाभिः निषेवते । "कला तु षोड़शो भागः" इत्यमरः । केवलां हरचूड़ामणीकृतां शिवशिरोमणीकृतां लेखां नादत्ते न गृह्णाति ॥ ३४

कलाभिस्तृतीया करणे । ३४

व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ।
न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥ ३५

अन्वयः । वायुः कुसुमस्तेयसाध्वसात् उद्याने व्यावृत्तमतिः सन् तत्पार्श्वे तालवृन्तानिलाधिकं न वाति ॥ ३५

व्यावृत्तेति । वायुः स्तेनस्य भावः कर्म्म वा स्तेयं चौर्य्यम् । स्तेनाद्यन्नलोपश्चे"ति (५, १, १२५ पा० ) यत्प्रत्ययः नलोपश्च । कुसुमानां स्तेयं तस्मात् स्तेयाभियोगात् दण्डात् वा साध्वसं भयं तस्माद्धेतोः उद्याने व्यावृत्तगतिः निवृत्तोद्यानसञ्चारः सन्नित्यर्थः । सापेक्षत्वेऽपि गमकत्वात् समासः । तत्पार्श्वे तत्समीपे तालस्य वृन्तैरुद्ग्रथ्यते तालस्येव वृन्तमस्येति वा तालवृन्तं तस्य अनिलात्

व्यजनसञ्चारपवनात् अधिकं यथा न वाति। "व्यजनं तालवृन्तकम्" इत्यमरः॥ ३५

३५। कुसुमस्तेयसाध्वसात् हेतौ पञ्चमी।

पर्य्यायसेवामुत्सृज्य पुष्पसम्भारतत्पराः।
उद्यानपालसामान्यमृतवस्तमुपासते॥ ३६

अन्वयः। ऋतवः पर्य्यायसेवाम् उत्सृज्य पुष्पसम्भारतत्पराः (सन्तः) उद्यानपालसामान्यं तम् उपासते॥ ३६

पर्य्यायेति। ऋतवः षट् वसन्तादयः पर्य्यायसेवाम् उत्सृज्य पुष्पाणां सम्भारे संग्रहे तत्पराः आसक्ताः सन्त इत्यर्थः। "तत्परे प्रसितासक्तौ" इत्यमरः। उद्यानाधिकृतैः सामान्यं साधारणं यथा भवति तथा तं तारकम् उपासते सेवन्ते,शीतोष्णादिदोषप्रकाशनन्तु दूरापास्तमित्यर्थः॥ ३६

३६। पर्य्यायसेवाम् पर्य्यायेण सेवा ताम् तृतीयातत्पुरुषः। तस्य समीपे चिरमेव वसन्तनामकः ऋतुः विराजते इति भावः।

तस्योपायनयोग्यानि रत्नानि सरितां पतिः।
कथमप्यम्भसामन्तरानिष्पत्तेः प्रतीक्षते॥ ३७

अन्वयः। सरितां पतिः तस्य उपायनयोग्यानि रत्नानि अम्भसाम् अन्तः आ निष्पत्तेः कथमपि प्रतीक्षते॥ ३७

तस्येति। सरितां पतिः समुद्रः तस्य तारकस्य उपायनानां प्राभृतानां योग्यानि। "प्राभृतं तु प्रदेशनं उपायनम्" इत्यमरः। रत्नानि अम्भसामन्तः आ निष्पत्तेः परिपाकपर्य्यन्तम्। विकल्पादसमासः। कथमपि महता यत्नेन प्रतीक्षते, कदा वा परिपच्येरन्नित्येकाग्रेण पालयतीत्यर्थः॥ ३७

३७। समुद्रः तारकाय देययोग्यानि रत्नानि संगृह्य कदा स नेष्यतीति प्रतीक्षते इति शेषः।

ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा निशि।
स्थिरप्रदीपतामेत्य भुजङ्गाः पर्य्युपासते॥ ३८

अन्वयः। ज्वलन्मणिशिखाः वासुकिप्रमुखाः भुजङ्गाश्च निशि स्थिरप्रदीपताम् एत्य एनं पर्य्युपासते॥ ३८

ज्वलदिति। किञ्चेति चार्थः। ज्वलन्त्यो मणीनां शिरोरत्नानां

शिखा: ज्वाला: येषां ते वासुकिप्रमुखा: भुजङ्गा: सर्पा: सिद्धाश्च ध्वन्यन्ते। "भुजङ्ग: सिद्धसर्पयो:" इत्यमर:। निशि स्थिरप्रदीपतां अनिर्वाणदीपत्वम् एत्य एनं तारकं पर्युपासते परिवृत्य सेवन्ते ॥ ३८

३८। य: इलया पृथिवीं चिरं धारयति सोऽपि शिरोरत्नेन तं सेवते। यदा वासुकि: तं सेवितुं तत्र आसीत् तदा क: पृथिवीम् अधारयत्? सत्यं कवेरियं कल्पना।

तत्कृतानुग्रहापेक्षी तं मुहुर्दूतहारितै:।
अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणै: ॥ ३९

अन्वय:। इन्द्र: अपि तत्कृतानुग्रहापेक्षी मुहु दूतहारितै: कल्पद्रुमविभूषणै: तम् अनुकूलयति ॥ ३९

तत्कृतेति। इन्द्रोऽपि तेन तारकेण कृतं तत्कृतमनुग्रहं प्रसादम् अपेक्षते इति तथोक्त: सन् मुहुर्दूतहारितै: दूतप्रापितै: कल्पद्रुमाणां विभूषणै: तत्प्रसूनैरित्यर्थ:। तं तारकम् अनुकूलयति अनुकूलं करोति ॥ ३९

३९। कल्पद्रुमविभूषणैरित्यत्र तृतीया करणे। अनुकूलयति—अनुकूल + तत्करोतीत्यर्थे णिच् न तु चौरादिक: कूलधातुरयम्।

इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जन: ॥ ४०

अन्वय:। (स:) इत्थम् आराध्यमान: अपि भुवनत्रयं क्लिश्नाति। (तथाहि) दुर्जन: प्रत्यपकारेण शाम्येत् न उपकारेण ॥ ४०

इत्थमिति। इत्थम् उक्तप्रकारेण रविशशिपवनोदधिभुजङ्गसुरेन्द्रै: आराध्यमानोऽपि भुवनत्रयं क्लिश्नाति पीड़यति। तथाहि, दुर्जन: प्रत्यपकारेण प्रतीकारेणैव शाम्येत् शान्तो भवेत्, उपकारेण तु न शाम्येत्, प्रत्युत प्रकुप्यतीति भाव: ॥ ४०

४०। प्रत्यपकारेण उपकारेण इत्यत्र तृतीया करणे। शाम्येत् शमादीर्घ: इति दीर्घ:।

तेनामरवधूहस्तै: सदयालूनपल्लवा:।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमा: ॥ ४१

अन्वय:। तेन अमरवधूहस्तै: सदयालूनपल्लवा नन्दनद्रुमा: छेदपातानाम् अभिज्ञा: क्रियन्ते ॥ ४१

तेनेति। तेन तारकेण अमरवधूहस्तै:, सुकुमारैरिति भाव:।

तैरपि सदयम् आलूनाः अवतंसार्थं छिन्नाः पल्लवाः येषां ते नन्दन-द्रुमाः। छेदाश्च पाताश्च छेदपाताः तेषाम् अभिजानन्तीति अभिज्ञाः। कृद्‌योगात् कर्मणि षष्ठी; क्रियन्ते ॥ ४१

४१। तेन अनुक्ते कर्त्तरि तृतीया। अमरवधूहस्तैस्तृतीया अनुक्ते कर्त्तरि करणे वा। अमरवध्वः विलासार्थं येभ्यः पल्लवान् कुसुमानि च सदयम् अवाचिन्वन् साम्प्रतं तान् असुराः छिन्नविच्छिन्नान् कुर्व्वन्तीति भावः।

वीज्यते स हि संसुप्तः श्वाससाधारणानिलैः।
चामरैः सुरवन्दीनां वाष्पशीकरवर्षिभिः॥ ४२

अन्वयः। हि (यस्मात्) सः संसुप्तः (सन्) श्वाससाधारणानिलैः सुरवन्दीनां वाष्पशीकरवर्षिभिः चामरैः वीज्यते ॥ ४२

वीज्यत इति। हि यस्मात् कारणात् सः तारकः संसुप्तः सन् श्वाससाधारणः निश्वाससमानः अनिलः येषां तैः, ततोऽपि आधिक्ये निद्राभङ्गभयादिति भावः। वाष्पशीकरवर्षिभिः तासां स्त्रीणां रोदनस्य अयमवसर इति भावः। सुरवन्दीनां सुरप्रग्रहस्त्रीणां सम्बन्धिभिः। "प्रग्रहोपग्रहौ वन्द्याम्" इत्यमरः। चामरै-र्वीज्यते ॥ ४२

४२। असुरवलगृहीतानां सुराङ्गनानां लज्जावमानाभ्यां निर्गलिताश्रु-विन्दुपतनैः चामरैः वीज्यते इति भावः।

उत्पाट्य मेरुशृङ्गाणि क्षुण्णानि हरितां खुरैः।
आक्रीड़पर्वतास्तेन कल्पिताः स्वेषु वेश्मसु॥ ४३

अन्वयः। (हि यस्मात् कारणात्) तेन हरितां खुरैः क्षुण्णानि मेरुशृङ्गाणि उत्पाट्य स्वेषु वेश्मसु आक्रीड़पर्व्वताः कल्पिताः॥ ४३

उत्पाट्येति। तेन तारकेण हरितां सूर्य्याश्वानाम्। "हरित् सूर्य्ये च सूर्य्याश्वे वर्णे च हरिते दिशि" इति विश्वः। खुरैः शफैः क्षुण्णानि चूर्णितानि। एतेन तेषाम् अत्युन्नत्यं सूचितम्। मेरु-शृङ्गाण्युत्पाट्य स्वेषु वेश्मसु। वेश्मस्विति बहुवचनेन अस्य भुवन-त्रयनिवासः सूचितः। आक्रीड़न्ते एष्विति आक्रीड़ाः, ते च ते पर्वताः कल्पिताः कृताः॥ ४३

४३। खुरैः अनुक्ते कर्त्तरि तृतीया। आक्रीड़पर्व्वताः क्रीडाशैलाः।

मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम् ।
हैमाम्भोरुहसस्यानां तद्वाप्यो धाम साम्प्रतम् ॥४४

अन्वयः । (हि यस्मात् कारणात्) साम्प्रतं मन्दाकिन्याः दिग्वारणमदाविलं पयः शेषं तद्वाप्यो हैमाम्भोरुहसस्यानां धाम ॥ ४४

मन्दाकिन्या इति । साम्प्रतं सम्प्रति मन्दाकिन्याः भागीरथ्याः दिग्वारणानां दिग्गजानां मदैराविलं कलुषं पयः जलमेव शिष्यत इति शेषं शिष्टम् । कर्मणि घञ्प्रत्ययः । त्रिषु अन्यत्रोपयुज्यत इति नपुंसकत्वम् । तर्हि कनककमलानि क्व गतानि ? इत्याह, हैमेति । हैमाम्भोरुहाणि एव सस्यानि तेषान्तु, तस्य वाप्यः तद्वाप्यः एव धाम स्थानम् । सर्वाणि अपि उत्पाद्य स्वदीर्घिकासु एव प्रतिरोपितवान् इत्यर्थः ॥ ४४

४४ । न केवलं सुराङ्गनाः तेन गृहीताः, अपि तु हैमाम्भोरुहसस्यानि उत्पाद्य स्वदीर्घिकासु स्थापितानीति भावः । सर्व्वाणि श्रेष्ठवस्तूनि स्वभवनं निनाय ।

भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानानां तदापातभयात् पथि ॥४५

अन्वयः । तदापातभयात् विमानानां पथि खिलीभूते (सति) स्वर्गिभिः भुवनालोकनप्रीतिः न अनुभूयते ॥ ४५

भुवनेति । तस्य तारकस्य आपातात् समापत्तेः भयात् विमानानां पथि खिलीभूते अप्रहतीभूते सति । "द्वे खिलाप्रहते समे" इत्यमरः । स्वर्गिभिः देवैः भुवनानामालोकने प्रीतिर्नानुभूयते ॥४५

४५ । तदापातभयात् (तारकागमनशङ्कया) हेतौ पञ्चमी । पथि खिलीभूते, विमानागमनभावेनापरिष्कृतत्वात् रुद्धे इति भावः । स्वर्गिभिरनुक्ते कर्त्तरि तृतीया ।

यज्वभिः सम्भृतं हव्यं विततेष्वध्वरेषु सः ।
जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः ॥४६

अन्वयः । मायी सः विततेषु अध्वरेषु यज्वभिः सम्भृतं हव्यं नः मिषतां जातवेदोमुखात् आच्छिनत्ति ॥ ४६

यज्वभिरिति । यज्वभिः विधिवत् इष्टवद्भिः "यज्वा तु विधिनेष्टवान्" इत्यमरः । "सुयजोर्ङ्वनिप्" (३, २, १०३ पा०) इति ङ्वनिप्प्रत्ययः । विततेषु अध्वरेषु यज्ञेषु सम्भृतं दत्तं हव्यं हविः मायी मायावी व्रीह्यादित्वात् (५, २, ११६ पा०) इनिप्रत्ययः ।

सः तारकः नः अस्माकं मिषतां पश्यतां पश्यत्सु सत्सु इत्यर्थः। "षष्ठी च अनादरे" ( २, ३, ३ पा० ) इति षष्ठी। जातवेदा वह्निरेव मुखं तस्मात् जातवेदोमुखात् आच्छिनत्ति आच्छिद्य गृह्णातीत्यर्थः॥ ४६

४६। यज्वभिः अनुक्ते कर्त्तरि तृतीया। जातवेदोमुखात् पञ्चमी अपादाने।

उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च।

देहबद्धमिवेन्द्रस्य चिरकालार्जितं यशः॥४७

अन्वयः। तेन इन्द्रस्य देहबद्धं चिरकालार्जितम् यशः इव हयरत्नं उच्चैः उच्चैःश्रवाः अहारि च॥ ४७

उच्चैरिति। किञ्चेति चार्थः। तेन तारकेण उच्चैः उन्नतः उच्चैःश्रवाः नाम हयो रत्नमिव हयरत्नम् अश्वश्रेष्ठः। "रत्नं श्रेष्ठे मणावपि" इति विश्वः। अस्य शुभ्रत्वात् उत्प्रेक्षते,—देहबद्धं बद्धदेहं मूर्त्तिमदित्यर्थः। आहिताग्न्यादित्वान्निष्ठयाः ( २, २, ३७ पा० ) परनिपातः। चिरकालार्ज्जितम् इन्द्रस्य यश इव अहारि अपहृतम्॥ ४७

४७। स तारकः उच्चैःश्रवसः हरणेन इन्द्रस्य चिरसञ्चितं यशोऽपि हृतवानिति।

तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः।

वीर्य्यवन्त्यौषधानीव विकारे सान्निपातिके॥४८

अन्वयः। ( यस्मात् ) क्रूरे तस्मिन् नः सर्व्वे उपायाः सान्निपातिके विकारे वीर्य्यवन्ति औषधानीव प्रतिहतक्रियाः ( भवन्ति )॥ ४८

तर्हि सामाद्युपायास्तत्र कथं न प्रयुक्ताः? इत्यत्राह,—तस्मिन्निति। क्रूरे घातुके। "नृशंसो घातुकः क्रूर" इत्यमरः। तस्मिन् असुरे नः अस्माकं सर्वे उपायाः सन्निपातदोषत्रयस्य प्रकोपजे सान्निपातिके विकारे ज्वरादौ। "सन्निपाताच्चे"ति ( ५, ३१ पा० वा० ) वक्तव्यात् ठञ्। वीर्य्यवन्ति सारवन्ति औषधानीव प्रतिहतक्रियाः विफलप्रयोगाः भवन्ति॥ ४८

४८। यथा सान्निपातिके विकारे वीर्य्यवन्ति औषधानि विफलानि, तथा निखिलानि अस्माकं सहास्त्राणि तस्मिन् तारके प्रतिहतानि भवन्तीति भावः।

जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषः।

हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम्॥४९

अन्वयः । किञ्च ( यस्मात् ) यत्र अस्माकं जयाशा ( आसीत् ), प्रतिघातोत्थितार्च्चिषा तेन हरिचक्रेण अस्य कण्ठे निष्कम् इव अर्पितम् ॥ ४९

तदेव प्रतिहर्त्ताक्रियत्वमाह, जयेति । किञ्चेति चार्थः । नूनमनेन हरिचक्रेण वयं जेष्याम इति यत्र हरिचक्रे अस्माकं जयाशा विजयाशंसा आसीदिति शेषः । प्रतिघातेन प्रतिहत्या उत्थितार्च्चिषा उद्गततेजसा तेन हरिचक्रेण विष्णोः सुदर्शनेन अस्य तारकस्य कण्ठे निष्कं उरोभूषणं अर्पितमिव इत्युत्प्रेक्षा । स्वयमेव निष्कमिव स्थितम् इत्यर्थः । तारकशिरश्छेदाय हरिणा चक्रं त्यक्तं, तदपि नष्टशक्ति जातमिति भावः । "साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री" इत्यमरः ॥४९

४९ । यस्मिन् सुदर्शने अस्माकं जयाशा अभवेत् तत् सुदर्शनं निक्षिप्तं सत् तस्य कण्ठं न छित्वा तव हारेण तुल्यं स्थितं ।

तदीयास्तोयदेष्वद्य पुष्करावर्त्तकादिषु ।
अभ्यस्यन्ति तटाघातं निर्जितैरावता गजाः ॥५०

अन्वयः । अद्य निर्जितैरावताः तदीयाः गजाः पुष्करावर्त्तकादिषु तोयदेषु तटाघातम् अभ्यस्यन्ति ॥ ५०

तदीया इति । अद्य सम्प्रति निर्ज्जितः ऐरावतः यैः ते तथोक्ताः, तस्य तारकस्य इमे तदीयाः गजाः । पुष्कराश्च आवर्तकाश्च नाम आदयः येषां तेषु तोयदेषु मेघेषु तटाघातं वप्रक्रीड़ां अभ्यस्यन्ति ।५०

५० । इन्द्रस्य पराभवत्वात् साम्प्रतं ऐरावतादयो येषु मेघेषु चाक्रीड़न् तेषु असुरगजाः क्रीड़न्तीति भावः ।

तदिच्छामो विभो ! स्रष्टुं सेनान्यं तस्य शान्तये ।
कर्म्मबन्धच्छिदं धर्म्मं भवस्येव मुमुक्षवः ॥५१

अन्वयः । हे विभो ! तत् मुमुक्षवः भवस्य (शान्तये) कर्म्मबन्धच्छिदं धर्म्ममिव तस्य शान्तये सेनान्यं स्रष्टुम् इच्छामः ॥ ५१

तदिति । तत् तस्मात् कारणात् हे विभो ! स्वामिन् ! मोक्तुं भवं त्यक्तुम् इच्छवो मुमुक्षवः विरक्ताः भवस्य संसारस्य शान्तये निवृत्तये कर्म्मैव बन्धः तं छिनत्तीति कर्मबन्धच्छित् तं धर्ममिव आत्मज्ञानहेतुभूतमिति शेषः । "तमेव विदित्वातिमृत्युमेतीति" ज्ञानादेव मुक्तिः । तस्य तारकस्य शान्तये नाशाय । सेनां नयतीति सेनानीः चमूपतिः । "सत्सूद्विषे"त्यादिना ( ३, २, ६१ पा० )

क्विप्। तं सेनान्यं कञ्चित् स्रष्टुमिच्छामः वयमिति शेषः ॥५१

५१। शान्तये चतुर्थी निमित्तार्थे। मुच्+सन्+डः।

गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित्।
प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव जयश्रियम् ॥ ५२

अन्वयः। गोत्रभित् सुरसैन्यानां गोप्तारं यं पुरस्कृत्य जयश्रियं बन्दीमिव शत्रुभ्यः प्रत्यानेष्यति ॥ ५२

सेनानीसृष्टेः फलमाह—,—गोप्तारमिति। सुरसैन्यानां देवता-सेनानां गोप्तारं रक्षितारं यं सेनान्यं पुरस्कृत्य पुरोधाय "पुरो-ऽव्ययमि"ति ( १, ४, ६७ पा० ) गतित्वात् "नमस्पुरसोर्गत्योः" ( ८, ३, ४० पा० ) इति सकारः। गां पृथ्वीं त्रायन्त इति गोत्रास्तान् भिनत्तीति गोत्रभित् इन्द्रः जयश्रियं बन्दीकृतां स्त्रियमिव शत्रुभ्यः सकाशात् प्रत्यानेष्यति प्रत्याहरिष्यति, तं स्रष्टुम् इति पूर्वेण सम्बन्धः ॥५२

५२। सुरसैन्यानां षष्ठी कर्मणि। शत्रुभ्यः पञ्चमी अपादाने।

वचस्यवसिते तस्मिन् ससर्ज गिरमात्मभूः।
गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा ॥ ५३

अन्वयः। तस्मिन् वचसि अवसिते आत्मभूः गिरं ससर्ज। सा सौभाग्येन गर्जितानन्तरां वृष्टिं जिगाय ॥ ५३

वचसीति। तस्मिन् वार्हस्पत्ये वचसि अवसिते परिसमाप्ते सति आत्मभूः ब्रह्मा गिरं वाचं ससर्ज्ज जगाद इत्यर्थः। सा गीः सौभाग्येन मनोहरत्वेन। "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" ( ७, ३, १९ पा० ) इत्युभयपदवृद्धिः। गर्जितात् गर्जितस्य वा अनन्तरं प्रवृत्तां वृष्टिं जिगाय जितवती। गर्जितपरत्वाद्वृष्टेरिव तद्वृद्धापन-फलत्वात् गिरः सुभगत्वमिति भावः ॥५३

५३। वचसि सप्तमी भावे। सौभाग्येन हेतौ तृतीया। आत्मना भवतीति आत्मभूः।

सम्पत्स्यते वः कामोऽयं कालः कश्चित् प्रतीक्ष्यताम्।
न त्वस्य सिद्धौ यास्यामि सर्गव्यापारमात्मना ॥ ५४

अन्वयः। अयं वः कामः सम्पत्स्यते ( युष्माभिः ) कश्चित् कालः प्रतीक्ष्यताम्, अस्य तु सिद्धौ आत्मना सर्गव्यापारं न यास्यामि ॥ ५४

सम्पत्स्यत इति। अयं वः युष्माकं कामः मनोरथः सेनानीरूपः

सम्पत्स्यते सेत्स्यति। कश्चित् कियानपि कालः प्रतीक्ष्यतां; तु किन्तु तस्य सेनान्यः सिद्धौ सिद्धिविषये आत्मना स्वयं सर्गः सृष्टिरेव व्यापारः तं न यास्यामि नाहं स्रक्ष्यामीत्यर्थः॥ ५४

५४। आत्मना तृतीया प्रकृत्यादित्वात्।

**इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्।**
**विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्॥ ५५**

अन्वयः। इतः प्राप्तश्रीः सः दैत्यः इतः एव क्षयं नार्हति। तथाहि विषवृक्षः अपि संवर्द्ध्य स्वयं छेत्तुम् असाम्प्रतम्॥ ५५

कुत इत्याशङ्क्याह,—इत इति। इतः मत्त एव प्राप्तश्रीः लब्धोदयः स दैत्यः तारकासुरः इतः मत्त एव क्षयं नाशं नार्हति। तथाहि,—अन्यो वृक्षस्तावदास्तां, विषस्य वृक्षः विषवृक्षोऽपि संवर्द्ध्य कुतश्चित्कारणात् सम्यक् वर्द्धयित्वा स्वयं छेत्तुम् असाम्प्रतं अनर्हः। असाम्प्रतमित्यनेन निपातेन अभिहितत्वात् वृक्ष इति द्वितीयान्तो न भवति, अनभिहिते कर्म्मणि द्वितीयाभिधानात्। यथाह वामनः—"निपातेनापि अभिहिते कर्मणि न विभक्तिः, परिगणनस्य प्रायिकत्वात्" इति॥ ५५

५५। इतः पञ्चमी अपादाने। विषवृक्षोऽपि अव्ययोगे प्रथमा।

**वृतं तेनेदमेव प्राङ्मया चास्मै प्रतिश्रुतम्।**
**वरेण शमितं लोकानलं दग्धुं हि तत्तपः॥ ५६**

अन्वयः। प्राक् तेन इदमेव वृतं, मया च अस्मै इदं प्रतिश्रुतम्। लोकान् दग्धुम् अलं तत्तपः वरेण शमितं हि (मया)॥ ५६

वृतमिति। प्राक् पूर्वं तेन असुरेणेदमेव देवैरवध्यत्वमेव वृतं प्रार्थितम्। मया चास्मै तारकाय प्रतिश्रुतं प्रतिज्ञातम्। "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ते"ति (१, ४, ४० पा०) सम्प्रदानत्वाच्चतुर्थी। कर्त्तव्यश्चेतदित्याह,—लोकान् दग्धुम् अलम् शक्तम्। "पर्य्याप्तिवचनेषु अलमर्थेषु" इति (३, ४, ६६ पा०) तुमुन्प्रत्ययः। तस्य तपः तत्तपः, वरेण वरदानेन शमितं हि मयेति शेषः॥ ५६

५६। तेन अनुक्ते कर्त्तरि तृतीया। अस्मै प्रतिपूर्व्वक श्रु धातोः योगे चतुर्थी। वरेण तृतीया करणे।

संयुगे सांयुगीनं तमुद्यन्तं प्रसहेत कः।
अंशादृते निषिक्तस्य नीललोहितरेतसः॥ ५७

अन्वयः। संयुगे उद्यन्तं सांयुगीनं तं निषिक्तस्य नीललोहितरेतसः अंशात् ऋते कः प्रसहेत॥ ५७

संयुग इति। संयुगे युद्धे उद्यन्तम् व्याप्रियमाणम्। संयुगे साधुं सांयगीनम्। "प्रतिजनादिभ्यः खञिति (४, ४, ९९ पा०) खञ्प्रत्ययः। तं तारकं निषिक्तस्य क्वचित् क्षेत्रे क्षरितस्य। नीलः कण्ठे लोहितश्च केशेषु" इति नीललोहित इति पुराणमति स्वामी। तस्य नीललोहितस्य धूर्जटेः रेतसः शुक्रस्य अंशादृते अंशं विना अन्यः कः प्रसहेत अभिभवेत्। प्रसहनमभिभव इति वृत्तिकारः॥ ५७

५७। ब्रह्मा युद्धे शिवसम्भवः तारकं सोढ़ुं शक्नुयात् इति तान् देवान् उपादिशत्।

स हि देवः परं ज्योतिस्तमःपारे व्यवस्थितम्।
परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना॥ ५८

अन्वयः। स हि देवः तमःपारे व्यवस्थितं परं ज्योतिः। (अतएव) मया न परिच्छिन्नप्रभावर्द्धिः (तथा) विष्णुना च (न परिच्छिन्नप्रभावर्द्धिः भवति)॥ ५८

कथमसावीदृक्शक्तिः? इत्याह,—स इति। स देवः नीललोहितः तमसः पारे परतः व्यवस्थितं तमोगुणातीतं परं ज्योतिः परमात्मा हि अतएव मया परिच्छिन्नप्रभावर्द्धिः अवगाढ़महिमातिशयो न भवति,तथा विष्णुना च न, अतस्तस्य असाध्यं नास्तीत्यर्थः॥५८

५८। मया, विष्णुना—तृतीया अनुक्ते कर्त्तरि। परिच्छिन्नः प्रभावः तेन ऋद्धिः यस्य सः।

उमारूपेण ते यूयं संयमस्तिमितं मनः।
शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लौहवत्॥ ५९

अन्वयः। ते यूयम् उमारूपेण शम्भोः संयमस्तिमितं मनः अयस्कान्तेन लौहवत् आक्रष्टुं यतध्वम्॥ ५९

सम्प्रति तदंशोत्पत्तौ उपायं दर्शयति, उमेति। ते कार्य्यार्थिनः यूयं संयमस्तिमितं समाधिनिश्चलं शम्भोर्मनः उमारूपेण उमासौन्दर्य्येण। "रूपं स्वभावे सौन्दर्य्ये नाणके पशुशब्दयोः। ग्रन्थावृत्तौ नाट-

कादावाकारश्लोकयोरपि" इति विश्वः। अयस्कान्तेन मणिविशेषेण 'कस्कादिषु चे'ति (८, ३, ४८ पा०) सकारः। लौहवत् अयोधातुमिव। "तेन तुल्यं क्रिया चेद्वति"रिति (५, १, ११५ पा०) वतिप्रत्ययो मृग्यः। आक्रष्टुम् आहर्तुं यतध्वं उद्युक्ता भवत॥ ५९

५९। उमारूपेण तृतीया करणे। अयस्कान्तेन तृतीया करणे।

उभे एव क्षमे वोढुमुभयोर्वीजमाहितम्।
सा वा शम्भोस्तदीया वा मूर्त्तिर्जलमयी मम॥ ६०

अन्वयः। उभयोः आहितं वीजं वोढुं सा उमा वा शम्भोः तदीया जलमयी मूर्त्तिः वा मम उभे एव क्षमे॥ ६०

न च गत्यन्तरमस्तीत्याह,—उभे इति। उभयोः शम्भोर्मम च आहितं निषिक्तं वीजं वोढुं सोढुम् सा वा उमा शम्भोरष्टमूर्त्तेः तस्य इयं तदीया जलमयी मूर्त्तिर्वा मम उभे एव क्षमे न तृतीयेत्यर्थः। वा शब्दो द्वन्द्वार्थे न तु अन्यार्थे। एतदेव उदाहृत्य इत्थमेव व्याख्यातं गणव्याख्याने। अत्र दीपकालङ्कारः। प्राकरणिकयोः उमामहेश्वरयोः अप्राकरणिकयोः ब्रह्मजलमूर्त्त्योश्च औपम्यस्य गम्यत्वात्। यथाह भोजराजः,—"प्रस्तुतानामप्रस्तुतानाञ्चौपम्यस्य गम्यत्वे दीपकम्" इति। न च इयं तुल्ययोगिता, तस्याः केवलप्रस्तुतत्वेन केवलाप्रस्तुतत्वेन च उत्थानादिति॥ ६०

६०। जल+मयट्+ङीप्। दीपकालङ्कारः यथा—अप्रस्तुतप्रस्तुतयो र्दीपकं तु निगद्यते। अथ कारकमेकं स्यादनेकासु क्रियासु चेत्। दर्पणः।

तस्यात्मा शितिकण्ठस्य सैनापत्यमुपेत्य वः।
मोक्ष्यते सुरवन्दीनां वेणीर्वीर्य्यविभूतिभिः॥ ६१

अन्वयः। तस्य शितिकण्ठस्य आत्मा वः सैनापत्यम् उपेत्य वीर्य्यविभूतिभिः सुरवन्दीनां वेणीः मोक्ष्यते॥ ६१

तस्येति। तस्य शितिकण्ठस्य अष्टमूर्त्तेः आत्मा पुत्र इत्यर्थः। "आत्मा वै पुत्रनामासि" इति श्रुतेः। वः युष्माकं सेनापतेर्भावः सैनापत्यम्। "पत्यन्तपुरोहितादिभ्यो यगि"ति (५, १, १२८ पा०) यक्प्रत्ययः। उपेत्य प्राप्य वीर्य्यविभूतिभिः शौर्य्यसम्पत्तिभिः सुरवन्दीनां वेणीर्मोक्ष्यते विस्रंसयिष्यति तारकासुरं हनिष्यतीति भावः॥ ६१

६१। वीर्य्यविभूतिभिः तृतीया करणे हेतौ वा।

इति व्याहृत्य विबुधान् विश्वयोनिस्तिरोदधे ।
मनस्याहितकर्त्तव्यास्तेऽपि देवा दिवं ययुः ॥ ६२

अन्वयः । विश्वयोनिः विबुधान् इति व्याहृत्य तिरोदधे ते देवा अपि मनसि आहितकर्त्तव्याः दिवं ययुः ॥ ६२

इतीति । विश्वस्य योनिः कारणम् । "योनिः स्त्रीणां स्थानभेदे कारणे तात्त्विके पणे" इति वैजयन्ती । विबुधान् सुरान् इति व्याहृत्य अभिधाय तिरोदधे अन्तर्हितवान् । ते देवा अपि मनसि आहितं कर्त्तव्यं यैः ते तथोक्ताः सन्तः दिवं स्वर्गं ययुः प्रापुः ॥ ६२

६२ । विश्वेषां योनिः ।

तत्र निश्चित्य कन्दर्पमगमत् पाकशासनः ।
मनसा कार्य्यसंसिद्धित्वराद्विगुणरंहसा ॥ ६३

अन्वयः । पाकशासनः तत्र कन्दर्पं निश्चित्य कार्य्यसंसिद्धित्वरा द्विगुणरंहसा मनसा अगमत् ॥ ६३

तत्रेति । पाकः नाम कश्चिदसुरः तस्य शासनः इन्द्रः, तत्र हरचित्ताकर्षणकृत्ये कन्दर्पं निश्चित्य साधकत्वेनेति शेषः । कार्य्यसंसिद्धौ त्वरया औत्सुक्येन द्वौ गुणौ यस्य तत् द्विगुणं द्विरावृत्तं रंहः वेगो यस्य तेन तथोक्तेन । "गुणस्तु वृत्तिशब्दादिज्येन्द्रियामुख्यजन्तुषु" इति वैजयन्ती । मनसा अगमत्, सस्मार इत्यर्थः । गमेर्लुङ् च्लेरङादेशः ॥ ६३

६३ । मनसा उपलक्षणे तृतीया ।

अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥ ६४

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
ब्रह्माभिगमनो नाम द्वितीयः सर्गः ॥ २

अन्वयः । अथ स पुष्पधन्वा ललितयोषिद्भ्रूलताचारुशृङ्गं चापं रतिवलयपदाङ्के कण्ठे आसज्य सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः प्राञ्जलिः (सन्) शतमखम् उपतस्थे ॥ ६४

अर्थेति । अथ स्मरणानन्तरं स स्मृत इत्यर्थः । पुष्पं धनुः यस्य सः पुष्पधन्वा कामः । "वा संज्ञायाम्" ( ५, ४, १३३ पा० ) इत्यनङ् । "ललितं त्रिषु सुन्दरम्" इत्यमरः । ललितायाः सुन्दर्य्याः योषितः भ्रुवौ लते इव चारुणी शृङ्गे कोटी यस्य तत् तथोक्तं चापम् । रतिः स्मरप्रिया । "रतिः स्मरप्रिया" इत्यमरः । तस्याः वलयपदानि कङ्कणस्थानानि अङ्कः चिह्नं यस्य स तथोक्ते कण्ठे आसज्य लगयित्वा । चापकण्ठविशेषणाभ्यां शृङ्गारैकनिधेः त्रिभुवनैकवीरस्य शृङ्गारवीरोपकरणेषु तुल्यरसत्वं व्यज्यते । सहचरस्य सख्युः मधोः वसन्तस्य हस्ते न्यस्तं चूताङ्कुरम् एव अस्त्रं यस्य स तथोक्तः । प्राञ्जलिः कृताञ्जलिः सन् शतमखम् इन्द्रम् उपतस्थे सङ्गतवान् । सङ्गतिकरणार्थात् ( १, ३, २५ पा० वा० ) आत्मनेपदम् । अत्र स्वभावोक्तिः "स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनम्" इति । मालिनीवृत्तमेतत् । "ननमयययुतेयं मालिनी भोगिलोकैः" इति तल्लक्षणात् ॥ ६४

इतिश्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथ सूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां द्वितीयः सर्गः ॥२

६४ । पुष्पधन्वा—पुष्पाणि एव धनुर्यस्य ; धनुर्धन्वनः वाचः नाम्नीति धन्वनादेशः ।

## तृतीयः सर्गः ।



तस्मिन् मघोनस्त्रिदशान् विहाय
सहस्रमक्ष्णां युगपत् पपात ।
प्रयोजनापेक्षितया प्रभूणां
प्रायश्चलं गौरवमाश्रितेषु ॥ १

अन्वयः । मघोनः अक्ष्णां सहस्रं त्रिदशान् विहाय तस्मिन् युगपत् पपात । प्रायः प्रभूणाम् आश्रितेषु गौरवं प्रयोजनापेक्षितया चलम् ॥ १

तस्मिन्निति । मघोनः इन्द्रस्य अक्ष्णां सहस्रं, त्रिरावृत्ता दश परिमाणमेषामिति त्रिदशान् देवान् । "संख्ययाव्ययासन्नादूराधिक-संख्याः संख्येये ( २, २, २५ पा० ) इति बहुव्रीहिः । "बहुव्रीहौ संख्येये"–( ५, ४, ७३, पा० ) इति डच्प्रत्ययः । उक्तार्थत्वात् सुचो निवृत्तिः । विहाय त्यक्त्वा तस्मिन् कामे युगपत् पपात । सहस्रेण अक्षिभिः अद्राक्षीत् इत्यादरातिशयोक्तिः । ननु सुचिर-परिचितानेकसुरपरित्यागेन भगवतो महेन्द्रस्य कथम् अकाण्डे तस्मिन्नेकस्मिन् पक्षपातः ? इत्याशङ्क्य अर्थान्तरं न्यस्यति,—प्रायः भूम्ना प्रभूणामाश्रितेषु सेवकेषु विषये गौरवम् आदरः प्रयोजना-पेक्षितया कार्य्यार्थित्वेन हेतुना चलं चञ्चलम् । फलतन्त्राः प्रभवो नतु गुणतन्त्रा इति भावः ॥ १

१ । प्रयोजनापेक्षितया तृतीया हेतौ । कर्म्मप्रियाः प्रभवः आश्रितानां गुणं कदापि नाद्रियन्ते तेषांतु कार्य्यमेव आद्रियन्ते इति भावः ।

स वासवेनासनसन्निकृष्ट-
मितो निषीदेति विसृष्टभूमिः ।
भर्त्तुः प्रसादं प्रतिनन्द्य मूर्ध्ना
वक्तुं मिथः प्राक्रमतैवमेनम् ॥ २

अन्वयः । सः वासवेन आसनसन्निकृष्टम् इतो निषीद इति विसृष्टभूमिः ( सन् ) भर्त्तुः प्रसादं मूर्ध्ना प्रतिनन्द्य मिथः एनम् एवं वक्तुं प्राक्रमत ॥ २

स इति। स कामः वासवेन इन्द्रेण आसनस्य सिंहासनस्य सन्निकृष्टं सन्निहितम् आसनसन्निकृष्टं यथा तथा। शेषषष्ठ्यायं समासः कृद्योगलक्षणया तु न। "न लोकाव्ययनिष्ठाखलर्थतृना-मि"ति (२, ३, ६९ पा०) षष्ठीनिषेधात्। इतो निषीद इह उपविश इति विसृष्टभूमिः दत्तावकाशः सन् भर्त्तुः स्वामिनः प्रसा-दम् अनुग्रहं मूर्द्ध्ना प्रतिनन्द्य सम्भाव्य, मिथः रहसि। "मिथोऽन्यो-ऽन्यं रहस्यपि" इत्यमरः। एनम् इन्द्रम् एवं वक्ष्यमाणप्रकारेण वक्तुं प्राक्रमत उपक्रान्तवान्। "प्रोपाभ्यां समर्थाभ्याम्" (१, ३, ४२ पा०) इत्यात्मनेपदम्॥ २

२। वासवेन अनुक्ते कर्त्तरि तृतीया। इतः अधिकरणे सप्तमी। भर्त्तुः कर्त्तरि षष्ठी। मूर्द्ध्ना तृतीया करणे।

आज्ञापय ज्ञातविशेष पुंसां
लोकेषु यत् ते करणीयमस्ति।
अनुग्रहं संस्मरणप्रवृत्त-
मिच्छामि संवर्द्धितमाज्ञया ते॥ ३

अन्वयः। (हे) पुंसां ज्ञातविशेष! लोकेषु ते यत् करणीयम् अस्ति, (तत्) आज्ञापय संस्मरणप्रवृत्तं ते अनुग्रहम् आज्ञया संवर्द्धितम् इच्छामि। ३

आज्ञापयेति। हे पुंसां ज्ञातविशेष! ज्ञातसार! ज्ञातपुंविशेषे-त्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। आज्ञापय,तदिति शेषः। उत्तरवाक्ये यच्छब्दप्रयोगात् न पूर्ववाक्ये तच्छब्दप्रयोगनिर्बन्धः। किं तदित्याह,—लोकेषु ते तव यत् करणीयं कर्त्तव्यम् अस्ति। संस्मरणेन प्रवृत्तम् उत्पन्नं ते तव अनुग्रहं प्रसादम् आज्ञया नियोगेन संवर्द्धितं वृद्धिं गमितम् इच्छामि संस्मरणजातमनुग्रहं केनचित् नियोगेन वर्द्धय क्वचित् कर्मणि नियुङ्क्ष्व इत्यर्थः। अन्यथा मे नास्ति परितोष इति भावः। तुमुन्नन्तपाठे णिजर्थे यत्नः कार्य्यः॥३

३। आज्ञया अनुक्ते कर्त्तरि तृतीया; ते अनुक्ते कर्त्तरि षष्ठी। पूर्ववाक्ये प्रयुक्तस्य यत् शब्दस्य उत्तरवाक्ये ऊहनीये तत् शब्दे नित्यसम्बन्धः योज्यते।

केनाभ्यसूया पदकाङ्क्षिणा ते
नितान्तदीर्घैर्जनिता तपोभिः।

यावद्भवत्याहितसायकस्य
मत्कार्मुकस्यास्य निदेशवर्त्ती ॥ ४

अन्वयः। पदकाङ्क्षिणा केन (पुंसा) नितान्तदीर्घैः तपोभिः ते अभ्यसूया जनिता? (तं ब्रूहि) यावत् (सः) आहितसायकस्य अस्य मत्कार्मुकस्य निदेशवर्त्ती भवति ॥ ४

न च मे किञ्चिदसाध्यमस्तीत्याह—केनेति। पदकाङ्क्षिणा स्वाराज्यकामेन केन पुंसा नितान्तदीर्घैः अतिप्रभूतैस्तपोभिः ते तव अभ्यसूया ईर्ष्या जनिता, तं ब्रूहीति शेषः। किमर्थं? यावत् यतः स भवद्वैरी आहितसायकस्य संहितबाणस्य अस्य मत्कार्मुकस्य निदेशे वर्त्तते इति निदेशवर्त्ती आज्ञावशो भवति अविलम्बेनैव भविष्यतीत्यर्थः। "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" (३, ३, १३१ पा०) इति लट् ॥ ४

४। केन अनुक्ते कर्त्तरि तृतीया; तपोभिः तृतीया करणे। अत्र उत्तरवाक्ये यावत्-शब्दोऽयं निरनुबन्धोऽस्तीति भावः।

असम्मतः कस्तव मुक्तिमार्गं
पुनर्भवक्लेशभयात् प्रपन्नः।
बद्धश्चिरं तिष्ठतु सुन्दरीणा-
मारेचितभ्रू-चतुरैः कटाक्षैः ॥ ५

अन्वयः। तव असम्मतः कः पुनर्भवक्लेशभयात् मुक्तिमार्गंप्रपन्नः (तं वद, यतः सः अपि) आरेचितभ्रूचतुरैः सुन्दरीणां कटाक्षैः बद्धः चिरं तिष्ठतु ॥ ५

सम्प्रति चतुर्वर्गे मोक्षमधिकृत्याह,—असम्मत इति। तव असम्मतः कः पुनर्भवः पुनरुत्पत्तिः, संसार इति यावत्। तत्र ये क्लेशाः जन्मजरामरणादयस्तेभ्यः भयात् मुक्तिमार्गं प्रपन्नः तं वद। यतः सोऽपि आरेचिताभिः एकैकशो विवर्त्तिताभिः भ्रूभिश्चतुरैः सुन्दरीणां कटाक्षैः बद्धश्चिरं तिष्ठतु। आरेचितलक्षणन्तु,— "स्यादभ्रुवोर्ललिताक्षेपादेकस्या एव रेचितम्। तयोर्मूलसमुत्क्षेपं कौटिल्यादभ्रूकुटिं विदुः" इति ॥ ५

५। तव कर्त्तरि षष्ठी; क्लेशभयात् हेतौ पञ्चमी। कटाक्षैः तृतीया अनुक्ते कर्त्तरि। तिष्ठतु लोट् अनुज्ञायां।

अध्यापितस्योशनसापि नीतिं
प्रयुक्तरागप्रणिधिर्द्विषस्ते ।
कस्यार्थधर्मौ वद पीड़यामि
सिन्धोस्तटावोघ इव प्रवृद्धः ॥ ६

अन्वय । उशनसा नीतिम् अध्यापितस्यापि ते कस्य द्विषः अर्थधर्मौ ( अहम् ) प्रयुक्त-रागप्रणिधिः सिन्धोस्तटौ प्रवृद्धः ओघ इव पीड़यामि वद ॥६

धर्मार्थौ अधिकृत्याह,—अध्यापितस्येति । उशनसा शुक्रेण नीतिं नीतिशास्त्रम् अध्यापितस्यापि । अपिशब्दात् शुक्रशिष्याणाम् अप्रधृष्यत्वं गम्यते "गतिबुद्धोत्या"दिना ( १, ४, ५२ पा० ) द्विकर्मकादिङ्धातोर्णयन्तात् प्रधाने कर्मणि क्तः "अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः" इति वचनात् । ते द्विषः तव शत्रोः कस्य अर्थधर्मौ प्रयुक्तः प्रहितः रागः विषयाभिलाष एव प्रणिधिः दूतो येन सोऽहम् । "प्रणिधिः प्रार्थने चरे" इति यादवः । प्रवृद्धः ओघः प्रवाहः सिन्धोः नद्याः तटाविव पीड़यामि ? वद ॥६

६ । उशनसा तृतीया अनुक्ते कर्त्तरि । द्विषः कर्म्मणि षष्ठी । उपमालङ्कारः ॥

कामेकपत्नीव्रतदुःखशीलां
लोलं मनश्चारुतया प्रविष्टाम् ।
नितम्बिनीमिच्छसि मुक्तलज्जां
कण्ठे स्वयंग्राहनिषक्तबाहुम् ॥ ७

अन्वय । एकपत्नीव्रतदुःखशीलां चारुतया लोलं मनः प्रविष्टां कां नितम्बिनीं मुक्तलज्जां सतीं कण्ठे स्वयंग्राहनिषक्तबाहुम् इच्छसि ( वद ) ॥ ७

काममधिकृत्याह,—कामिति । एकः पतिर्यस्याः सा एकपत्नी पतिव्रता । "नित्यं सपत्न्यादिषु"इति ( ४, १, ३५ पा० ) ङीप् । तस्याः व्रतं पातिव्रत्यं तेन दुःखशीलां दुःखस्वभावां दृढ़व्रतामित्यर्थः । "शीलं स्वभावे सद्वृत्ते" इत्यमरः । चारुतया सुन्दरत्वेन हेतुना लोलं मनः त्वच्चित्तं प्रविष्टां कां नितम्बिनीं नारीं मुक्तलज्जां सतीं कण्ठे स्वयंग्राहनिषक्तबाहुं स्वयं गृह्णातीति स्वयंग्राहा । "विभाषा ग्रहः" इति ( ३, १, १४३ पा० ) णप्रत्ययः । न च जलचर एव

ग्राह इति नियमः, जलचरे ग्राह एवेति नियमादिति । स्वयंग्राहा च सा निषक्तबाहुश्च तां तथाभूताम् इच्छसि । त्वदर्थे पतिव्रतामपि व्रताद् भ्रंशयिष्यामीत्यर्थः । एतच्चेन्द्रस्य पारदारिकत्वादुक्तम् । तथा च श्रुतिः—"अहल्यायै जारः" इति ॥ ७

७ । चारुतया तृतीया हेतौ । साम्प्रतं कामः स्वस्य प्रगल्भतया प्रभोरनुग्रहं लब्धुं यतते ॥

कयासि कामिन् ! सुरतापराधात्
पादानतः कोपनयावधूतः ।
तस्याः करिष्यामि दृढ़ानुतापं
प्रवालशय्याशरणं शरीरम् ॥ ८

अन्वयः । (हे) कामिन् ! (त्वम्) सुरतापराधात् पादानतः कोपनया कया अवधूतः असि (वद), तस्याः शरीरं दृढ़ानुतापम् (अतएव) प्रवालशय्याशरणं करिष्यामि ॥ ८

त्रिविधा नायिका, स्वकीया परकीया साधारणी चेति, तत्र परकीयां प्रत्युक्तम् इतरे प्रत्याह,—कयेति । हे कामिन् ! कामुक ! सुरतापराधात् अन्यासङ्गादित्यर्थः । पादानतः प्रणतः सन् कोपनया कोपनशीलया कया स्त्रिया अवधूतः तिरस्कृतोऽसि ? तस्याः शरीरं दृढ़ानुतापं गाढ़पश्चात्तापम् अतएव प्रवालशय्याशरणं करिष्यामि इति ॥ ८

८ । सुरतापराधात् हेतौ पञ्चमी । कया अनुक्ते कर्त्तरि तृतीया ।

प्रसीद विश्राम्यतु वीर वज्रं
शरैर्मदीयैः कतमः सुरारिः ।
बिभेतु मोघीकृतबाहुवीर्य्यः
स्त्रीभ्योऽपि कोपस्फुरिताधरास्यः ॥ ९

अन्वयः । हे वीर ! प्रसीद, वज्रं विश्राम्यतु, मदीयैः शरैः मोघीकृतबाहुवीर्य्यः कतमः सुरारिः कोपस्फुरिताधरास्यः स्त्रीभ्योऽपि बिभेतु ॥ ९

प्रसीदेति । हे वीर ! प्रसीद प्रसन्नो भव । वज्रं कुलिशं विश्राम्यतु उदास्तामित्यर्थः । मदीयैः शरैर्मोघीकृतबाहुवीर्य्यः विफलीकृतभुजशक्तिः कतमः ? दैत्यदानवादिषु यः कश्चन

सुरारिः । "वा बहूनां जातिपरिप्रश्ने डतमच्" ( ५, ३, ९३ पा० ) इति डतमच्प्रत्ययः । कोपेन स्फुरिताधराभ्यः स्त्रीभ्योऽपि बिभेतु, किमु वक्तव्यं पुंभ्य इत्यर्थः, सकम्पीतः सर्वतो बिभेतीति "भीत्रार्थानां भयहेतुः" ( १, ४, २५ पा० ) इति अपादानत्वात् पञ्चमी ॥ ९

९। विश्राम्यतु लोट् प्रार्थनायाम् । मरैः तृतीया अनुक्ते कर्त्तरि। बिभेतु लोट् प्रार्थनायां वा ॥

तव प्रसादात् कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्ध्वा ।
कुर्य्यां हरस्यापि पिनाकपाणे-
र्धैर्य्यच्युतिं के मम धन्विनोऽन्ये ॥ १०

अन्वयः। तव प्रसादात् कुसुमायुधः अपि ( अहम् ) एकं मधुमेव सहायं लब्ध्वा पिनाकपाणेः अपि हरस्य धैर्य्यच्युतिं कुर्य्याम् अन्ये धन्विनः मम के ? ॥ १०

तवेति । किं बहुना, तव प्रसादात् अनुग्रहात् कुसुमायुधोऽपि अतिदुर्बलास्त्रोऽपि अहम् एकं मधुम् वसन्तमेव सहायं लब्ध्वा पिनाकः पाणौ यस्य सः पिनाकपाणिः । "प्रहरणार्थेभ्यः परे निष्ठा सप्तम्यौ" ( २, २, ३६ पा० वा० ) । तस्य हरस्यापि । हरः पिनाकी चेत्यतिदारुण इति भावः । धैर्य्यच्युतिं धैर्य्यहानिं कुर्य्याम् कर्तुं शक्नुयामित्यर्थः । "शकिलिङ् चे"ति ( ३, ३, १७२ पा० ) शक्यार्थे लिङ् । अन्ये धन्विनः धनुर्भृतः मम के न केऽपीत्यर्थः । किंशब्दः कुत्सायाम् । "कुत्साप्रश्नवितर्केषु किंशब्दः इष्यते" इति शाश्वतः ॥ १०

१०। प्रसादात् हेतौ पञ्चमी । कुर्य्याम् शक्त्यर्थे लिङ् ॥

अथोरुदेशादवतार्य्य पाद-
माक्रान्तिसम्भावितपादपीठम् ।
सङ्कल्पितार्थे विवृतात्मशक्ति-
माखण्डलः काममिदं बभाषे ॥ ११

अन्वयः। अथ आखण्डलः ऊरुदेशात् पादम् आक्रान्तिसम्भावितपादपीठम् अवतार्य्य संकल्पितार्थे विवृतात्मशक्तिं कामम् इदं बभाषे ॥ ११

अथेति। अथ स्मरवाक्यश्रवणानन्तरम् आखण्डलः सहस्राक्षः ऊरुदेशात् पादम् आक्रान्त्या आक्रमणेन सम्भावितं पादपीठं यस्मिन् तद् यथा तथा अवतार्य्य, सङ्कल्पितार्थे हरचित्ताकर्षणरूपे विषये विवृतात्मशक्तिम् "कुर्य्यां हरस्यापि" इत्यादिना प्रकटीकृत-स्वसामर्थ्यं कामं स्मरम् इदं वक्ष्यमाणं बभाषे ॥ ११

११। ऊरुदेशात् अपादाने पञ्चमी। साम्प्रतम् अवसरमवगत्य इन्द्रः स्वकर्म्मसाधना कामं वक्तुमारभते।

सर्वं सखे त्वय्युपपन्नमेत-
दुभे ममास्त्रे कुलिशं भवांश्च।
वज्रं तपोवीर्य्यमहत्सु कुण्ठं
त्वं सर्वतोगामि च साधकञ्च ॥ १२

अन्वयः। हे सखे! सर्वम् एतत् त्वयि उपपन्नम्, मम कुलिशं भवांश्च उभे अस्त्रे, (तत्र) वज्रं तपोवीर्य्यमहत्सु कुण्ठं, त्वं सर्व्वतोगामि च साधकञ्च ॥ १२

सर्वमिति। हे सखे! सखे इति सम्बोधनं गौरवार्थम्। सर्वमेतत् त्वय्युपपन्नं सिद्धं, मम कुलिशं वज्रं भवांश्च उभे अस्त्रे, तत्र वज्रं तपोवीर्य्येण तपोबलेन महत्सु प्रबलेषु कुण्ठं प्रतिबद्ध-प्रसरं, त्वम् अस्त्रं सर्वतोगामि च साधकञ्च तापसेष्वपि अकुण्ठ-मित्यर्थः ॥ १२

१२। सर्व्वतोगामि, सर्व्वत इत्यत्र अधिकरणे तस् अव्ययपदमेतत्। अस्त्रेण यथा— शत्रून् निपीड़यितुं शक्नोमि तथा त्वयैव। अतएव त्वं मे अस्त्रमपरम्।

अवैमि ते सारमतः खलु त्वां
कार्य्ये गुरुण्यात्मसमं नियोक्ष्ये।
व्यादिश्यते भूधरतामवेक्ष्य
कृष्णेन देहोद्वहनाय शेषः ॥ १३

अन्वयः। (हे सखे!) ते सारम् अवैमि, अतः खलु आत्मसमं त्वां गुरुणि कार्य्ये नियोक्ष्ये, (तथाहि) कृष्णेन भूधरताम् अवेक्ष्य शेषः देहोद्वहनाय व्यादिश्यते ॥ १३

अवैमीति। हे सखे! ते सारं बलम् अवैमि वेद्मि। अतः खलु अतएव आत्मसमं मत्तुल्यं त्वां गुरुणि महति कार्य्ये "तस्मै

हिमाद्रेः इति" वक्ष्यमाणे नियोक्ष्ये । "स्वराद्यन्तोपसृष्टादिति वक्तव्यमि"ति (१, ३, ६४ पा०) [सूत्रस्थात्] वार्त्तिकात् आत्मनेपदनियमः । तथाहि—सारपरीक्षापूर्वक एव सर्वत्र नियोग इत्याह,—कृष्णेन विष्णुना । धरतीति धरः पचाद्यच् । भुवो धरः भूधरः तस्य भावस्तत्ता भूधरतां भूधरणशक्तिमित्यर्थः । अस्य ज्ञात्वा शेषः सर्पराजः देहोद्वहनाय स्वदेहमुद्वोढुम् । "क्रियार्थोपपदस्ये"त्यादिना (२, ३, १४ पा०) चतुर्थी । व्यादिश्यते नियुज्यते । शेषशायी हि भगवान् ॥ १३

१३ । कृष्णेन तृतीया अनुक्ते कर्त्तरि । देहोद्वहनाय क्रियायोगे चतुर्थी ।

आशंसता बाणगतिं वृषाङ्के
कार्य्यं त्वया नः प्रतिपन्नकल्पम् ।
निबोध यज्ञांशभुजामिदानी-
मुच्चैर्द्विषामीप्सितमेतदेव ॥ १४

अन्वयः । वृषाङ्के बाणगतिम् आशंसता त्वया नः कार्य्यं प्रतिपन्नकल्पम् इदानीम् उच्चैर्द्विषां यज्ञांशभुजाम् एतदेव ईप्सितं निबोध ॥ १४

नियोगाङ्गीकारं सिद्धवत् कर्तुमाह,—आशंसतेति । वृषाङ्के हरे बाणगतिं बाणप्रसरम् आशंसता कथयता "कुर्य्यां हरस्यापि पिनाकपाणेः" (३।१०) इत्यादिनेति शेषः, त्वया नः अस्माकं कार्य्यं प्रतिपन्नकल्पमङ्गीकृतप्रायम् । "ईषदसमाप्तौ" (५, ३, ६७ पा०) कल्पप्प्रत्ययः । कथमेतत् ? अत आह,—यज्ञांशभुजां देवानाम् । एतेन हविर्लुप्तयज्ञभागत्वं सूच्यते । ईप्सितम् आप्तुमिष्टम् एतदेव हरे बाणप्रयोगरूपमेव निबोध, हरायत्तं बुध्यस्व इत्यर्थः । "बुध बोधने" इति धातोर्लोट् । अत्र "आशंसता प्रार्थयमानेने"ति नाथव्याख्यानमनाथव्याख्यानम् । आङ्पूर्वयोः शास्तिशंसत्योरिच्छार्थत्वे आत्मनेपदनियमात् । याच्ञार्थत्वस्य अप्रमाणिकत्वात् । "कुर्य्यां हरस्य अपि" इति अत्रानयोरभावात् प्रयोगाच्चेति ॥ १४

१४ । त्वया तृतीया अनुक्ते कर्त्तरि । ण्वादिरयं निपूर्व्वकः बुध धातुः अवधार्थे वर्त्तमानः ।

अमी हि वीर्य्यप्रभवं भवस्य
जयाय सेनान्यमुशन्ति देवाः।
स च त्वदेकेषुनिपातसाध्यो
ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥१५

अन्वयः। अमी देवाः जयाय भवस्य वीर्य्यप्रभवं सेनान्यम् उशन्ति, हि ब्रह्माङ्गभूः ब्रह्मणि योजितात्मा स च त्वदेकेषुनिपातसाध्यः ॥ १५

किं तत्कार्य्यं कथं वा तस्य हरायत्तत्वं ? कुतो वा मदपेक्षा ? इत्यत्राह,—अमी इति। यस्मात् अमी देवाः जयाय शत्रुजयार्थं भवस्य हरस्य वीर्य्यप्रभवं तेजःसम्भूतं सेनान्यं सेनापतिम् उशन्ति कामयन्ते, "वश कान्तौ" इति धातोर्लट्। ब्रह्मणां सद्योजातादि-मन्त्राणाम् अङ्गानां हृदयादिमन्त्राणां भूः स्थानं ब्रह्माङ्गभूः कृत-मन्त्रन्यास इत्यर्थः। ब्रह्मणि निजतत्त्वे। "वेदस्तत्त्वं तपोब्रह्म" इत्युभयत्रापि अमरः। योजितात्मा नियमितचित्तः मन्त्रन्यासपूर्व्वकं ब्रह्म ध्यायन्नित्यर्थः। सः भवः च त्वदेकेषोः तव एकबाणस्य निपा-तेन साध्यः अनन्यसाध्योऽयमस्मिन् अवसर इति भावः ॥ १५

१५। जयाय चतुर्थी निमित्तार्थे। ओं क्लीं सद्योजाताय नमः इति ब्रह्ममन्त्राणां ओं क्लीं हृदयाय नमः। ओं क्लीं शिरसे स्वाहा इत्यङ्गमन्त्राणां स्थानम्।

तस्मै हिमाद्रेः प्रयतां तनूजां
यतात्मने रोचयितुं यतस्व।
योषित्सु तद्वीर्य्यनिषेकभूमिः
सैव क्षमेत्यात्मभुवोपदिष्टम् ॥१६

अन्वयः। यतात्मने तस्मै प्रयतां हिमाद्रेः तनूजां रोचयितुं यतस्व, योषित्सु क्षमा तद्वीर्य्यनिषेकभूमिः सैव इति आत्मभुवा उपदिष्टम् ॥ १६

तस्मा इति। यतात्मने नियतचित्ताय तस्मै भवाय। "रुच्य-र्थानां प्रीयमाणः" इति (१, ४, ३३ पा०) सम्प्रदानत्वात् चतुर्थी। प्रयतां हिमाद्रेस्तनूजां पार्व्वतीं रोचयितुं यतस्व। भावितव्यञ्च अत्र पार्व्वत्या एवेत्याह,—योषित्सु स्त्रीषु मध्ये। "यतश्च निर्द्धारणमि"ति (२, ३, ४१ पा०) सप्तमी। क्षमा शक्ता तस्य हरस्य वीर्य्यं

रेतस्तस्य निषेकः चरणं तस्य भूमिः क्षेत्रं सा पार्वत्येव, इति आत्म-भुवा ब्रह्मणा उपदिष्टम् "उभे एव क्षमे वोढुम्" इत्यादिना उक्त-मित्यर्थः ॥ १६

१६। आत्मभुवा तृतीया अनुक्ते कर्त्तरि। प्रयतां अभ्यासक्तिरहितां।

गुरोर्नियोगाच्च नगेन्द्रकन्या
स्थाणुं तपस्यन्तमधित्यकायाम्।
अन्वास्त इत्यप्सरसां मुखेभ्यः
श्रुतं मया मत्प्रणिधिः स वर्गः ॥१७

अन्वयः। नगेन्द्रकन्या च गुरोः नियोगात् अधित्यकायां तपस्यन्तं स्थाणुम् अन्वास्ते इति मया अप्सरसां मुखेभ्यः श्रुतं, स वर्गः मत्प्रणिधिः ॥ १७

सापीदानीं सन्निकृष्टैव तस्येत्याह,—गुरोरिति। नगेन्द्रकन्या पार्वती च गुरोः पितुः नियोगात् शासनात् अधित्यकायां हिमाद्रेः ऊर्ध्वभूमौ "भूमिरूर्द्ध्वमधित्यका" इत्यमरः। "उपाधिभ्यां त्यकन् आसन्नारूढयो"रिति (५, २, ३४ पा०) त्यकन्प्रत्ययः। तपस्यन्तं तपश्चरन्तम्। कर्मणोरोमन्थतपोभ्यां वर्त्तिचरो"रिति ( ३, १, १५ पा० ) क्यङ्प्रत्ययः, ततः शतृप्रत्ययः। स्थाणुं रुद्रम् अन्वास्ते उपास्ते इत्यर्थः। इति इदं मया अप्सरसां मुखेभ्यः श्रुतम्। न च एतदैतिह्यमात्रमित्याह,—स वर्गः सोऽप्सरसां गणः मत्प्रणिधिः मम गूढचरः। "प्रणिधिः प्रार्थने चरे" इति यादवः ॥ १७

१७। नियोगात् हेतौ पञ्चमी। मुखेभ्यः पञ्चमी अपादाने। अनुपूर्व्वकः आस्-धातुः पश्चादुपवेशने उपसेवायां उपासनायां च वर्त्तमानः। 'अन्वासितमरुन्धत्या' रघुः॥

तदूगच्छ सिद्धौ कुरु देवकार्य्य-
मर्थोऽयमर्थान्तरभाव्य एव।
अपेक्षते प्रत्ययमुत्तमं त्वां
वीजाङ्कुरः प्रागुदयादिवाम्भः ॥१८

अन्वयः। तत् सिद्धै गच्छ, देवकार्य्यं कुरु, अयमर्थः अर्थान्तरभाव्य एव, ( तथापि ) वीजाङ्कुरः उदयात् प्राक् अम्भ इव ( अयमर्थः ) त्वाम् उत्तमं प्रत्ययम् अपेक्षते ॥ १८

तदिति। तत् तस्मात् सिद्धैर कार्य्यसिद्ध्यर्थं गच्छ, देवकार्य्यं कुरु। आशिषि लोट्। अयमर्थः प्रयोजनम् अर्थान्तरभाव्यः कारणान्तरसाध्य एव। तच्च कारणान्तरं पार्वतीसन्निधानमिति भावः। "अर्थः प्रकारे विषये वित्तकारणवस्तुषु। अभिधेये च शब्दानां वृत्तौ चापि प्रयोजने" इति विश्वः। तथापि वीजसाध्योऽङ्कुरः उदयात् उत्पत्तेः प्राक् अम्भ इव त्वामुत्तमं प्रत्ययं कारणम् अपेक्षते। "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः। तस्मादस्मिन्नर्थे तव चरमसहकारित्वादन्यसाध्योऽयमर्थ इति भावः॥ १८

१८। सिद्धैर चतुर्थी निमित्तार्थे। उदयात् प्राक्शब्दयोगे पञ्चमी।

तस्मिन् सुराणां विजयाभ्युपाये
तवैव नामास्त्रगतिः कृती त्वम्।
अप्यप्रसिद्धं यशसे हि पुंसा-
मनन्यसाधारणमेव कर्म्म ॥१९

अन्वयः। सुराणां विजयाभ्युपाये तस्मिन् अस्त्रगतिः तवैव नाम, (अतः) त्वं कृती। (तथाहि) अप्रसिद्धम् अपि अनन्यसाधारणमेव कर्म पुंसां यशसे (कल्पते)॥ १९

तस्मिन्निति। सुराणां विजयाभ्युपाये जयस्य उपायभूते तस्मिन् स्मरे अस्त्रगतिः अस्त्रप्रसरः तवैव नाम। नामेति सम्भावनायाम्। अन्येषान्तु सम्भावनापि नास्तीति भावः। अतः त्वं कृती कृतमस्यास्तीति कृती कृतार्थः। तथाहि अप्रसिद्धमपि अनन्यसाधारणमेव कर्म पुंसां यशसे हि। इदन्तु प्रसिद्धम् असाधारणञ्चेति अतियशस्करमिति भावः॥ १९

१९। यशसे चतुर्थी निमित्तार्थे। अस्त्रस्य गतिः षष्ठीतत्पुरुषः समासः॥

सुराः समभ्यर्थयितार एते
कार्य्यं त्रयाणामपि विष्टपानाम्।
चापेन ते कर्म्म न चातिहिंस्र-
महो वतासि स्पृहणीयवीर्य्यः ॥२०

अन्वयः। – एते सुराः समभ्यर्थयितारः कार्य्यं त्रयाणां विष्टपानामपि (सम्बन्धि), कर्म ते चापेन अतिहिंस्रञ्च न, अहो वत स्पृहणीयवीर्य्यः असि ॥२०

प्रोत्साहनार्थं स्तौति,—सुरा इति । एते सुराः समभ्यर्थयितारः याचितारः कार्य्यं प्रयोजनं त्रयाणां पिष्टपानामपि सम्बन्धि, सर्वलोकार्थम् इत्यर्थः । कर्म ते तव चापेन न तु अन्येनेति भावः । अतिहिंस्रम् अतिघातुकञ्च न । अहो वत इति सम्बोधने । "अहोवतानुकम्पायां खेदे सम्बोधनेऽपि च" इति "वतामन्त्रणसन्तोषखेदानुक्रोशविस्मये" इति विश्वः । स्पृहणीयवीर्य्योऽसि आश्चर्य्यविक्रमोऽसि "आश्चर्य्यं स्पृहणीयञ्च" इति नानार्थकोषः ॥२०

२० । चापेन तृतीया करणे । स्पृहणीयं वीर्य्यं यस्य सः ॥

मधुश्च ते मन्मथ ! साहचर्य्या-
दसावनुक्तोऽपि सहाय एव ।
समीरणो नोदयिता भवेति
व्यादिश्यते केन हुताशनस्य ॥२१

अन्वयः । हे मन्मथ ! असौ मधुश्च साहचर्य्यात् अनुक्तः अपि ते सहाय एव, (तथाहि) समीरणः हुताशनस्य नोदयिता भव इति केन व्यादिश्यते ॥२१

मधुश्चेति । हे मन्मथ ! असौ मधुश्च वसन्तोऽपि ते साहचर्य्यात् सहचरत्वादेव अनुक्तोऽपि अप्रेरितोऽपि सहायः सहकार्य्येव । तथा हि, समीरणः वायुः हुताशनस्य अग्नेः नोदयिता प्रेरको भव इति केन व्यादिश्यते ? अत्र मधुसमीरणयोः उक्तिमन्तरेण सहायताकरणं सामान्यधर्मः, स च वाक्यद्वये वस्तुप्रतिवस्तुभावेन पृथग्निर्दिष्ट इति प्रतिवस्तूपमालङ्कारोऽयम् । तदुक्तम्—, "यत्र सामान्यनिर्देशः पृथग्वाक्यद्वये यदि । गम्यौपम्याश्रिता सा स्यात् प्रतिवस्तूपमा मता" इति ॥२१

२१ । साहचर्य्यात् पञ्चमी हेतौ । केन अनुक्ते कर्त्तरि तृतीया । हुताशनस्य कर्म्मणि षष्ठी । प्रतिवस्तूपमालङ्कारः यथा—"प्रतिवस्तूपमा सा स्यात् वाक्ययो र्गम्यसाम्ययोः ।
एकोऽपि धर्मः सामान्यो यत्र निर्द्दिश्यते पृथक् ॥" दर्पणः ।

तथेति शेषामिव भर्त्तुराज्ञा-
मादाय मूर्ध्ना मदनः प्रतस्थे ।

ऐरावतास्फालनकर्कशेन
हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥२२

अन्वयः। मदनः तथा (अस्तु) इति भर्तुः शेषामिव आज्ञां मूर्ध्ना आदाय प्रतस्थे, इन्द्रः ऐरावतास्फालनकर्कशेन हस्तेन तदङ्गं पस्पर्श ॥२२

तथेति। तथा अस्त्विति भर्तुः स्वामिनः शेषामिव प्रसाददत्तां मालामिव। "प्रसादान्निजनिर्माल्यदाने शेषेति कीर्त्तिता" इति विश्वः। "माल्यान्नतराद्दिदाने स्त्री शेषा" इति वैजयन्तीकोशवी। आज्ञां मूर्ध्ना आदाय शिरसा गृहीत्वा मदनः प्रतस्थे। "समवप्राविभ्यः स्थः" (१, ३, २२ पा०) इति आत्मनेपदम्। इन्द्रः ऐरावतास्फालनेन प्रोत्साहनार्थेन ताड़नेन कर्कशेन परुषेण हस्तेन तदङ्गं मदनदेहं पस्पर्श, हस्तस्पर्शेन सम्भावयामास इत्यर्थः। 'शेषामिव आज्ञा'मित्यत्र साधकबाधकप्रमाणाभावात् उपमोत्प्रेक्षयोः सन्देहसङ्कर इति। यदि भर्त्रा शेषापि दत्ता तदा ताम् आज्ञामिव इत्युपमा। अथ न दत्ता तर्हि शेषत्वेन उत्प्रेक्षिता। शेषादानन्तु सन्दिग्धमिति ॥२२

२२। मूर्ध्ना हस्तेन च तृतीया करणे। ऐरावतस्य आस्फालनं तेन कर्कशः तेन ॥

स माधवेनाभिमतेन सख्या
रत्या च साशङ्कमनुप्रयातः।
अङ्गव्ययप्रार्थितकार्य्यसिद्धिः
स्थाण्वाश्रमं हैमवतं जगाम ॥२३

अन्वयः। सः अभिमतेन सख्या माधवेन रत्या च साशङ्कम् अनुप्रयातः (सन् तथा) अङ्गव्ययप्रार्थितकार्य्यसिद्धिः (सन्) हैमवतं स्थाण्वाश्रमं जगाम ॥२३

स इति। सः मदनः अभिमतेन प्रियेण सख्या सुहृदा माधवेन वसन्तेन रत्या स्वदेव्या च साशङ्कं सङ्कटमापतितम् इति सभयम् अनुप्रयातः सन् तथा अङ्गस्य व्ययेनापि प्रार्थिता कार्य्यसिद्धिः येन स तथोक्तः। शीर्त्वा मृत्वापि सर्वथा देवकार्य्यं साधयिष्यामीति कृतनिश्चयः सन्नित्यर्थः। हैमवतं हिमवति भवं स्थाणोः रुद्रस्य आश्रमं जगाम ॥ २३

२३। सख्या रत्या च तृतीया अनुक्ते कर्त्तरि। शङ्कया सह वर्त्तमानं साशङ्कं ॥

तस्मिन् वने संयमिनां मुनीनां
तपःसमाधेः प्रतिकूलवर्त्ती ।
सङ्कल्पयोनेरभिमानभूत-
मात्मानमाधाय मधुर्जजृम्भे ॥ २४

अन्वयः । तस्मिन् वने संयमिनां मुनीनां तपःसमाधेः प्रतिकूलवर्त्ती मधुः संकल्पयोनेः अभिमानभूतम् आत्मानम् आधाय जजृम्भे ॥ २४

तस्मिन्निति । तस्मिन् वने स्थाणवाश्रमे संयमिनां समाधिमतां मुनीनां तपसः समाधेः एकाग्रतायाः प्रतिकूलं वर्त्तत इति प्रतिकूलवर्त्ती विरोधी मधुर्वसन्तः सङ्कल्पयोनेः मनोभवस्य अभिमानभूतं गर्वहेतुभूतमित्यर्थः । कार्य्यकारणयोः अभेदोपचारः । आत्मानं निजस्वरूपम् आधाय सन्निधाप्य जजृम्भे प्रादुर्बभूव । वसन्तधर्म्मान् प्रवर्त्तयामास इत्यर्थः ॥ २४

२४ । शृङ्गाररसस्य आविर्भावात् प्रागेव उद्दीपनाभावादीनां विकाशो युक्तः, तत एव वसन्तवर्णनम् अत्रैव प्रयुज्यते । कार्य्यमत्र शृङ्गारभावः कारणं वसन्तादीनाम् आविर्भावाः इति भावः ।

कुवेरगुप्तां दिशमुष्णरश्मौ
गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग्दक्षिणा गन्धवहं मुखेन
व्यलीकनिश्वासमिवोत्ससर्ज ॥ २५

अन्वयः । उष्णरश्मौ समयं विलङ्घ्य कुवेरगुप्तां दिशं गन्तुं प्रवृत्ते (सति) दक्षिणा दिक् मुखेन गन्धवहं व्यलीकनिश्वासमिव उत्ससर्ज ॥ २५

वसन्तधर्म्मानाह,—कुवेरेति । उष्णरश्मौ सूर्य्ये साहसिके च नायके समयं दक्षिणायनकालं सङ्गमकालञ्च विलङ्घ्य अकाण्डे व्यतिक्रम्य कुवेरगुप्तां धनपतिपालितां कुत्सितशरीरेण केनचित् रक्षिताञ्च दिशम् उदीचीं स्त्रीलिङ्गाच्छिष्टां काञ्चिन्नायिकाञ्च गन्तुं चलितुं सङ्गन्तुञ्च प्रवृत्ते सति दक्षिणा दिक् दाक्षिण्यवती नायिका च मुखेन अग्रभागेण वक्त्रेण च वहतीति वहः पचाद्यच् । गन्धस्य

वहं गन्धवहम् अनिलं व्यलीकेन दुःखेन निश्वासस्तं व्यलीकनिश्वासमिव "दुःखे वैलक्ष्ये व्यलीकमप्रियाकार्य्यवस्तुनोः" इति वैजयन्ती । उत्ससर्ज प्रवर्त्तयामास । स्वभर्त्तरि समयोल्लङ्घनेन पराङ्गनासङ्गतिप्रवृत्ते सति स्त्रियो दाक्षिण्यात् अकिञ्चिद्वदाः दुःखात् निश्वसन्तीति भावः । उत्तरायणे सति मलयानिलाः प्रवृत्ता इति वाक्यार्थः । अत्र उत्प्रेक्षालङ्कारः । स च समासोक्तिर्वैयमुत्प्रेक्षानुप्रविष्टा इति शङ्कितव्यं, केवलविशेषणसामर्थ्यात् एव अप्रस्तुतप्रतीतौ सोत्तिष्ठते । अत्र तु दक्षिणेति विशेष्यसामर्थ्यादपि नायिका प्रतीयते । न च श्लेष एव प्रकृताप्रकृतविषयः उभयश्लेषे श्लिष्टविशेष्यानङ्गीकारात् । तस्मात् शब्दशक्तिमूलोऽयं ध्वनिः । स च व्यलीकनिश्वासरूपचेतनधर्मसम्भावनार्थं दक्षिणस्या दिशो नायिकया सह अभेदमासादयन् अभेदलक्षणातिशयोक्त्युपजीविनीं निश्वासमिवेति वाच्योत्प्रेक्षां निर्वहतीति "वाच्यसिद्ध्यङ्गभूत" इति वक्ष्यामः ॥२५

२५ । यथा निजपत्नीसङ्गमकालम् अनादृत्य पराङ्गनासङ्गतिं लभमानं ज्ञात्वा दक्षिणा नायिका स्वभर्त्तारं किञ्चित् नोक्त्वा मनोदुःखेन विषीदति दीर्घं निःश्वसिति च, तथा उत्तरायणस्य प्रारम्भे सूर्य्यं उत्तरां दिशं गन्तुं प्रवर्त्तमानं ज्ञात्वा दुःखेन दक्षिणादिक् दक्षिणानिलात्मकं दीर्घं निःश्वासं त्यजति । वाच्योत्प्रेक्षालङ्कारोऽयम् ।

असूत सद्यः कुसुमान्यशोकः
स्कन्धात् प्रभृत्येव सपल्लवानि ।
पादेन नापैक्षत सुन्दरीणां
सम्पर्कमाशिञ्जितनूपुरेण ॥ २६

अन्वयः । अशोकः स्कन्धात्प्रभृत्येव सपल्लवानि कुसुमानि सद्यः असूत, आशिञ्जितनूपुरेण सुन्दरीणां पादेन सम्पर्कं न अपैक्षत ॥ २६

असूतेति । अशोकः वृक्षविशेषः सद्यः स्कन्धात् प्रकाण्डात् प्रभृत्येव स्कन्धादारभ्य इत्यर्थः । भाष्यकारवचनात् प्रभृतियोगे पञ्चमीति कैयटः । भाष्यञ्च "मूलात् प्रभृत्यग्रात् वृक्षांस्तक्ष्णुवन्ति" इति "कार्त्तिक्याः प्रभृति आग्रहायणी मासः" इत्यादि । सपल्लवानि कुसुमानि असूत, उभयमपि अजीजनत् इत्यर्थः । आशिञ्जितो नूपुरः यस्य तेन । शिञ्जधातोः अकर्म्मकात् "गत्यर्थाकर्म्मकेत्या" दिना

( ३. ४, ७२ पा० ) कर्त्तरि क्तः । सुन्दरीणां पादेन सम्यक् ताड़नं नापेक्षत । "स नूपुरवेण स्त्रीचरणेनाभिताड़नम् । दोहदं यदशोकस्य ततः पुष्पोद्गमो भवेत्" इति । तथाहि - "पादाहतः प्रमदया विकसत्यशोकः, शोकं जहाति बकुलो मुखसीधुसिक्तः । आलोकितः कुरवकः कुरुते विकाशमालोड़ितस्तिलक उत्कलिको विभाति" ॥ २६

२६ । स्कन्धात् पञ्चमी प्रभृति शब्दयोगात् । पादेन तृतीया करणे ।

सद्यः प्रवालोद्गमचारुपत्त्रे
नीते समाप्तिं नवचूतबाणे ।
निवेशयामास मधुर्द्विरेफान्
नामाक्षराणीव मनोभवस्य ॥ २७

अन्वयः । मधुः प्रवालो द्गमचारुपत्त्रे नवचूतबाणे समाप्तिं नीते सद्यः मनोभवस्य नामाक्षराणीव द्विरेफान् निवेशयामास ॥ २७

सद्य इति । मधुर्वसन्त एवेषुकारः प्रवालोद्गमाः पल्लवाङ्कुरा एव चारूणि पत्त्राणि पक्षा यस्य तस्मिन् । "पत्त्रं वाहनपक्षयोः" इत्यमरः । नवं चूतं चूतकुसुमं तदेव बाणः तस्मिन् नवचूतबाणे समाप्तिं नीते सति सद्य. मनोभवस्य धन्विनो नामाक्षराणीव द्विरेफान् भ्रमरान् निवेशयामास निदधौ । अत्र प्रवालपत्त्रे इत्याद्येकदेशविवर्त्तिरूपकं मधोरिषुकारत्वं रूपयन् नामाक्षराणीव इत्युत्प्रेक्षायां निमित्तमित्येकदेशविवर्त्तिरूपकोत्थापिता इयमुत्प्रेक्षा ॥ २७

२७ । नवचूतबाणे सप्तमी भावे । विचारः । ननु नीधातोर्द्विकर्मकत्वादत्र एकं कर्म वर्त्तते तर्हि कथं सङ्गतिः स्यात् ? सत्यं, कर्मणि वाच्ये क्रियायाः कर्मगतत्वात् नवचूतबाणे इत्यपरं कर्म विद्यते ।

वर्णप्रकर्षे सति कर्णिकारं
दुनोति निर्गन्धतया स्म चेतः ।
प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ २८

अन्वयः । कर्णिकारं वर्णप्रकर्षे सति निर्गन्धतया चेतः दुनोति स्म, (तथाहि) प्रायेण विश्वसृजः प्रवृत्तिः गुणानां सामग्र्यविधौ पराङ्मुखी ॥ २८

वर्णेति । कर्णिकारं कर्णिकारकुसुमम् । "अवयवे च प्राण्योषधिवृक्षेभ्य." (४. ३, १३५ पा० वा०) इत्युत्पन्नस्य तद्धितस्य "पुष्पफलमूलेषु बहुलमि"ति (४, ३, १६६ पा०) लुक् एवमन्यत्रापि द्रष्टव्यम् । वर्णप्रकर्षे सति अपि निर्गन्धतया हेतुना चेतो दुनोति स्म पर्य्यतापयत् । "लट् स्मे" इति (३, २, ११८ पा०) भूतार्थे लट् । तथाहि,—प्रायेण विश्वसृजः विधातुः प्रवृत्तिः गुणानां सामग्र्यविधौ साकल्यसम्पादनविषये पराङ्मुखी । सर्वत्रापि वस्तुनि किञ्चिद्वैकल्यं सम्पादयति । यथा चन्द्रे कलङ्कः । अतः कर्णिकारेऽपि नैर्गन्ध्यं युज्यत इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ २८

२८ । निर्गन्धतया हेतौ तृतीया । प्रायेण प्रकृत्यादिभ्यः तृतीया । जगति किमपि वस्तु सर्व्वगुणसम्पन्नं न स्यात् । यथा—"शशिनि खलु कलङ्कः कण्टकः पद्मनाले, युवति कुचनिपातः पक्वता केशजाले । उदधिजलमपेयं पण्डिते निर्धनत्वं, वयसि धनविवेकः निर्विवेकी विधाता ॥"

बालेन्दुवक्राण्यविकाशभावा-
द्बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम् ॥ २९

अन्वयः । अविकाशभावात् बालेन्दुवक्राणि अतिलोहितानि पलाशानि वसन्तेन समागतानां वनस्थलीनां सद्यः नखक्षतानीव बभुः ॥ २९

बालेन्द्विति । अविकाशभावात् निर्विकाशत्वात् मुकुलभावाद्धेतोः बालेन्दुः इव वक्राणि अतिलोहितानि अतिरक्तानि पलाशानि किंशुकपुष्पाणि । "पलाशे किंशुकः पर्णः" इत्यमरः । वसन्तेन पुंसा समागतानां सङ्गतानां वनस्थलीनां स्त्रीणां सद्यः सद्योदत्तानि पुराणेषु अतिलौहित्याभावादिति भावः । नखक्षतानीव बभुः । अत्र वसन्तस्य वनस्थलीनाञ्च विशेषणसाधारण्यात् नायकव्यवहारप्रतीतिः समासोक्तिः तावदस्ति । "नखक्षतानीव" इति जातिस्वरूपोत्-

प्रेक्षा वक्रत्वलौहित्यगुणनिमित्ता जागर्त्ति । सा च नायकव्यव-हाराश्रितसमासोक्तिगर्भिण्येवोत्तिष्ठत् इत्युभयतो: एककालतैव । विशेषणसामर्थ्यात् अप्रस्तुतस्य गम्यत्वे समासोक्तिरिष्यत इति हि लक्षणम् ॥ २९

२९ । वनस्थलीनां नायिकानां स्तनमर्दनवशात् नखाघातक्षतेन तस्मात् चारितरक्तेन लौहितायमाना नायकस्य वसन्तस्य नखा: आसन्निति भाव: ।

लग्नद्विरेफाञ्जनभक्तिचित्रं
मुखे मधुश्रीस्तिलकं प्रकाश्य ।
रागेण बालारुणकोमलेन
चूतप्रवालौष्ठमलञ्चकार ॥ ३०

अन्वय: । मधुश्री: लग्नद्विरेफाञ्जनभक्तिचित्रं तिलकं मुखे प्रकाश्य बालारुणकोमलेन रागेण चूतप्रवालौष्ठम् अलञ्चकार ॥ ३०

लग्नेति । मधुश्री: वसन्तलक्ष्मी: लग्नद्विरेफा एव अञ्जन-भक्तय: कज्जलरचना: ताभि: चित्रं चित्रवर्णं तिलकं पुष्पविशेषमेव तिलकं विशेषकम् । मुखं प्रारम्भ: तस्मिन्नेव मुखे वक्त्रे प्रकाश्य प्रकटय्य बालारुणकोमलेन बालार्कसुन्दरेण रागेण अरुणिम्ना तेनैव लाक्षारागेण चूतप्रवाल एवौष्ठस्तं चूतप्रवालौष्ठम् अलञ्चकार प्रसाधयामास । अत्र रूपकालङ्कार: ॥ ३०

३० । वाऽथेन तृतीया करणे । वसन्तश्रीभाया: नायिका कल्पनात् तिलकादिकं सङ्गच्छते ।

मृगा: पियालद्रुममञ्जरीणां
रज:कणैर्विघ्नितदृष्टिपाता: ।
मदोद्धता: प्रत्यनिलं विचेरु-
र्वनस्थलीर्मर्मरपत्रमोक्षा: ॥ ३१

अन्वय: । पियालद्रुममञ्जरीणां रज:कणै: विघ्नितदृष्टिपाता: मदोद्धता: मृगा: मर्मर-पत्रमोक्षा: वनस्थली: प्रत्यनिलं विचेरु: । ३१

मृगा इति । पियालद्रुमा: राजादनवृक्षा: । 'राजादन'

पियालश्च" इत्यमरः। तेषां मञ्जर्य्यस्तासां रजःकणैः विघ्निताः सञ्जातविघ्नाः दृष्टीनां पाताः प्रसादा येषां ते तथोक्ताः मदोद्धताः मृगाः प्रत्यनिलम् अनिलाभिमुखं मर्मराः मर्मरशब्दवन्तः पत्रमोचाः जीर्णपर्णपाताः यासु ताः वनस्थलीर्विचेरुः वनप्रदेशेषु चरन्ति स्म। "देशकालाध्वगन्तव्याः कर्म्मसञ्ज्ञा ह्यकर्मणाम्" इति चरतेः सकर्म्मकत्वम्॥ ३१

३१। रजकणैः तृतीया करणे। प्रत्यनिलं अव्ययीभाव समासत्वात् क्रियाविशेषणम्। वनस्थलीः अकृत्रिमा भूमिरित्यर्थे स्थलशब्दात् स्त्रियां ङीप्। विपूर्व्वस्य-चर-धातोरकर्मकत्वात् "कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते॥" इति कारिकाबलात् कर्मत्वं सिद्धम्।

चूताङ्कुरास्वादकषायकण्ठः
पुंस्कोकिलो यन्मधुरं चुकूज।
मनस्विनीमानविघातदक्षं
तदेव जातं वचनं स्मरस्य॥ ३२

अन्वयः। चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलः मधुरं चुकूज इति यत् तदेव मनस्विनीमानविघातदक्षं स्मरस्य वचनं जातम्॥ ३२

चूतेति। चूताङ्कुराणामास्वादेन कषायकण्ठः रक्तकण्ठः। "सुरभाव-पथे रक्ते कषायः" इति केशवः। पुमान् कोकिलः पुंस्कोकिलः, पुंग्रहणं प्रागल्भ्यद्योतनार्थम्। मधुरं चुकूज इति यत् तत् कूजनम् एव मनस्विनीनां मानविघाते रोषनिरासे दक्षं स्मरस्य वचनं मानं त्यजतेति आज्ञावचनं जातम्। कोकिलकूजितश्रवणानन्तरं स्मराज्ञया इव मानं जहुः इत्यर्थः॥

३२। चञ्चलप्रकृतीनां स्त्रीणां स्वभावस्खलनाशया मनस्विनीग्रहणं। स्मरस्य कर्तरि षष्ठी।

हिमव्यपायाद्विशदाधराणा-
मापाण्डुरीभूतमुखच्छवीनाम्।
स्वेदोद्गमः किम्पुरुषाङ्गनानां
चक्रे पदं पत्रविशेषकेषु॥ ३३

अन्वयः । हिमव्यपायात् विशदाधराणाम् आपाण्डुरीभूतमुखच्छवीनां किंपुरुषाङ्गनानां पत्त्रविशेषकेषु स्वेदोद्गमः पदं चक्रे ।२३

हिमेति। हिमस्य व्यपायात् अपगमात् विशदाः नीरुजाः अधराः ओष्ठाः यासां तासाम् आपाण्डुरीभूतमुखच्छवीनां कुङ्कुमपरिहारादिति भावः। किम्पुरुषाङ्गनानां पत्त्रविशेषकेषु पत्त्ररचनासु स्वेदोद्गमः पदं चक्रे। घर्मोदयात् स्वेदोदयोऽभूदित्यर्थः। विशदाधरत्वं मधूच्छिष्टराहित्यादिति भावः। हेमन्तेषु नार्य्यो मधूच्छिष्टं शीतभयात् दधतीति प्रसिद्धम् ॥ २३

२३। हिमव्यपायात् हेतौ पञ्चमी। हेमन्तेषु नार्य्यः ओष्ठानां विदारणभयात् तेषु मधूच्छिष्टं यच्छन्तीति प्रसिद्धिः।

तपस्विनः स्थाणुवनौकसस्ता-
माकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।
प्रयत्नसंस्तम्भितविक्रियाणां
कथञ्चिदीशा मनसां बभूवुः ॥ ३४

अन्वयः । स्थाणुवनौकसः तपस्विनः आकालिकीं तां मधुप्रवृत्तिं वीक्ष्य प्रयत्नसंस्तम्भितविक्रियाणां मनसां कथञ्चित् ईशाः बभूवुः ॥ ३४

तपस्विन इति। स्थाणोर्वनमोकः येषां ते तपस्विनः तत्रत्या मुनयः। समानकाल आद्यन्तावस्याः आकालिकीम् अकालभवत्वात् उत्पत्त्यनन्तरविनाशिनीमित्यर्थः। "आकालिकडाद्यन्तवचन" इति (५, १, ११४ पा०) समानकालादिकट्प्रत्ययः, प्रकृतेराकाल आदेशश्च निपातितः। "टिड्ढाणञ्" इत्यादिना (४, १, १५ पा०) ङीप्। केचिदकालाद् देऽध्यात्मादित्वाड्डवार्थे ठगित्याहुः। ताम् आकालिकीं मधुप्रवृत्तिं वीक्ष्य प्रयत्नेन संस्तम्भितविक्रियाणां निरुद्धविकाराणां मनसां कथञ्चिदीशाः नियन्तारः बभूवुः ॥ ३४

३४। स्थाणुवनचराः तापसाः असमयप्रादुर्भूतेन वसन्तेन विकृतमनसः कथमपि आत्मानं नियन्तुं शक्नुवन्ति।

तं देशमारोपितपुष्पचापे
रतिद्वितीये मदने प्रपन्ने ।

काष्ठागतस्नेहरसानुविद्धं
द्वन्द्वानि भावं क्रियया विवव्रुः ॥ ३५

अन्वयः। आरोपितपुष्पचापे रतिद्वितीये मदने तं देशं प्रपन्ने (सति) द्वन्द्वानि काष्ठागतस्नेहरसानुविद्धं भावं क्रियया विवव्रुः ॥ ३५

तमिति। आरोपितम् अधिज्यं कृतं पुष्पचापं येन तस्मिन् रतिर्द्वितीया यत्र तस्मिन् रतिसहाये मदने तं देशं स्थाखाश्रमं प्रपन्ने प्राप्ते सति द्वन्द्वानि स्थावराणि जङ्गमानि च मिथुनानि काष्ठा उत्कर्षः। "काष्ठोत्कर्षे स्थितौ दिशि" इत्यमरः। तां गतः यः स्नेहः इष्टसाधननिबन्धनः प्रेमापरनामा ममताभिमानः। "प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः। स एव रसः तेन अनुविद्धं सम्पृक्तं भावं रत्याख्यं शृङ्गारभावं क्रियया कार्य्यभूतया चेष्टया विवव्रुः प्रकटीचक्रुः। शृङ्गारचेष्टाः प्रावर्त्तन्त इत्यर्थः ॥ ३५

३५। क्रियया करणे तृतीया। वसन्ताविर्भावात् सर्व्वे प्राणिनः मदनभावापन्नं तदुचितं विकारं प्रकटयन्तीति भावः।

मधु द्विरेफः कुसुमैकपात्रे
पपौ प्रियां स्वामनुवर्त्तमानः।
शृङ्गेण च स्पर्शनिमीलिताक्षीं
मृगीमकण्डूयत कृष्णसारः ॥ ३६

अन्वयः। द्विरेफः स्वां प्रियाम् अनुवर्त्तमानः कुसुमैकपात्रे मधु पपौ, कृष्णसारश्च स्पर्शनिमीलिताक्षीं मृगीं शृङ्गेण अकण्डूयत ॥ ३६

तच्चेष्टा आह,—मध्वित्यादिभिश्चतुर्भि—मध्विति। द्वौ रेफौ वर्णविशेषौ यस्य सः द्विरेफः भ्रमरः। उपचारात् तदर्थोऽपि द्विरेफ उच्यते। यथाह कैयटः,—"शब्दधर्म्मेणाप्यर्थस्य व्यपदेशो दृश्यते। यथा भ्रमरशब्दस्य द्विरेफत्वात् द्विरेफो भ्रमरः। कुसुममेव एकं साधारणं पात्रं तस्मिन् मधु मकरन्दम्। "मधु मद्ये पुष्परसे" इति विश्वः। स्वां प्रियां भृङ्गीम् अनुवर्त्तमानः अनुसरन् पपौ, तत्पीतशेषं पपौ इत्यर्थः। कृष्णश्चासौ सारः शबलश्च कृष्णसारः कृष्णमृगः। "वर्णो वर्णेने"ति (२, १, ६९ पा०) समासः। स्पर्शेन स्पर्शसुखेन निमीलिताक्षीं मृगीं शृङ्गेण अक-

कण्डूयत कषितवान्। "कण्ड्वादिभ्यो यगि"ति (३, १, २७ पा०) यक्। ततः कर्त्तरि लङ्॥ ३६

३६। शृङ्गेण तृतीया करणे। निमीलितं अक्षिणी यस्याः सा ताम्, वसन्तविभावात् पशूनामपि शृङ्गारचेष्टाः भवन्ति।

ददौ रसात् पङ्कजरेणुगन्धि
गजाय गण्डूषजलं करेणुः।
अर्द्धोपभुक्तेन विसेन जायां
सम्भावयामास रथाङ्गनामा॥ ३७

अन्वयः। करेणुः रसात् पङ्कजरेणुगन्धि गण्डूषजलं गजाय ददौ, रथाङ्गनामा अर्द्धोपभुक्तेन विसेन जायां सम्भावयामास॥ ३७

ददाविति। रसात् अतिरागात् करेणुः करिणी। "करेणुरिभ्यां स्त्री नेभे" इत्यमरः। पङ्काज्जायत इति पङ्कजं तस्य रेणुः पङ्कजरेणुः तस्य गन्धोऽस्यास्तीति पङ्कजरेणुगन्धि गण्डूषजलं मुखान्तस्थितजलं गजाय ददौ। रथाङ्गनामा चक्रवाकः अर्द्धं यथा तथा उपभुक्तेन अर्द्धजग्धेन विसेन जायां सम्भावयामास। स्वजग्धशेषं ददौ इत्यर्थः॥ ३७

३७। रसात् हेतौ पञ्चमी। गजाय चतुर्थी सम्प्रदाने। विसेन तृतीया करणे।

गीतान्तरेषु श्रमवारिलेशैः
किञ्चित्समुच्छ्वासितपत्रलेखम्।
पुष्पासवाघूर्णितनेत्रशोभि
प्रियामुखं किम्पुरुषश्चुचुम्बे (म्ब)॥ ३८

अन्वयः। किम्पुरुषः श्रमवारिलेशैः किञ्चित् समुच्छ्वासितपत्रलेखं पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं गीतान्तरेषु चुचुम्ब॥ ३८

गीतेति। किम्पुरुषः किन्नरः श्रमवारिलेशैः खेदोदबिन्दुभिः किञ्चित् ईषत् समुच्छ्वासिताः विश्लेषिताः पत्रलेखाः यस्य तत्। पुष्पाणामासवः मद्यं पुष्पासवः पुष्पोद्भवमद्यमित्यर्थः। वसन्ते मधूकस्य सम्भवात्। पुष्पत्रासितमिति केचित्। तेन आघूर्णिताभ्याम् उद्भ्रान्ताभ्यां नेत्राभ्यां शोभते इति तथोक्तं प्रियामुखं गीतान्तरेषु गीतमध्येषु चुचुम्बे (म्ब)॥ ३८

३८। अमरवारिस्त्रीभिः तृतीया अनुक्ते कर्त्तरि। उत्+श्वस्+णिच्+क्तः कर्म्मणि। चुचुम्बे कथमात्मनेपदं; भ्वादिगणीयः परस्मैपदोयधातुरयं। सत्यं, निरङ्कुशाः कवयः इति मनसि विचिन्त्य सोढ़व्यमेतदौद्धत्यमिति।

पर्य्याप्तपुष्पस्तवकस्तनाभ्यः

स्फुरत्प्रवालोष्ठमनोहराभ्यः ।

लतावधूभ्यस्तरवोऽप्यवापुः

विनम्रशाखाभुजबन्धनानि ॥ ३९

अन्वयः। तरवः अपि पर्य्याप्तपुष्पस्तवकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः लतावधूभ्यः विनम्रशाखाभुजबन्धनानि अवापुः ॥ ३९

पर्य्याप्तेति। पर्य्याप्ताः समग्राः पुष्पस्तवकाः एव स्तनाः यासां ताभ्यः। "स्वाङ्गाच्चोपसर्जनात् असंयोगोपधादि"ति (४, १, ५४ पा०) विकल्पात् न ङीप्। स्फुरन्तः प्रवालाः पल्लवा एव ओष्ठाः तैः मनोहराभ्यः लताः एव वध्वः ताभ्यः सकाशात् तरवोऽपि, लिङ्गादेव पुंस्त्वं गम्यते। विनम्राः शाखाः एव भुजाः तैः बन्धनान्यवापुः, ताभिरालिङ्गिता इत्यर्थः। स्थावराणामपि मदनविकाराऽभूत् किमुतान्येषामिति भावः। एतच्च तरुलतानामपि चेतनत्वात् उक्तम्। यथाह मनुः—"अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" इति (१ अ० ४९ श्लो०)। अत्र रूपकालङ्कारः॥ ३९

३९। लतावधूभ्यः पञ्चमी अपादाने। अन्येषां का कथा वसन्तस्य प्रादुर्भावेण तरुगुल्मलतादीनामपि मदनविकाराऽजायत।

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्

हरः प्रसङ्ख्यानपरो बभूव ।

आत्मेश्वराणां न हि जातु विघ्नाः

समाधिभेदप्रभवो भवन्ति ॥४०

अन्वयः। अस्मिन् क्षणे हरः श्रुताप्सरोगीतिरपि प्रसंख्यानपरः बभूव, (तथाहि) विघ्नाः आत्मेश्वराणां जातु समाधिभेदप्रभवः न भवन्ति ॥४०

श्रुतेति। अस्मिन् क्षणे वसन्ताविर्भावकाले भगवान् हरः श्रुताप्सरोगीतिरपि दिव्याङ्गनागानमाकर्णयन्नपि इत्यर्थः। प्रसं-

ध्यानपरः आत्मानुसन्धानपर बभूव। हि तथाहि आत्मनः चित्तस्य ईश्वराणां नियन्तॄणां वशिनामित्यर्थः। विहन्यन्ते एभिरिति विघ्नाः प्रत्यूहाः। घञर्थे कप्रत्ययः। जातु कदाचिदपि समाधिभेदे समाधिभञ्जने प्रभवः समर्था न भवन्ति ॥४०

४०। मदनः आत्मविसर्जनेन यस्य समाधिं बिभेद तं समाधिरस्खलितं कर्त्तुं अप्सरसां गीतैः का शक्तिरित्यर्थः।

लतागृहद्वारगतोऽथ नन्दी
वामप्रकोष्ठार्पितहेमवेत्रः।
मुखार्पितैकाङ्गुलिसंज्ञयैव
मा चापलायेति गणान् व्यनैषीत् ॥ ४१

अन्वयः। अथ लतागृहद्वारगतः वामप्रकोष्ठार्पितहेमवेत्रः नन्दी मुखार्पितैकाङ्गुलिसंज्ञयैव गणान् मा चापलाय इति व्यनैषीत् ॥ ४१

लतेति। अथ लतागृहद्वारं गतः वामे प्रकोष्ठे अर्पितहेमवेत्रः धारितहैमदण्डः नन्दी नन्दिकेश्वरः। "नन्दी भृङ्गिरिटिस्तण्डुनन्दिनो नन्दिकेश्वर" इति कोषः। मुखे अर्पितायाः सरोषविस्मयस्तिमितावलोकं निहितायाः एकस्याः अङ्गुलेः तर्ज्जन्याः संज्ञया सूचनया एव। "संज्ञा स्याच्चेतना नाम हस्ताद्यैरर्थसूचना" इत्यमरः। गणान् प्रमथान् चापलाय चापलं कर्त्तुं मा भवतेति। क्रियार्थोपपदस्य इत्यादिना चतुर्थी। व्यनैषीत् शिक्षितवान् ॥४१

४१। अङ्गुलिसंज्ञया तृतीया करणे। तपोविघ्नान् गणादीन् निवारयितुं नन्दी सेवकस्य कार्य्यं साधयति।

निष्कम्पवृक्षं निभृतद्विरेफं
मूकाण्डजं शान्तमृगप्रचारम्।
तच्छासनात् काननमेव सर्वं
चित्रार्पितारम्भमिवावतस्थे ॥ ४२

अन्वयः। निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारं सर्वमेव काननं तच्छासनात् चित्रार्पितारम्भमिव अवतस्थे ॥ ४२

न केवलं गणा एव विनीताः, किन्तु जरायुजादिचतुर्विधं प्राणिजातमपीत्याह,—निष्कम्पेति । निष्कम्पवृक्षम् इदम् उद्भिज्जोपलक्षणम् । निभृतद्विरेफं निश्चलभृङ्गं, स्वेदजोपलक्षणमेतत् । मुकाण्डजं निःशब्दपक्षिसरीसृपादिकम्, एतेन अण्डजजातिरुक्ता । शान्तमृगप्रचारम्, जरायुजोपलक्षणमेतत्, सर्वमेव काननं तच्छासनात् नन्दीश्वराज्ञया चित्रार्पितमारम्भं चित्रलिखितारम्भम् इवावतस्थे । "नृगवाद्या जरायुजाः । स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः । उद्भिदस्तरुगुल्माद्याः" इत्यमरः ॥४२

४२ । तच्छासनात् इतौ पञ्चमी । उद्भिज्जाः, स्वेदायुजाः अण्डजाः, जरायुजाः सर्वे स्थिरवृत्तित्वं लभन्ते । एतेन नन्दिशासनस्य महान् उत्कर्षः सूचितः ।

दृष्टिप्रपातं परिहृत्य तस्य
कामः पुरःशुक्रमिव प्रयाणे ।
प्रान्तेषु संसक्तनमेरुशाखं
ध्यानास्पदं भूतपतेर्विवेश ॥ ४३

अन्वयः । कामः प्रयाणे पुरःशुक्रं (देशम्) इव तस्य दृष्टिप्रपातं परिहृत्य प्रान्तेषु संसक्तनमेरुशाखं भूतपतेर्ध्यानास्पदं विवेश ॥ ४३

दृष्टीति । कामः प्रयाणे यात्रायां पुरोगतः शुक्रो यस्मिन् देशे तं पुरःशुक्रं देशम् इव । "प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च । अपि शक्रसमो राजा हतसैन्यो निवर्त्तते" इति प्रतिषेधात् । तस्य दृष्टिप्रपातं दृग्विषयं परिहृत्य प्रान्तेषु पार्श्वदेशेषु संसक्ताः अन्योऽन्यसंसृष्टाः नमेरूणां सुरपुन्नागानां शाखाः यस्य तत्, तिरोधानयोग्यमिति भावः । भूतपतेः शिवस्य ध्यानास्पदं समाधिस्थानम् । "आस्पदं प्रतिष्ठायामिति (६, १, १४६ पा०) निपातः, विवेश ॥ ४३

४३ । यः कामः इन्द्रसमीपे एतावत् यावत् स्वपौरुषं प्रकटय्य साम्प्रतं समाधिगतस्य शिवस्य पुरतः आगमनं गन्तुं न शक्नोति । युयुत्सोः पुरःशुक्रगमनं निपाताय भवतीति भावः ।

स देवदारुद्रुमवेदिकायां
शार्दूलचर्मव्यवधानवत्याम् ।

आसीनमासन्नशरीरपातः
त्रियम्बकं संयमिनं ददर्श ॥ ४४

अन्वयः। आसन्नशरीरपातः स शार्दूलचर्मव्यवधानवत्यां देवदारुद्रुमवेदिकायाम् आसीनं संयमिनं त्रियम्बकं ददर्श ॥ ४४

स इति। आसन्नशरीरपातः आसन्नमृत्युः सः कामः शार्दूलचर्मणा व्यवधानवत्याम्, व्याघ्रचर्मास्तृतायामित्यर्थः। "मोक्षश्रीर्व्याघ्रचर्मणि" इति प्राशस्त्यादिति भावः। देवदारुद्रुमवेदिकायामासीनम् उपविष्टं संयमिनं समाधिनिष्ठं त्रियम्बकम् त्रिनेत्रं ददर्श। त्र्यम्बकमित्युक्ते पादपूरणव्यत्यासात् त्रियम्बकमिति पादपूरणार्थोऽयमियङादेशश्छान्दसः, महाकविप्रयोगात् अभियुक्तैरङ्गीकृतः। केचित् साहसिकाः त्रिलोचनमिति पेठुः ॥ ४४

४४। छन्दोनुरोधात् त्रियम्बकं पदमेतत् सोढ़व्यम्। तृतीय-नेत्रप्रभावेण कामः मरिष्यतीति हेतोः त्र्यम्बकदर्शनसुचितमिति भावः।

पर्य्यङ्कबन्धस्थिरपूर्वकाय-
मृज्वायतं सन्नमितोभयांसम्।
उत्तानपाणिद्वयसन्निवेशात्
प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ४५

अन्वयः। (कथम्भूतम्?) पर्य्यङ्कबन्धस्थिरपूर्व्वकायम् ऋज्वायतं सन्नमितोभयांसम्, उत्तानपाणिद्वयसन्निवेशात् अङ्कमध्ये प्रफुल्लराजीवमिव स्थितम् ॥ ४५

तमेव देवं षड्भिः श्लोकैर्वर्णयति,—पर्य्यङ्केति। पर्य्यङ्कबन्धेन वीरासनेन स्थिरपूर्वकायं निश्चलोत्तरार्द्धम् ऋजुरायतश्च ऋज्वायतः तं सन्नमितौ उभौ अंसौ यस्य तं तथोक्तम्। वृत्तिविषये उभशब्दस्थाने उभयशब्दप्रयोग इत्युक्तम् कैयटेन। उत्तानः ऊर्द्धतलो यः पाणिद्वयस्य सन्निवेशः संस्थानं तस्मात् अङ्कमध्ये प्रफुल्लं राजीवं पङ्कजं यस्य तम् इव स्थितम्। वीरासने वशिष्ठः,—"एकं पादमथैकस्मिन् विन्यस्योरौ तु संस्थितम्। इतरस्मिन् तथैवोरुं वीरासनमुदाहृतम्" इति। तथा योगसारे,—"उत्तानिते करतले करमुत्तानितं परम्। आदायाङ्कगतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरम्" इति ॥ ४५

४५। द्वयोः ऊर्व्वोः द्वौ पादौ संस्थाप्य यदुपवेशनं तद्वीरासनम्। योगिनां योगसाधनकाले उपवेशनस्य ईदृक् संस्थानं भवेत।

भुजङ्गमोन्नद्धजटाकलापं
कर्णावसक्तद्विगुणाक्षसूत्रम्।
कण्ठप्रभासङ्गविशेषनीलां
कृष्णत्वचं ग्रन्थिमतीं दधानम्॥ ४६

अन्वय.। पुनः कथम्भूतम्? भुजङ्गमोन्नद्धजटाकलापं कर्णावसक्तद्विगुणाक्षसूत्रं, कण्ठप्रभासङ्गविशेषनीलां ग्रन्थिमतीं कृष्णत्वचं दधानम्॥ ४६

भुजङ्गमेति। भुजङ्गमेन उन्नद्धः उन्नमय्य बद्धः जटाकलापः येन तं तथोक्तं कर्णावसक्तं कर्णावलम्बीत्यर्थः। अतएव द्विगुणं द्विरावृत्तम् अक्षसूत्रम् अक्षमाला यस्य तं कण्ठप्रभाणां सङ्गेन मिश्रणेन विशेषनीलाम् अतिनीलां ग्रन्थिमतीं बन्धनयुक्तां कृष्णत्वचं कृष्णमृगाजिनं दधानम्॥ ४६

४६। योगिनः शिवस्य योगसाधनकाले देह-संस्थानम् ईदृक् बभूव।

किञ्चित्प्रकाशस्तिमितोग्रतारैः
भ्रूविक्रियायां विरतप्रसङ्गैः।
नेत्रैरविस्पन्दितपक्ष्ममालैः
लक्ष्यीकृतघ्राणमधोमयूखैः॥ ४७

अन्वयः। (पुनः कथंभूतम्? किञ्चित्प्रकाशस्तिमितोग्रतारैः भ्रूविक्रियायां विरतप्रसङ्गैः अविस्पन्दितपक्ष्ममालैः अधोमयूखैः नेत्रैः लक्ष्यीकृतघ्राणम्॥ ४७

किञ्चिदिति। किञ्चित्प्रकाशाः ईषत्प्रकाशाः स्तिमिताः निश्चलाः उग्राश्च ताराः कनीनिका येषां तैः। "तारकाक्ष्णः कनीनिका" इत्यमरः। भ्रूविक्रियायां भ्रूविक्षेपे विरतप्रसङ्गैः प्रसक्तिरहितैः अविस्पन्दिपक्ष्ममालैः अचलितपक्ष्मपङ्क्तिभिः अधःप्रसृता मयूखा येषां तैः अधोमयूखैर्नेत्रैः त्रिनेत्रत्वाद् बहुवचनं, लक्ष्यीकृतघ्राणं नासाग्रनिविष्टदृष्टिमित्यर्थः। "करणान्यवहिष्कृत्य स्थाणुवन्निश्चलात्मकः। आत्मानं हृदये ध्यायेन्नासाग्रन्यस्तलोचनः" इति योगसारे॥ ४७

४७। नेत्रेरुपलक्षणे तृतीया। करणानि इन्द्रियाणि अपराणि इत्यर्थः। वहिष्कृत्य अन्येषाम् इन्द्रियाणां व्यापाररहितत्वात् जड़ीकृत्य स्वयं स्थाणुवत् जड़ इव निश्चलः सन् आत्मनि आत्मानं ध्यायेत्।

अवृष्टिसंरम्भमिवाम्बुवाह-
मपामिवाधारमनुत्तरङ्गम्।
अन्तश्चराणां मरुतां निरोधा-
न्निवातनिष्कम्पमिव प्रदीपम्॥ ४८

अन्वयः। (पुनः कथम्भूतम्) अन्तश्चराणां मरुतां निरोधात् अवृष्टिसंरम्भम् अम्बुवाहमिव स्थितम्, अनुत्तरङ्गम् अपाम् आधारमिव स्थितम्, निवातनिष्कम्पप्रदीपमिव स्थितम्॥ ४८

अवृष्टीति। अन्तश्चरन्तीति अन्तश्चराः तेषां मरुताम् प्राणादीनां निरोधात् हेतोः अवृष्टिसंरम्भम् अविद्यमानवर्षसम्भ्रमम् अम्बुवाहमिव स्थितम्, एतेन प्राणनिरोधः सूचितः। अनुत्तरङ्गम् अनुद्गततरङ्गम् अपामाधारम् ह्रदमिव स्थितम्, एतेन अपाननिरोधः सूचितः। तथा निवाते निर्वातदेशे निष्कम्पं निश्चलं प्रदीपमिव स्थितम्, एतेन अशेषवायुनिरोधः सूचितः। "निवातावाश्रयावातौ" इत्यमरः॥ ४८

४८। निरोधात् हेतौ पञ्चमी। अन्तर्गतस्य वायोर्निरोधेन स्वयं जड़ इव स्थित इति भावः।

कपालनेत्रान्तरलब्धमार्गै-
र्ज्योतिःप्ररोहैरुदितैः शिरस्तः।
मृणालसूत्राधिकसौकुमार्यां
बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः॥ ४९

अन्वयः। कपालनेत्रान्तरलब्धमार्गैः शिरस्तः उदितैः ज्योतिःप्ररोहैः मृणालसूत्राधिकसौकुमार्यां बालस्य इन्दोः लक्ष्मीं ग्लपयन्तम्॥ ४९

कपालेति। कपालनेत्रान्तरेण ब्रह्मकरोटिनेत्रविवरेण लब्धमार्गैः शिरस्तो ब्रह्मरन्ध्रात्। पञ्चम्यास्तसिल्। उदितैः उद्गतैः ज्योतिःप्ररोहैः तेजोऽङ्कुरैः मृणालसूत्राधिकं सौकुमार्यं मार्दवं यस्यास्तां बालस्येन्दोः शिशुचन्द्रस्य लक्ष्मीं ग्लपयन्तम्॥ ४९

४९। ज्योतिः प्रदीपैः तृतीया करणे। भालाग्निनिर्वादुत्पन्नैः ज्योतिर्भि शशिनो कान्तिम् अभिभवतीति भावः।

मनो नवद्वारनिषिद्धवृत्ति
हृदि व्यवस्थाप्य समाधिवश्यम्।
यमक्षरं क्षेत्रविदो विदुस्त-
मात्मानमात्मन्यवलोकयन्तम् ॥ ५०

अन्वयः। (पुनः कथम्भूतम्?) नवद्वारनिषिद्धवृत्ति समाधिवश्यं मनः हृदि व्यवस्थाप्य क्षेत्रविदः यम् अक्षरं विदुः तम् आत्मानम् आत्मनि अवलोकयन्तम् ॥ ५०

मन इति। नवभ्यो द्वारेभ्यो निषिद्धा निवर्त्तिता वृत्तिः सञ्चारो यस्य तत् तथोक्तम्। समाधिना प्रणिधानेन वश्यं वशङ्गतं, यत्-प्रत्ययः। "प्रणिधानं समाधानं समाधिस्त समाश्रये" इति हलायुधः। मनः हृदि हृदयाख्ये अधिष्ठाने व्यवस्थाप्य। तथाच वशिष्ठः,—"यतो निर्याति विषयान् यस्मिंश्चैव प्रलीयते। हृदयं तद्विजानीयात् मनसः स्थितिकारणम्" इति। क्षेत्रविदः क्षेत्रज्ञाः पुरुषाः। यं न क्षरतीति अक्षरम् अविनाशिनं विदुः विदन्ति। "विदो लटो वे"ति (३, ४, ८३ पा०) झेर्जुस्। तम् आत्मानम् आत्मनि स्वस्मिन् अवलोकयन्तं साक्षात्कुर्वन्तम्। स्वातिरेकेण परमात्मनोऽभावादिति भावः॥ ५०

५०। विषयः इन्द्रियग्राह्याः पदार्थाः यतः यस्मात् हृदयात् निर्याति निर्गच्छति, यस्मिन् हृदये च प्रलीयते विलीनो भवति, यत् मनसः चित्तस्य स्थितिकारणम् अवस्थानहेतुः, तत् हृदयम् अन्तः करणं विजानीयात् विद्यात्।

स्मरस्तथाभूतमयुग्मनेत्रं
पश्यन्नदूरान्मनसाप्यधृष्यम्।
नालक्षयत् साध्वससन्नहस्तः
स्रस्तं शरं चापमपि स्वहस्तात् ॥ ५१

अन्वयः। स्मरः तथाभूतं मनसापि अधृष्यम् अयुग्मनेत्रम् अदूरात् पश्यन् साध्वससन्न-हस्तः (सन्) स्वहस्तात् स्रस्तं शरं चापमपि न अलक्षयत् ॥ ५१

स्मर इति । स्मरः कामः तथाभूतं पूर्वोक्तरूपं मनसाप्यधृष्य-मयुग्मनेत्रं त्रिषमाचम् अदूरात् पश्यन्, साध्वसेन सन्नहस्तः विश्लथ-पाणिः सन् । स्वहस्तात् स्रस्तं शरं चापमपि चापञ्च नालक्षयत् न विवेद भीतो मुह्यतीति भावः ॥ ५१

५१ । मनसा तृतीया करणे कर्तरि वा । अदूरात् ल्यव्लोपे पञ्चमी । स्वहस्तात पञ्चमी अपादाने । अधृष्यं अनभिभवनीयं चिन्तयितुं न शक्यम् । शरत्यागेन अहं विपत्स्ये इति भीत्या चापं स्रस्तं स्खलितमित्यर्थः ।

निर्वाणभूयिष्ठमथास्य वीर्यं
सन्धुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्या-
मदृश्यत स्थावरराजकन्या ॥ ५२

अन्वय. । अथ निर्वाणभूयिष्ठम् अस्य वीर्य्यं वपुर्गुणेन सन्धुक्षयन्तीव वनदेवताभ्याम् अनुप्रयाता स्थावरराजकन्या ( मदनेन ) अदृश्यत ॥ ५२

निर्वाणेति । अथ निर्वाणेन नाशेन भूयिष्ठं निर्वाणभूयिष्ठं, नष्टप्रायमित्यर्थः । अस्य स्मरस्य वीर्य्यं बलं वपुर्गुणेन सौन्दर्य्येण सन्धुक्षयन्तीव पुनरुज्जीवयन्तीव स्थिता वनदेवताभ्यां सखीभूता-भ्याम् अनुप्रयाता अनुगता स्थावरराजकन्या पार्व्वती अदृश्यत दृष्टा ॥ ५२

५२ । गुणेन तृतीया करणे । वनदेवताभ्याम् अनुक्ते कर्त्तरि तृतीया । अदृश्यत कामेनेति शेषः । पार्व्वतीदर्शनात् कामस्य प्रादुर्भावेन हरचित्तस्य विकारसम्भावनात् शरनिक्षेपावसरः सूच्यते ।

अशोकनिर्भर्त्सितपद्मराग-
माकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्धुवारं
वसन्तपुष्पाभरणं वहन्ती ॥ ५३

अन्वयः । (कथम्भूता ?) अशोकनिर्भर्त्सितपद्मरागम् आकृष्टहेमद्युतिकर्णिकारं मुक्ताकलापीकृतसिन्धुवारं वसन्तपुष्पाभरणं वहन्ती ॥ ५३

तामिवाह चतुर्भिः,—अशोकेति। अशोकपुष्पेण निर्भर्त्सिताः तिरस्कृताः पद्मरागाः येन तथोक्तम्। आकृष्टहेमद्युतीनि आहृतस्वर्णाभरणवर्णानि कर्णिकाराणि यस्मिन् तत् तथोक्तं, मुक्ताकलापीकृतानि सिन्धुवाराणि निर्गुण्डीकुसुमानि यस्मिन् तत्। "सिन्धुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि" इत्यमरः वसन्तपुष्पाणि एवाभरणं वहन्ती ॥ ५३

५३। वसन्तकुसुमाभरणैर्विभूषिता मूर्तिमती वसन्तलक्ष्मीरिव सा वर्त्तते, एतेन आलम्बनोद्दीपना भावौ द्योतितौ।

आवर्जिता किञ्चिदिव स्तनाभ्यां
वासो वसाना तरुणार्करागम्।
पर्य्याप्तपुष्पस्तवकावनम्रा
सञ्चारिणी पल्लविनी लतेव ॥ ५४

अन्वयः। (पुनः कथम्भूता? स्तनाभ्यां किञ्चिदिव आवर्जिता तरुणार्करागं वासः वसाना अतएव पर्य्याप्तपुष्पस्तवकावनम्रा पल्लविनी सञ्चारिणी लतेव स्थिता ॥ ५४

आवर्जितेति। स्तनाभ्यां किञ्चिदावर्जिता ईषदानमितवपुः तरुणार्कस्य रागः इव रागो यस्य तत् बालार्कारुणम् इत्यर्थः। "उपमानपूर्वपदो बहुव्रीहिरुत्तरपदलोपश्च" (२, २, २४ पा० वा०)। वासो वसाना आच्छादयन्ती अतएव पर्य्याप्तपुष्पस्तवकावनम्रा पल्लविनी किशलयवती सञ्चारिणी लतेव स्थितेति शेषः ॥ ५४

५४। स्तनाभ्याम् अनुक्ते कर्त्तरि तृतीया। पूर्णयौवनेन स्तनयोः पूर्णावयवत्वात् शरीरस्य अवनमनं युक्तम्।

स्रस्तां नितम्बादवलम्बमाना
पुनः पुनः केशरदामकाञ्चीम्।
न्यासीकृतां स्थानविदा स्मरेण
मौर्वीं द्वितीयामिव कार्मुकस्य ॥ ५५

अन्वयः। स्थानविदा स्मरेण न्यासीकृतां कार्मुकस्य द्वितीयां मौर्वीमिव स्थितां नितम्बात् स्रस्तां केशरदामकाञ्चीं पुनः पुनः अवलम्बमाना ॥ ५५

स्रस्तामिति । स्थानविदा निक्षेपयोग्यस्थानवेदिना स्मरेण न्यासीकृतां निक्षेपीकृताम्, कर्म्मणि प्रभवतीति कार्म्मुकम् धनुः । "कर्म्मण उकञ्" (५, १, १०३ पा०) इत्युकञ्प्रत्ययः । तस्य द्वितीयां मौर्वीमिव स्थिताम् । अत्र हि न्यस्ता मौर्वी उत्तरत्र हरवैरनिर्यातनाय उपयुज्यत इति भावः । नितम्बात् स्रस्तां चलितां केशरदाम वकुलमाला सैव काञ्ची तां पुनःपुनरवलम्बमाना हस्तेन धारयन्ती ॥ ५५

५५ । नितम्बात् पञ्चमी अपादाने । स्मरेण धनुर्कर्त्तरि तृतीया । उपमालङ्कारः सूत्रस्य पूर्व्वमुक्तम् ।

सुगन्धिनिश्वासविवृद्धतृष्णं
बिम्बाधरासन्नचरं द्विरेफम् ।
प्रतिक्षणं सम्भ्रमलोलदृष्टिः
लीलारविन्देन निवारयन्ती ॥ ५६

अन्वयः । (पुनः कथम्भूता ? सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफं प्रतिक्षणं सम्भ्रमलोलदृष्टिः सती लीलारविन्देन निवारयन्ती ॥ ५६

सुगन्धीति । सुगन्धिभिः निश्वासैः विवृद्धतृष्णम् । बिम्बतुल्योऽधरः बिम्बाधरः । "वृत्तौ मध्यपदलोपः स्यादि"ति वामनः । तस्य आसन्नचरं सन्निकृष्टचरं द्विरेफं भृङ्गं प्रतिक्षणं सम्भ्रमेण लोलदृष्टिः चञ्चलाक्षी सती लीलारविन्देन निवारयन्ती ॥ ५६

५६ । लीलारविन्देन तृतीया करणे । सुगन्धः अस्त्यर्थे इन् । पद्मभ्रमात् भृङ्गः तन्मुखमास्वादयितुं चेष्टते । भृङ्गपतनात् चक्षुषः हानिः स्यादिति भिया तं निवारयन्ती ।

तां वीक्ष्य सर्व्वावयवानवद्यां
रतेरपि ह्रीपदमादधानाम् ।
जितेन्द्रिये शूलिनि पुष्पचापः
स्वकार्य्यसिद्धिं पुनराशशंसे (स) ॥ ५७

अन्वयः । सर्व्वावयवानवद्यां रतेरपि ह्रीपदम् आदधानां तां वीक्ष्य पुष्पचापः जितेन्द्रिये शूलिनि स्वकार्य्यसिद्धिं पुनः आशशंसे ॥ ५७

तामिति । सर्वावयवेषु अनवद्याम् अगर्ह्याम् । "अवद्य-पण्ये"ति ( ३, १, १०१ पा० ) निपातः । रतेः कामकलत्रस्यापि ह्रीपदं लज्जानिमित्तम् आदधानां न्यूनतामावहन्तीमित्यर्थः । तां पार्वतीं वीक्ष्य पुष्पचापः कामः जितेन्द्रिये दुर्जयेऽपि इत्यर्थः, शूलिनि शिवे विषये स्वकार्य्यसिद्धिं पुनराशशंसे चकमे । पूर्वं "साध्वससन्नहस्त" इत्यादिना कार्य्यसिद्धेः उन्मूलितत्वाभिधानाद्धित पुनरित्युक्तं ॥ ५७

५७ । तादृशीं पार्व्वतीं शिवस्य पुरतो दृष्ट्वा बाणनिक्षेपस्यायमेवावसरः इति कामः अचिन्तयत् ।

भविष्यतः पत्युरुमा च शम्भोः
समाससाद प्रतिहारभूमिम् ।
योगात् स चान्तः परमात्मसंज्ञं
दृष्ट्वा परं ज्योतिरुपारराम ॥ ५८

अन्वयः । उमा च भविष्यतः पत्युः शम्भोः प्रतिहारभूमिं समाससाद स च अन्तः परमात्मसंज्ञं परं ज्योतिः दृष्ट्वा योगात् उपारराम ॥ ५८

भविष्यत इति । उमा च भविष्यतः पत्युः शम्भोः प्रतिहारभूमिं द्वारदेशं समाससाद । "स्त्री द्वार्द्वारं प्रतिहारे" इत्यमरः । सः शम्भुः च अन्तः परमात्मा इति संज्ञा यस्य तत् परं मुख्यम् । "परं दूरान्यमुख्येषु" इति यादवः । ज्योतिर्दृष्ट्वा साक्षात्कृत्य योगात् ध्यानात् । "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः । उपारराम उपारतः । "व्याङ्परिभ्यो रमः" ( १, ३, ८३ पा० ) इति परस्मैपदम् ॥ ५८

५८ । शिवस्तु आत्मनि परमात्मसन्दर्शनेन समाधिः सिद्धं लब्ध्वा साम्प्रतं योगात् विरराम । समाधिः सिद्धिरूपा पार्वती तस्य द्वारदेशे दण्डायमाना भवति अतः सिद्धिर्जातेति भावः ।

ततो भुजङ्गाधिपतेः फणाग्रै-
रधः कथञ्चिद्धृतभूमिभागः ।

शनैःकृतप्राणविमुक्तिरीशः
पर्य्यङ्कबन्धं निविड़ं बिभेद ॥ ५९

अन्वयः। ततः भुजङ्गाधिपतेः फणाग्रैः, अधः कथञ्चित् धृतभूमिभागः शनैः कृतप्राणविमुक्तिः ईशः निविड़ं पर्य्यङ्कबन्धं बिभेद ॥ ५९

तत इति। भुजङ्गाधिपतेः शेषस्य फणाग्रैः अधः भूमेरधः कथञ्चित् अतियत्नेन धृतो भूमिभागः स्वोपवेशनभूभागो यस्य सः तथोक्तः। वायुधारणाहितलाघवनिवृत्त्या भगवतो गुरुत्वादिति भावः। शनैः कृता प्राणानां प्राङ्निरुद्धानां विमुक्तिः पुनः सञ्चारो येन सः कृतप्राणविमुक्तिः ईशो निविड़ं दृढ़ं पर्य्यङ्कबन्धं वीरासनं बिभेद शिथिलीचकार ॥ ५९

५९। समाधिसमये अन्तर्वायुनिरोधेन देहभारस्य लघुत्वात् तदधिष्ठितं भूभागं शेषः अनायासेन दधौ। साम्प्रतं योगमुक्तस्य विश्वम्भरमूर्त्तेः तस्य देहभारो महानासीदिति भावः।

तस्मै शशंस प्रणिपत्य नन्दी
शुश्रूषया शैलसुतामुपेताम्।
प्रवेशयामास च भर्त्तुरेनां
भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥ ६०

अन्वयः। अथ नन्दी तस्मै प्रणिपत्य शुश्रूषया उपेतां शैलसुतां शशंस, भर्तुः भ्रूक्षेपमात्रानुमतप्रवेशाम् एनां प्रवेशयामास च ॥ ६०

तस्मा इति। अथ नन्दी तस्मै भगवते, क्रियाग्रहणात् चतुर्थी। प्रणिपत्य शुश्रूषया सेवया निमित्तेन उपेतां सेवार्थमागताम् इत्यर्थः। शैलसुतां शशंस निवेदयामास। भर्त्तुः स्वामिनः भ्रूक्षेपमात्रेण भ्रूसंज्ञयैव अनुमतप्रवेशाम् अङ्गीकृतप्रवेशाम् एनाम् शैलसुतां प्रवेशयामास च ॥ ६०

६०। तस्मै क्रियायोगे चतुर्थी। शुश्रूषया तृतीया हेतौ। वहुमानाद्भावेन चतुष्कृतः पार्वतीं प्रवेशयितुम् आदिदेशेति शेषः।

तस्याः सखीभ्यां प्रणिपातपूर्वं
स्वहस्तलूनः शिशिरात्ययस्य।

व्यकीर्य्यत त्र्यम्बकपादमूले
पुष्पोच्चयः पल्लवभङ्गभिन्नः॥ ६१

अन्वयः। तस्याः सखीभ्यां स्वहस्तलूनः पल्लवभङ्गभिन्नः शिशिरात्ययस्य पुष्पोच्चयः प्रणिपातपूर्व्वं त्र्यम्बकपादमूले व्यकीर्य्यत॥ ६१

तस्या इति। तस्याः पार्वत्याः सखीभ्यां पूर्वोक्ताभ्यां स्वहस्तेन लूनः उपचितः पल्लवभङ्गभिन्नः किशलयशकलमिश्रः शिशिरात्ययस्य वसन्तस्य सम्बन्धी पुष्पचयः पुष्पप्रकरः। "हस्तादाने चेरस्तेय" इति (३, ३, ४० पा०) घञ्विषयत्वात् कवीनामयं प्रामादिकः प्रयोग इति वल्लभः। त्र्यम्बकपादमूले प्रणिपातपूर्व्वं नमस्कारपूर्व्वकं व्यकीर्य्यत विक्षिप्तः॥ ६१

६१। सखीभ्यां तृतीया अनुक्ते कर्त्तरि करणे वा।

उमापि नीलालकमध्यशोभि
विस्रंसयन्ती नवकर्णिकारम्।
चकार कर्णच्युतपल्लवेन
मूर्ध्ना प्रणामं वृषभध्वजाय॥ ६२

अन्वयः। नीलालकमध्यशोभि नवकर्णिकारं विस्रंसयन्ती कर्णच्युतपल्लवेन मूर्ध्ना वृषभध्वजाय प्रणामं चकार॥ ६२

उमापीति। उमापि नीलालकानां मध्ये शोभत इति तथोक्तम्, अलकान्यस्तमित्यर्थः। नवकर्णिकारं विस्रंसयन्ती कर्णाच्युतः पल्लवः यस्य तेन मूर्ध्ना वृषभध्वजाय प्रणामं चकार। क्रियाग्रहणात् सम्प्रदानत्वम्॥ ६२

६२। वृषभध्वजाय क्रियायोगे चतुर्थी। मूर्ध्ना तृतीया करणे।

अनन्यभाजं पतिमाप्नुहीति
सा तथ्यमेवाभिहिता भवेन।
न हीश्वरव्याहृतयः कदाचित्
पुष्णन्ति लोके विपरीतमर्थम्॥ ६३

अन्वयः। सा भवेन अनन्यभाजं पतिम् आप्नुहि इति तथ्यमेव अभिहिता (तथाहि) ईश्वरव्याहृतयः कदाचिदपि लोके विपरीतम् अर्थं न पुष्णन्ति ॥ ६३

अनन्येति। सा कृतप्रणामा देवी भवेन हरेण अन्यां न भजतीति तम् अनन्यभाजम्। "भजो ण्वि"रिति (३, २, ६२ पा०) ण्विप्रत्ययः सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः। पतिमाप्नुह्णीति तथ्यम् सत्यम् एवाभिहिता उक्ता उत्तरत्र तथैव सम्भवादिति भावः। अभिदधातेर्ब्रुवर्थस्य दुहादित्वात् अप्रधाने कर्म्मणि क्तः। तथाहि ईश्वरव्याहृतयः महापुरुषोक्तयः कदाचित् अपि लोके भुवने। "लोकस्तु भुवने जने" इत्यमरः। विपरीतं विसंवादिनम् अर्थम् अभिधेयं न पुष्णन्ति न बोधयन्तीत्यर्थः॥ ६३

६३। भवेन तृतीया अनुक्ते कर्त्तरि।

कामस्तु बाणावसरं प्रतीक्ष्य
पतङ्गवद्वह्निमुखं विविक्षुः।
उमासमक्षं हरबद्धलक्ष्यः
शरासनज्यां मुहुराममर्श॥ ६४

अन्वयः। कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवत् वह्निमुखं विविक्षुः, उमासमक्षं हरबद्धलक्ष्यः (सन्) शरासनज्यां मुहुः आममर्श॥ ६४

कामस्त्विति। कामस्तु बाणावसरं प्रतीक्ष्य उमासन्निधानात् अयमेव बाणप्रयोगसमय इति ज्ञात्वा पतङ्गेन तुल्यं पतङ्गवत् शलभवत्। "समौ पतङ्गशलभौ" इत्यमरः। "तेन तुल्यं क्रिया चेद्वतिरि"ति (५, १, ११५ पा०) वतिप्रत्ययः। वह्निमुखं विविक्षुः प्रवेष्टुमिच्छुः। विशतेः सनन्तादुप्रत्ययः। उमायाः समक्षम् उमासमक्षम्। अक्ष्णः समीपम् "अव्ययीभावे शरत्प्रभृतिभ्य" इति (५, ४, १०७ पा०) समासान्तोऽच्प्रत्ययः। हरे बद्धलक्ष्यः सन् शरासनस्य ज्यां मौर्वीं मुहुराममर्श परामृष्टवान्॥६४

६४। हरसमाधिभङ्गादहं विपत्स्ये इति पूर्व्वमेव कामोऽजानात्, राज्ञः इन्द्रस्य शासनेन तादृक् साहसिकं कार्य्यं कर्त्तुमुत्सहते। वह्निमुखं विविक्षुरित्यादिना तदेव स्फुटतरम्।

अथोपनिन्ये गिरिशाय गौरी
तपस्विने ताम्ररुचा करेण ।
विशोषितां भानुमतो मयूखैः ।
मन्दाकिनीपुष्करबीजमालाम् ॥ ६५

अन्वयः । अथ गौरी तपस्विने गिरिशाय ताम्ररुचा करेण भानुमतः मयूखैः विशोषितां मन्दाकिनीपुष्करबीजमालाम् उपनिन्ये ॥ ६५

अथेति । अथ गौरी तपोऽस्यास्तीति तपस्वी । "अस्मायामेधास्रजो विनि"रिति ( ५, २, १२१ पा० ) विनिप्रत्ययः । तस्मै तपस्विने गिरिशाय ताम्ररुचा रक्तवर्णेन करेण भानुमतः अंशुमतः मयूखैर्विशोषितां मन्दाकिन्याः पुष्कराणि पद्मानि तेषां बीजानि तेषां मालां जपमालिकां उपनिन्ये समर्पितवती ॥ ६५

६५ । गिरिशाय चतुर्थी सम्प्रदाने । करेण करणे तृतीया । मयूखैः तृतीया अनुक्ते कर्त्तरि । तपस्विने तपःप्रयोजनं वस्तु विना अन्यत् किमपि न रोचते इति मत्वा तं तोषयितुं जपमालिका-दानेन पार्व्वत्या कामस्य शरक्षेपावसरो दत्तः ।

प्रतिग्रहीतुं प्रणयिप्रियत्वात्
त्रिलोचनस्तामुपचक्रमे च ।
सम्मोहनं नाम च पुष्पधन्वा
धनुष्यमोघं समधत्त बाणम् ॥ ६६

अन्वयः । त्रिलोचनश्च प्रणयिप्रियत्वात् तां प्रतिग्रहीतुम् उपचक्रमे पुष्पधन्वा च सम्मोहनं नाम अमोघं बाणं धनुषि समधत्त ॥ ६६

प्रतिग्रहीतुमिति । त्रिलोचनश्च प्रणयिप्रियत्वात् अर्थिप्रियत्वात् ताम् अक्षमालां प्रतिग्रहीतुं स्वीकर्त्तुम् उचक्रमे । पुष्पं धनुर्यस्य सः पुष्पधन्वा कामस्य । "वा संज्ञायाम्" ( ५, ४, १३३ पा० ) इत्यनङादेशः । सम्मोह्यते अनेनेति सम्मोहनं नाम । नामेति प्रसिद्धौ । अमोघं बाणं सायकं धनुषि समधत्त संहितवान् ॥ ६६

६६ । प्रणयिप्रियत्वात् पञ्चमी हेतौ । उपचक्रमे "प्रोपाभ्यामारम्भे" इति सूत्रेण उपपूर्व्वस्य क्रम्धातोरात्मनेपदम् ।

हरस्तु किञ्चित्परिलुप्तधैर्य्यः
चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥ ६७

अन्वयः। हरस्तु चन्द्रोदयारम्भे अम्बुराशिरिव किञ्चित्परिलुप्तधैर्य्यः बिम्बफलाधरोष्ठे उमामुखे विलोचनानि व्यापारयामास ॥ ६७

हरस्त्विति। हरस्तु हरोऽपि चन्द्रोदयारम्भे अम्बुराशिरिव किञ्चित् ईषत् परिलुप्तधैर्य्यः न तु प्राकृतजनवत् अत्यन्तलुप्तधैर्य्य इति भावः। बिम्बफलतुल्यः अधरोष्ठः यस्य तस्मिन् उमामुखे विलोचनानि व्यापारयामास, त्रिभिरपि लोचनैः साभिलाषम् अद्राक्षीदित्यर्थः। एतेन भगवतो रतिभावोदय उक्तः ॥ ६७

६७। विचारः। अधरोष्ठे इत्यत्र एकवचनं कथं स्यात्। सन्निनाथेन अधरोष्ठः अस्येति पुंलिङ्गविधानात् समाहाराशङ्का निरस्ता तदधुना किम्भवेत्? सत्यम्। अधरसहितः ओष्ठः इत्थं समासवाक्येन एकवचनं सङ्गच्छते।

विवृण्वती शैलसुतापि भाव-
मङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ
मुखेन पर्य्यस्तविलोचनेन ॥ ६८

अन्वयः। शैलसुतापि स्फुरद्बालकदम्बकल्पैः अङ्गैः भावं विवृण्वती पर्य्यस्तविलोचनेन चारुतरेण मुखेन साचीकृता तस्थौ ॥ ६८

विवृण्वतीति। शैलसुतापि स्फुरद्बालकदम्बकल्पैः विकसत्कोमलनीपसदृशैः पुलकितैरित्यर्थः। "ईषदसमाप्तौ" ५, ३, ६७ पा०) इत्यादिना कल्पप्रत्ययः। अङ्गैर्भावं रत्याख्यं विवृण्वती प्रकाशयन्ती चारुतरेण पर्य्यस्तविलोचनेन व्रीड़ाविभ्रान्तनेत्रेण मुखेन असाचि साचि सम्पद्यमाना कृता साचीकृता तिर्य्यक्कृता। "तिर्य्यगर्थे साचि तिरः" इत्यमरः। तस्थौ स्थिया मुखं साचीकृत्य स्थितेत्यर्थः। न केवलं हरस्यैव, देव्या अप्युदितो रतिभाव इति भावः ॥ ६८

६८। अङ्गैः अनुक्ते कर्त्तरि तृतीया। चारुतरेण मुखेनोपलक्षणे तृतीया। अनेन पार्व्वत्या अपि रतिभावो प्रादुरभूत्।

अथेन्द्रियक्षोभमयुग्मनेत्रः
पुनर्वशित्वाद्बलवन्निगृह्य ।
हेतुं स्वचेतोविकृतेर्दिदृक्षु-
र्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥ ६९

अन्वयः। अथ अयुग्मनेत्रः वशित्वात् इन्द्रियक्षोभं पुनर्बलवत् निगृह्य स्वचेतोविकृतेः हेतुं दिदृक्षुः दिशाम् उपान्तेषु दृष्टिं ससर्ज ॥ ६९

अथेति। अथ अयुग्मानि नेत्राणि यस्य सः अयुग्मनेत्रः त्रिनेत्रः, वशित्वात् जितेन्द्रियत्वात् इन्द्रियक्षोभं पूर्वोक्तमिन्द्रिय-विकारं पुनः बलवत् दृढ़ं निगृह्य निवार्य्य स्वचेतोविकृतेः स्वचित्त-विकारस्य हेतुं कारणं दिदृक्षुः द्रष्टुमिच्छुः दिशामुपान्तेषु दृष्टिं ससर्ज प्रसारयामास ॥ ६९

६९। वशित्वात् हेतौ पञ्चमी। सखीभ्यां दृश्यमानायाः अनूढ़ायाः मे रमणं नोचितं इति साचीकृतां तां विहाय हरः चित्तविकारहेतुम् अनुसन्धातुं यतते स्म।

स दक्षिणापाङ्गनिविष्टमुष्टिं
नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं
प्रहर्त्तुमभ्युद्यतमात्मयोनिम् ॥ ७०

अन्वयः। सः दक्षिणापाङ्गनिविष्टमुष्टिं नतांसम् आकुञ्चितसव्यपादं चक्रीकृतचारुचापं प्रहर्त्तुमभ्युद्यतम् आत्मयोनिं ददर्श ॥ ७०

स इति। सः भगवान् दक्षिणापाङ्गे निविष्टा स्थिता मुष्टिः यस्य तं नतांसम् आकुञ्चितः सव्यपादः यस्य तम् आलीढ़ाख्य-स्थानके स्थितमित्यर्थः। चक्रीकृतचारुचापं मण्डलीकृतसौम्यको-दण्डं प्रहर्त्तुमभ्युद्यतमात्मयोनिं मनोभवं ददर्श। आलीढ़लक्षण-माह यादवः,—"स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। वितस्त्यन्तरगौ पादौ मण्डलं तोरणाकृती। समानौ स्यात् सम-

पदमालीढं पदमग्रतः । दक्षिणं वाममाकुञ्च्य प्रत्यालीढं विपर्य्ययः" इति ॥ ७०

७० । शरसन्धानं पूरयित्वा आलीढावस्थितं मदनं दृष्टवान् ।

तपःपरामर्शविवृद्धमन्योः
भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्च्चिः सहसा तृतीया-
दक्ष्णः कृशानुः किल निष्पपात ॥ ७१

अन्वयः । तपःपरामर्शविवृद्धमन्योः भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य तृतीयात् अक्ष्णः स्फुरन् उदर्च्चिः कृशानुः सहसा निष्पपात, किल ॥ ७१

तप इति । तपःपरामर्शेन तपस आस्कन्दनेन विवृद्धमन्योः भ्रूभङ्गेण दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तस्य हरस्य तृतीयादक्ष्णः स्फुरन् उद्दीप्यमानः उदर्च्चिः उद्भूतज्वालः कृशानुः अग्निः सहसा अतर्कितमिव । "अतर्किते तु सहसा" इत्यमरः । निष्पपात किल निश्चक्राम खलु ॥ ७१

७१ । अक्ष्णः पञ्चमी अपादाने । तपःक्लेशेन विवृद्धमन्युत्वात् भालनेत्रादग्निरजायत ।

क्रोधं प्रभो संहर संहरेति
यावद्गिरः खे मरुतां चरन्ति ।
तावत् स वह्निर्भवनेत्रजन्मा
भस्मावशेषं मदनं चकार ॥ ७२

अन्वयः । हे प्रभो ! क्रोधं संहर संहर इति मरुतां गिरः यावत् खे चरन्ति तावत् भवनेत्रजन्मा स वह्निः मदनं भस्मावशेषं चकार ॥ ७२

क्रोधमिति । हे प्रभो ! स्वामिन् ! क्रोधं संहर संहर निवर्त्तय निवर्त्तय । "चापले द्वे भवत इति वक्तव्य"मिति ( ८, १, १२ पा० सू० स्थेन ) वार्त्तिकेन द्वित्वम् । "सम्भ्रमेण हृत्तिश्चापलमिति" काशिका । इत्येवं मरुतां देवानां गिरः वाचः खे व्योम्नि यावत् चरन्ति प्रवर्त्तन्ते तावत् तत्कालमेव भवस्य नेत्रात् जन्म यस्य सः भवनेत्रजन्मा । "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदे"

इति वामनः। सः वह्निर्मदनं भस्मैवावशेषो यस्य तं भस्मावशेषं चकार, ददाह इत्यर्थः॥ ७२

७२। संहारमूर्तेः शिवस्य कोपात् सृष्टिरियं नंक्ष्यति इति भिया सर्वे देवा क्रोधं निवारयन्तः स नेत्राग्निना भस्मकलेवरं मदनं ददृशुरित्यर्थः।

तीव्राभिषङ्गप्रभवेण वृत्तिं।
मोहेन संस्तम्भयतेन्द्रियाणाम्।
अज्ञातभर्तृव्यसना मुहूर्त्तं
कृतोपकारेव रतिर्बभूव॥ ७३

अन्वयः। तीव्राभिषङ्गप्रभवेण इन्द्रियाणां वृत्तिं संस्तम्भयता मोहेन मुहूर्त्तम् अज्ञात-भर्तृव्यसना रतिः कृतोपकारेव बभूव॥ ७३

तीव्रेति। तीव्राभिषङ्गप्रभवेण अतिदुःसहाभिभवसम्भवेन। "अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च" इति वैजयन्ती। इन्द्रियाणां चक्षुरादीनां वृत्तिं व्यापारं संस्तम्भयता प्रतिबध्नता मोहेन मूर्च्छया कर्त्रा रतिः मदनभार्य्या मुहूर्त्तम् अज्ञातं भर्तृव्यसनं भर्तृनाशो यया सा तथोक्ता सती कृतोपकारेव बभूव सहसा दुःखोपनिपातात् सुमूर्च्छेत्यर्थः। मोहेन दुःखसंवेदनाभावात् तस्योपकारकत्वोक्तिः॥ ७३

७३। मदनमरणात् प्राक् शिवस्य तादृशीं प्रकृतिं विलोक्य रतिर्मुमोह। स मोहः तया उपकार इव मन्यते स्म।

तमाशु विघ्नं तपसस्तपस्वी
वनस्पतिं वज्र इवावभज्य।
स्त्रीसन्निकर्षं परिहर्त्तुमिच्छ-
न्नन्तर्दधे भूतपतिः सभूतः॥ ७४

अन्वयः। तपस्वी भूतपतिः तपसः विघ्नं तम् आशु वज्रः वनस्पतिमिव अवभज्य सभूतः (सन्) अन्तर्दधे॥ ७४

तमिति। तपस्वी तपोनिष्ठः भूतपतिः शिवः तपसो विघ्नम् अन्तरायभूतं तं कामम् आशु वज्रः अशनिः वनस्पतिं वृक्षम् इव

अवभज्य भङ्क्त्वा स्त्रीसन्निकर्षं स्त्रीसन्निधानं परिहर्तुमिच्छन्, तस्यानर्थहेतुत्वादिति भावः। सभूतः सगनः सन् अन्तर्दधे ॥ ७४

७४। यथा वज्रः विशालं वनस्पतिं भनक्ति, तथा सः दुर्जेयं कामम् अभनक् विकारहेतुं स्त्रीसन्निकर्षं च जहाविति भावः।

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथञ्चित् ॥ ७५

अन्वयः। शैलात्मजापि उच्छिरसः पितुः अभिलाषम् आत्मनः ललितं वपुश्च व्यर्थं समर्थ्य सख्योः समक्षम् इति च अधिकजातलज्जा शून्या (सती) कथञ्चित् भवनाभिमुखी जगाम ॥ ७५

शैलात्मजेति। शैलात्मजा पार्व्वती अपि उच्छिरसः उन्नतशिरसो महतः पितुरभिलाषं हरो वरोऽस्त्विति मनोरथं, ललितं सुन्दरम् आत्मनो वपुश्च व्यर्थं निष्फलं समर्थ्य विचार्य्य सख्योः समक्षं पुरः इति च हेतुना अधिकं जातलज्जा समानजनसमक्षम् अवमानस्य अतिदुःसहत्वादिति भावः। शून्या निरुत्साहा सती कथञ्चित् कष्टेण भवनस्याभिमुखी जगाम ॥ ७५

७५। साम्प्रतं पार्व्वती हरो वरोऽस्तु इति पितुर्मनोरथविफलत्वात् शिवेन सम्यक् न परिरब्धा सती स्वसौन्दर्य्यं च अनादृत्य सखीभ्यां मे तादृशी अवस्था दृष्टा इति लज्जिता, भग्नचित्ता सती गृहं अगच्छत्।

सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम् ।
सुरगज इव बिभ्रत् पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीत् वेगदीर्घीकृताङ्गः ॥ ७६

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
मदनदहनो नाम तृतीयः सर्गः ॥ ३

अन्वयः। सपदि अद्रिः रुद्रसंरम्भभीत्या मुकुलिताक्षीम् अनुकम्प्यां दुहितरं दोर्भ्याम् आदाय दन्तलग्नां पद्मिनीं बिभ्रत् सुरगज इव वेगदीर्घीकृताङ्गः प्रतिपथगतिः आसीत्॥ ७६

सपदीति। सपदि अद्रिः हिमवान् रुद्रस्य संरम्भात् कोपात् भीत्या "संरम्भः सम्भ्रमे कोपे" इति विश्वः। मुकुलिताक्षीं निमीलितनेत्राम्। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" (५, ४, ११३ पा०) इति षच्प्रत्ययः। "षिद्गौरादिभ्यश्चे"ति (४, १, ४१ पा०) ङीष्। अनुकम्पितुमर्हाम् अनुकम्प्याम्। "ऋहलोर्ण्यदि"ति ३, १, १२४, पा०) ण्यत्प्रत्ययः दुहितरं दोर्भ्यामादाय दन्तयोर्लग्नां पद्मिनीं नलिनीं बिभ्रत् सुरगज इव वेगेन श्रयेण दीर्घीकृताङ्गः आयतीकृतशरीरः पन्थानं प्रतिगता प्रतिपथा मार्गानुसारिणी गतिर्यस्य सः प्रतिपथगतिरासीत्, पन्थानम् अनुसृत्य जगाम इत्यर्थः॥ ७६

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां तृतीयः सर्गः॥ ३

७६। संरम्भभीत्या हेतौ तृतीया। दोर्भ्यां करणे तृतीया। हिमवान् तनयां तादृगवस्थां विलोक्य हस्ताभ्यां गृहीत्वा गृहमनयदिति शेषः।

---

## चतुर्थः सर्गः ।

अथ मोहपरायणा सती ।
विवशा कामवधूर्विबोधिता ।
विधिना प्रतिपादयिष्यता
नववैधव्यमसह्यवेदनम् ॥ १

अन्वयः । अथ मोहपरायणा विवशा सती कामवधूः असह्यवेदनं नववैधव्यं प्रतिपादयिष्यता विधिना विबोधिता ॥ १

मूर्च्छिता रतिरित्युक्तं सम्प्रति तद्वृत्तान्तमेवाह,—अथेति । अथ अनन्तरं मोहो मूर्च्छा परम् अयनं आश्रयो यस्याः सा मोहपरायणा मोहैकशरणा सती । "परायणमभिप्रेते तत्परे परमाश्रये" इति यादवः । विवशा मूढ़त्वात् निश्चेष्टा कामवधूः रतिः । असह्या दुःसहा वेदना यस्मिन् तत् तथोक्तम् । विधवायाः गतभर्त्तृकायाः भावः वैधव्यं, नवञ्च तत् वैधव्यञ्चेति नववैधव्यम् । नवग्रहणं दुःसहत्वद्योतनार्थम् । प्रतिपादयिष्यता अनुभावयिष्यता क्रियार्थक्रियायां लृट् । विधिना दैवेन । "विधिर्विधाने दैवे च" इत्यमरः । विबोधिता वैधव्यानुफलोऽयं विधिरिति भावः । अस्मिन् सर्गे वियोगिनीवृत्तानि—"विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी" इति लक्षणात् ॥ १

१ । विधिना अनुक्ते कर्त्तरि तृतीया । असह्यवेदनं नववैधव्यम् अनुभविष्यत इतीः सा लब्धचैतन्या भवतीति शेषः ।

अवधानपरे चकार सा
प्रलयान्तोन्मिषिते विलोचने ।
न विवेद तयोरतृप्तयोः
प्रियमत्यन्तविलुप्तदर्शनम् ॥ २

अन्वयः । सा प्रलयान्तोन्मिषिते विलोचने अवधानपरे चकार अतृप्तयोः तयोः प्रियम् अत्यन्तविलुप्तदर्शनं (सन्तम्) न विवेद ॥ २

अवधानेति। सा रतिः प्रलयान्ते मूर्च्छावसाने। "प्रलयो नष्टचेष्टता" इत्यमरः। उन्मिषिते उन्मीलिते विलोचने, अवधानं परं प्रधानं ययोः ते अवधानपरे दिदृक्षया अवहिते चकार। द्रष्टव्याभावात्तु न विवेदेत्याह—नेति। प्रियं कामम् अतृप्तयोः तृप्तिं न गतयोः, नित्यदिदृक्षमाणयोः इत्यर्थः। तयोः लोचनयोः दर्शनक्रियापेक्षया सम्बन्धे षष्ठी। अत्यन्तविलुप्तं दर्शनं स्वलोचनयोः करणयोः यस्य कर्मभूतस्य तम् अत्यन्तविलुप्तदर्शनं सन्तं न विवेद न ज्ञातवती। प्रियनाशापरिज्ञानात् दिदृक्षाचक्रे इति तात्पर्य्यार्थः॥ २

२। मूर्च्छोत्थितेव स कामः भस्मकलेवरः आसीदिति न विवेद, तेन समन्तात् तम् अनुसन्धातुं भस्मकलेवरं ददर्शेति शेषः।

अयि जीवितनाथ! जीवसी-
त्यभिधायोत्थितया तया पुरः।
ददृशे पुरुषाकृति क्षितौ
हरकोपानलभस्म केवलम्॥ ३

अन्वयः। अयि जीवितनाथ! जीवसि इत्यभिधाय उत्थितया तया पुरः क्षितौ पुरुषाकृति केवलं हरकोपानलभस्म ददृशे॥ ३

अयीति। अयीति प्रश्ने। "अयि प्रश्नानुनययोः" इति विश्वः। अयि जीवितनाथ! जीवसि प्राणिषि कच्चिदिति? अभिधायोत्थितया तया रत्या पुरः अग्रे क्षितौ पुरुषस्य आकृतिरिव आकृतिर्यस्य तत् पुरुषाकृति केवलम् एकं हरकोपानलभस्म ददृशे दृष्टं, न तु पुरुष इति भाव.॥ ३

३। पतिवियोगविधुरा सा अनुसन्धाय कामं न ददर्श, पुरुषाकृतिं भस्मराशिं केवं पुरतः अपश्यत्। तयेति तृतीया अनुक्ते कर्त्तरि।

अथ सा पुनरेव विह्वला
वसुधालिङ्गनधूसरस्तनी।
विललाप विकीर्णमूर्द्धजा
समदुःखामिव कुर्वती स्थलीम्॥ ४

अन्वयः। अथ पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी विकीर्णमूर्धजा (सती) सा रतिः स्थलीं समदुःखां कुर्वतीव विललाप॥ ४

अथेति। अथ भस्मदर्शनानन्तरं पुनरेव विह्वला विक्लवा वसुधालिङ्गनधूसरस्तनी वसुधालिङ्गनेन क्षितिलुण्ठनेन धूसरौ धूसरवर्णौ स्तनौ यस्याः सा तथोक्ता। "स्वाङ्गाच्चोपसर्जनादसंयोगोपधादि"ति(४, १, ५४ पा०) ङीप्। विकीर्णमूर्द्धजा विकीर्णा विक्षिप्ताः मूर्द्धजाः केशा यस्याः सा तथोक्ता सा रतिः स्थलीं वनभूमिं, तत्रत्यान् प्राणिन इत्यर्थः। "जानपदकुण्डगोणस्थले"त्यादिना (४, १, ४२ पा०) ङीष्। समदुःखां स्वतुल्यशोकां कुर्वतीव विललाप परिदेवितवती। "विलापः परिदेवनं" इत्यमरः॥ ४

४। सा आत्मानं भूमौ लुण्ठयित्वा इत्थं विललाप यतः तस्याः आर्त्तघोषेण सर्व्वैव वनभूमिः दुःखेन निश्चचाल।

उपमानमभूद्विलासिनां
करणं यत् तव कान्तिमत्तया।
तदिदं गतमीदृशीं दशां
न विदीर्य्ये कठिनाः खलु स्त्रियः॥ ५

अन्वयः। तव यत् करणं कान्तिमत्तया विलासिनाम् उपमानम् अभूत्, तत् इदम् ईदृशीं दशां गतम् (तथापि) न विदीर्ये, (तथाहि) स्त्रियः कठिनाः खलु॥ ५

उपमानमिति। तव यत्करणं गात्रं "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः। कान्तिमत्तया सौन्दर्य्येण हेतुना विलासिनां विलसनशीलानाम्। "वौ कषलसे"त्यादिना (३, २, १४३ पा०) घिनुण्प्रत्ययः। उपमीयते येन तत् उपमानम् अभूत्, तत् करणं इदमीदृशीं दशाम् अवस्थां गतं भस्मीभूतमित्यर्थः, तथापि न विदीर्य्ये न विदीर्णा भवामि। कर्म्मकर्त्तरि लट्। तथाहि, स्त्रियः कठिनाः खलु, कठिनत्वात् अविदीर्य्यमाणत्वमित्यर्थः। कारणात् कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः। "धीरसञ्चारिणी दृष्टिर्गतिर्गोवृषभाञ्चिता। स्मितपूर्वं तथालापो विलास इति कीर्त्तितः॥५

५। विचारः। विदीर्य्ये मल्लिनाथेन कर्मकर्त्तरि वाच्ये क्रियेयं विधीयते, तत् कथं भवेत्? सकर्मकाणां धातूनां कर्म्मकर्त्तरि वाच्ये प्रयोगो दृश्यते दृधातुरचाकर्म्मकः, अतएवात्मनेपदमेकवचनञ्च चिन्त्यं सोऽड्यं वा।

क्व नु मां त्वदधीनजीवितां
विनिकीर्य्य क्षणभिन्नसौहृदः
नलिनीं क्षतसेतुबन्धनो
जलसङ्घात इवासि विद्रुतः॥ ६

अन्वयः। क्षतसेतुबन्धनः जलसङ्घातः (जलैकायत्तजीवितां) नलिनीमिव (त्वं) क्षणभिन्नसौहृदः (सन्) त्वदधीनजीवितां मां क्व नु विनिकीर्य्य विद्रुतोऽसि॥ ६

क्वेति हे प्रिय! क्षतसेतुबन्धनः भग्नसेतुबन्धः जलसङ्घातः जलौघः नलिनीमिव जलैकायत्तजीवितामिति शेषः। त्वदधीनजीवितां त्वदायत्तप्राणां मां क्व नु विनिकीर्य्य कुत्र वा निक्षिप्य क्षणभिन्नसौहृदः क्षणत्यक्तसौहार्दः सन् विद्रुतः पलायितोऽसि। सेतुसौहृदयोः स्थितिहेतुत्वेन साम्यम्। सुहृदो भावः सौहृदं, युवादित्वादण्प्रत्ययः। "हृदयस्य हृल्लेखयदण्लासेषु" इति (६, ३,५०) हृदादेशः। अणि हृद्भावात् न "हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य च" (७, ६, १९ पा०) इति उभयपदवृद्धिः। हृद्भूतस्याभिधाने तु उभपदवृद्धिः स्यात्, यथा सुहृदो भावः सौहार्दमिति तदेवाह वामनः—"सौहृददौर्हृदशब्दौ अनणि हृद्भावात्" इति॥ ६

६। क्षतः सेतुबन्धः यस्य यत्र वा बहुव्रीहिः। क्षणेन भिन्नं सौहृदं येन बहुव्रीहिः। नु सम्बोधने तव अधीनं जीवितं यस्याः सा तां बहुव्रीहिः।

कृतवानसि विप्रियं न मे
प्रतिकूलं न च ते मया कृतम्।
किमकारणमेव दर्शनं
विलपन्त्यै रतये न दीयते॥ ७

अन्वयः। (हे प्रिय त्वं मे विप्रियं कृतवान् न असि, मया च ते प्रतिकूलं न कृतम्, विलपन्त्यै रतये अकारणमेव किं दर्शनं न दीयते॥ ७

कृतवानिति। हे प्रिय! त्वं मे मम विप्रियम् अप्रियं कृतवान् नासि। मया च ते तव प्रतिकूलम् अप्रियं न कृतम्, अकारणम् निष्कारणमेव परस्परापकारकरूपकारणाभावेऽपि इत्यर्थः।

क्रियाविशेषणमेतत् । विलपन्त्यै त्वद्दर्शनार्थिन्यै अपीति भावः, रतये किं कथं दर्शनं न दीयते । क्रियाग्रहणाच्चतुर्थी । ७

७ । मया तृतीया अनुक्ते कर्त्तरि । रतये चतुर्थी सम्प्रदाने । किम्-प्रश्ने । कं दोषमुपास्य साम्प्रतं मां क्लेशयसि इति चिन्तयन्ती सा विलपति ।

स्मरसि स्मर ! मेखलागुणै-
रुत गोत्रस्खलितेषु बन्धनम् ।
च्युतकेशरदूषितेक्षणा-
न्यवतंसोत्पलताड़नानि वा ॥ ८

अन्वयः । हे स्मर ! गोत्रस्खलितेषु मेखलागुणैः बन्धनं स्मरसि उत ? च्युतकेशरदूषितेक्षणानि अवतंसोत्पलताड़नानि स्मरसि वा ? ॥ ८

विप्रियमाशङ्कते—स्मरसीति । हे स्मर ! गोत्रस्खलितेषु नामव्यत्यासेषु । "गोत्रं नाम्नयचले कुले" इति विश्वः । मेखलागुणैः बन्धनं स्मरस्युत ? स्मरसि वा । "विकल्पे किं किमुत च" इत्यमरः । च्युतकेशरैः भ्रष्टकिञ्जल्कैः दूषिते ईक्षणे येषु तानि अवतंसोत्पलताड़नानि सधूलिक्षेपताड़नानि इत्यर्थः । स्मरसि वा । अपकारस्मरणादिदम् अदर्शनमिति भावः ॥ ८

८ । रतिक्रीड़ाव्यापारेषु अनवधानतया मे दोषो सञ्जातः इत्याशङ्क्य अतीतेषु व्यापारेषु स्वकीयं दोषमनुसन्दधाना विलपतीति भावः । मेखलागुणैः तृतीया करणे । उत विकल्पार्थे ।

हृदये वससीति मत्प्रियं
यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं
त्वमनङ्गः कथमक्षता रतिः ॥ ९

अन्वयः । हृदये वससि इति मत्प्रियम् अवोचः इति यत्, तत् कैतवम् अवैमि ; इदम् उपचारपदं न चेत् ( तदा ) त्वमनङ्गः कथं रतिः अक्षता ॥ ९

हृदय इति । 'हृदये वसतीति' स्मरवाक्यानुवादः । इत्येवंरूपं मत्प्रियं यदवोचः उक्तवानसि । ब्रुवो लुङि "वच उम्" ( ७,

४, २० पा०) इत्युमागमः, तत् कैतवमवैमि मिथ्येति मन्ये, इदम् वचनम् उपचारपदं परस्य रञ्जनार्थं यदसत्यभाषणं स उपचारस्तस्य पदं स्थानं कैतवस्थानमिति यावत्। न चेत् त्वमनङ्गः अशरीरः कथं रतिः अक्षता अविनष्टा। आश्रयनाशेऽपि आश्रितस्याविनष्टमिति विरोधादिति भावः॥ ९

९। हृदये वससीत्यादिकमुक्त्वा सामाद्रियेथाः साम्प्रतं तु ते तत् वचनमनृतममन्ये अन्यथा कथं मां विहाय अगच्छः।

परलोकनवप्रवासिनः
प्रतिपत्स्ये पदवीमहं तव।
विधिना जन एष वञ्चित-
स्त्वदधीनं खलु देहिनां सुखम्॥१०

अन्वयः। परलोकनवप्रवासिनः तव पदवीम् अहं प्रतिपत्स्ये, विधिना एष जनः वञ्चितः, देहिनां सुखं त्वदधीनं खलु॥ १०

न च मे कश्चिद्विचारः, किन्तु लोकः शोच्यत इत्याह,—परलोकेति। परलोकं प्रति नवप्रवासिनः अचिरप्रोषितस्य अनेन अनुगमनकालानतिपातः सूच्यते। तव पदवीं मार्गं प्रतिपत्स्ये, त्वामनुगमिष्यामीत्यर्थः। अतो मे नास्ति विचार इति भावः। किन्तु विधिना दैवेन एष जनः लोकः वञ्चितः प्रतारितः, देहिनां सुखं त्वदधीनं त्वय्यधीनं खलु। अधिशब्दस्य शौण्डादित्वात् "सप्तमी शौण्डै"रिति (२, १, ४० पा०) समासः। "अष्युत्तरपदादि"ति (५, ४, ७ पा०) खप्रत्ययः, एवमन्यत्रापि। सुखप्रदाभावे कुतः सुखमिति भावः॥ १०

१०। विधिना तृतीया अनुक्ते कर्त्तरि। खलु निश्चयार्थे। तव नाशेन देहिनां सुखमपि अनश्यत् अतस्त्वं लोकपीड़कः, दुर्जनस्य ते मार्गमाप्तुं न युज्यते पातिव्रात्येन तु त्वन्मार्गमाप्तुमहं यतिष्ये।

रजनीतिमिरावगुण्ठिते
पुरमार्गे घनशब्दविक्लवाः।

वसतिं प्रिय ! कामिनां प्रियाः
त्वदृते प्रापयितुं क ईश्वरः ॥ ११

अन्वयः । हे प्रिय ! रजनीतिमिरावगुण्ठिते पुरमार्गे घनशब्दविक्लवाः प्रियाः कामिनां वसतिं प्रापयितुं त्वदृते क ईश्वरः ॥ ११

तदेवाह,—रजनीति । हे प्रिय ! रजनीतिमिरेण अवगुण्ठिते आवृते पुरमार्गे घनशब्दविक्लवाः गर्ज्जितभीताः प्रियाः कामिनां वसतिं प्रापयितुं त्वदृते त्वां विना । "अन्यारादितरर्त्ते" इत्यादिना ( २, ३, २९ पा० ) पञ्चमी । क ईश्वरः ? शक्तः न कश्चिदित्यर्थः । न हि कामान्धानां भीतिरस्तीति भावः ॥ ११

११ । अभिसारिकां तमोमयं घनशब्दशङ्कितं अत्र सु-दुर्गमं पन्थानमतिक्रम्य प्रणयिनं प्रापयितुं केवलं त्वमेव ईश्वरः । "कामान्धा हि प्रकृतिकृपणाश्चेतनाचेतनेषु ।" इति ।

नयनान्यरुणानि घूर्णयन्
वचनानि स्खलयन् पदे पदे ।
असति त्वयि वारुणीमदः
प्रमदानामधुना विडम्बना ॥ १२

अन्वयः । अरुणानि नयनानि घूर्णयन्, पदे पदे वचनानि स्खलयन्, प्रमदानां वारुणीमदः अधुना त्वयि असति विडम्बना ॥ १२

नयनानीति । अरुणानि नयनानि घूर्णयन् भ्रमयन् तथा पदे पदे प्रतिपदम्, वीप्सायां द्विरुक्तिः, वचनानि स्खलयन् विपर्य्यासयन् प्रमदानां वारुणीमदः मद्यमदः अधुना त्वयि असति विडम्बना अनुकृतिमात्रम् । मदनाभावे मदस्य निष्फलत्वादिति भावः । तथा च, शिशुपालवधे "तं मदो दयितसङ्गमभूषः" ( १० ३३ ) इति ॥ १२

१२ । विडम्बना विधेयविशेषणत्वात् स्त्रीलिङ्गता । मदनाभावेऽपि मदस्य ईदृशी दुर्गतिः सम्भवेत् ।

अवगम्य कथीकृतं वपुः
प्रियबन्धोस्तव निष्फलोदयः ।

बहुलेऽपि गते निशाकरः
तनुतां दुःखमनङ्ग ! मोक्ष्यति ॥ १३

अन्वयः। हे अनङ्ग ! प्रियबन्धोः तव वपुः कथीकृतम् अवगम्य निष्फलोदयः निशाकरः बहुले गतेऽपि तनुतां दुःखं मोक्ष्यति ॥ १३

अवगम्येति। हे अनङ्ग ! अशरीर ! प्रियबन्धोः प्रियसखस्य तव वपुः शरीरं कथीकृतम् अकथा कथा सम्पद्यमानं कृतं शब्दमात्रावशिष्टम् अवगम्य ज्ञात्वा निष्फलोदयः उद्दीप्याभावात् उद्दीपनवैफल्यमिति भावः। निशाकरः चन्द्रः बहुले कृष्णपक्षे गतेऽपि तनुतां कार्श्यं दुःखं यथा तथा कृच्छ्रात् मोक्ष्यति वृथा वृद्धिरिति दुःखायिष्यत इत्यर्थः ॥ १३

१३। वाङ्‌निष्ठजीवनस्य उद्दीप्यस्य ते अभावात् बहुलातीते उद्दीपनस्य चन्द्रस्य कष्टविमोचनं अतीव दुःखाकरमिति भावः।

हरितारुणचारुबन्धनः
कलपुंस्कोकिलशब्दसूचितः।
वद सम्प्रति कस्य बाणतां
नवचूतप्रसवो गमिष्यति ॥ २४

अन्वयः। हरितारुणचारुबन्धनः कलपुंस्कोकिलशब्दसूचितः नवचूतप्रसवः सम्प्रति कस्य बाणतां गमिष्यति वद २४

हरितेति। हरितश्च अरुणश्च। "वर्णो वर्णेने"ति (२, १, ६९ पा० ) तत्पुरुषः। हरितारुणं चारु बन्धनम् वृन्तं पुष्पस्य यस्य स तथोक्तः। कलेन मधुरेण पुंस्कोकिलशब्देन पुरुषकोकिलनादेन सूचितः अनुमापितः चूतचर्वणकार्यत्वात् कलशब्दस्येति भावः। नवचूतप्रसवः सम्प्रति कस्य बाणतां शरत्वं गमिष्यति वद। अन्यस्य पुष्पबाणस्य अभावादिति भावः ॥ १४

१४। त्वया विना वसन्तागमे कोकिलस्य कुहुशब्दः चूतमुकुलश्च अनयोः का गतिः स्याद् वद !

अलिपङ्क्तिरनेकशस्त्वया
गुणकृत्ये धनुषो नियोजिता।

विरुतैः करुणस्वनैरियं
गुरुशोकामनुरोदितीव माम्॥ १५

अन्वयः। त्वया अनेकशः धनुषः गुणकृत्ये नियोजिता इयम् अलिपंक्तिः करुणस्वनैः विरुतैः गुरुशोकां माम् अनुरोदितीव॥ १५

अलीति। त्वया अनेकशः बहुशः धनुषः कार्मुकस्य गुणकृत्ये मौर्वीकार्य्ये गुणवत्कर्मणि च नियोजिता अधिकृता इयम् अलि-पङ्क्तिः करुणस्वनैः दीनस्वनैर्विरुतैः कूजितैः गुरुशोकां दुर्भर-दुःखाम् "गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरः" इति शब्दार्णवः। माम् अनुरोदितीव। उपसर्गात् सकर्मकत्वं "रुदा-दिभ्यः सार्वधातुके" (७, २, ७६ पा०) इति इड़ागमः॥ १५

१५। अनेकशः वारार्थे शस्। त्वया अनुक्ते कर्त्तरि तृतीया। विरुतैः तृतीया करणे।

प्रतिपद्य मनोहरं वपुः
पुनरप्यादिश तावदुत्थितः।
रतिदूतिपदेषु कोकिलां
मधुरालापनिसर्गपण्डिताम्॥ १६

अन्वयः। तावत् पुनरपि मनोहरं वपुः प्रतिपद्य (त्वम्) उत्थितः सन् मधुरालाप-निसर्गपण्डितां कोकिलां रतिदूतिपदेषु आदिश॥ १६

प्रतिपद्येति। तावत् पुनरपि मनोहरं वपुः शरीरं प्रतिपद्य प्राप्य उत्थितः सन्। मधुरालापेषु प्रियोक्तिषु निसर्गपण्डितां स्वभावप्रगल्भां कोकिलां रतिदूतिपदेषु सुरतदूतीस्थानेषु आदिश आज्ञापय प्रगल्भानामेव दौत्याधिकार इति भावः। ङ्यन्त-स्यापि दूतीशब्दस्य छन्दोभङ्गभयात् ह्रस्वः। "अपि माषं मषं कुर्य्याच्छन्दोभङ्गे त्यजेद्गिरम्" इति केचित्। उणादयो बहुलमिति बहुलग्रहणात् ह्रस्व इति वल्लभः॥ १६

१६। तावदत्र न निरनुबन्धः विनाशात् प्राक् यावत् इत्यन्वयः।

शिरसा प्रणिपत्य याचिता-
न्युपगूढ़ानि सवेपथूनि च।

सुरतानि च तानि ते रहः
स्मर! संस्मृत्य न शान्तिरस्ति मे १७

अन्वयः। हे स्मर। शिरसा प्रणिपत्य याचितानि सवेपथूनि उपगूढानि च तानि एकान्ते ते सुरतानि च संस्मृत्य मे शान्तिर्नास्ति॥ १७

शिरसेति। हे स्मर! शिरसा प्रणिपत्य याचितानि सवेपथूनि सकम्पानि। "ट्वितोऽथुच्" (३, ३, ८९ पा०) इति अथुच्-प्रत्ययः। सात्त्विकान्तरोपलक्षणमेतत्। "स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू। अश्रुवैस्वर्य्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिताः" इति। उपगूढानि आलिङ्गनानि च। नपुंसके भावे क्तः। तानि अनुभूतप्रकाराणि रहः एकान्ते सुरतानि च संस्मृत्य मे शान्तिर्नास्ति। अत्र समानकर्तृकत्वं दुर्घटं समानक्रियापेक्षा अस्तीति केचित्॥ १७

१७। विलासप्रिया पतिव्रता रतिः अतीतं पतिसंसर्गसुखमनुस्मृत्य साम्प्रतं मनसि शान्तिं स्थापयितुं न शक्नोति। चित्तस्य व्यापारविशेषः शान्तिः, सा च तन्निष्ठत्वात् समकर्तृकत्वं घटयति।

रचितं रतिपण्डित! त्वया
स्वयमङ्गेषु ममेदमार्त्तवम्।
ध्रियते कुसुमप्रसाधनं
तव तच्चारु वपुर्न दृश्यते॥॥ १८

अन्वयः। हे रतिपण्डित! त्वया मम अङ्गेषु स्वयं रचितम् आर्त्तवं कुसुमप्रसाधनम् इदं ध्रियते, तव तत् चारु वपुस्तु न दृश्यते॥ १८

रचितमिति। हे रतिपण्डित! रतिकुशल! त्वया मम अङ्गेषु अवयवेषु स्वयं रचितम्। ऋतुरस्य प्राप्तः आर्त्तवं वासन्तम्। "ऋतोरण् (५, १, १०५ पा०) इति अण्प्रत्ययः। कुसुमप्रसाधनं पुष्पाभरणं इदं ध्रियते अवतिष्ठते। "धृञ्-अवस्थाने" इति धातोस्तौदादिकात् कर्त्तरि लट्। तव तत् प्रसाधकं चारु सुन्दरं वपुस्तु न दृश्यते॥ १८

१८। त्वया अनुक्ते कर्त्तरि तृतीया। अधुनैव त्वया कृतं कुसुमप्रसाधनं दृष्टा तव मरणे विश्वसितुं न शक्नोमीति भावः।

विबुधैरसि यस्य दारुणै-
रसमाप्ते परिकर्म्मणि स्मृतः ।
तमिमं कुरु दक्षिणेतरं
चरणं निर्म्मितरागमेहि मे ॥ १९

अन्वयः । (हे प्रिय !) यस्य परिकर्म्मणि असमाप्ते (सति) दारुणैः विबुधैः स्मृतः असि, तम् इमं दक्षिणेतरं मे चरणं निर्म्मितरागं कुरु एहि ॥ १९

विबुधैरिति । दारुणैः क्रूरैः । प्राणान्तिके कर्मणि नियोगादिति भावः । विबुधैः देवैः, अनभिज्ञत्वञ्च ध्वन्यते । यस्य मच्चरणस्य परिकर्मणि प्रसाधने "परिकर्म प्रसाधनम् इत्यमरः । असमाप्ते सति स्मृतोऽसि तमिमं दक्षिणेतरं वामं मे चरणं निर्म्मितरागं रचितलाक्षारागं कुरु एहि आगच्छ ॥ १९

१९ । विबुधैरिति तृतीया अनुक्ते कर्त्तरि ।

अहमेत्य पतङ्गवर्त्मना
पुनरङ्काश्रयणी भवामि ते ।
चतुरैः सुरकामिनीजनैः
प्रिय ! यावन्न विलोभ्यसे दिवि ॥ २०

अन्वयः । अहं पतङ्गवर्त्मना एत्य पुनस्ते अङ्काश्रयणी भवामि । हे प्रिय ! दिवि चतुरैः सुरकामिनीजनैः यावत् न विलोभ्यसे ॥ २०

अहमिति । अहं पतङ्गवर्त्मना शलभमार्गेण अग्निप्रवेशेन इत्यर्थः । "पतङ्गः शलभे चाग्न्यौ मार्जारेऽर्के शरे खगे" इति वैजयन्ती । एत्य आगत्य पुनस्ते अङ्काश्रयणी उत्सङ्गवर्त्तिनी भवामि सम्प्रत्येव भविष्यामि । "वर्त्तमानसामीप्ये वर्त्तमानवद्वे"ति (३, ३, १३१ पा०) लट् । हे प्रिय ! दिवि स्वर्गे चतुरैः सुरकामिनीजनैः अप्सरोगणैः यावन्न विलोभ्यसे विलोभयिष्यसे । "यावत्पुरानिपातयोर्लट्" (३, ३, ४ पा०) इति लट् ॥ २०

२० । हे प्रिय ! यावत् अप्सरसः त्वां न कामयन्त तावदेव वह्निमार्गेण गत्वा त्वां लप्स्ये । चतुरासु तासु न विश्वसिमि अतः न विलम्बिष्ये अचिरेणैव मरिष्यामीति भावः । जनैरनुक्ते कर्त्तरि तृतीया ।

मदनेन विनाकृता रतिः
क्षणमात्रं किल जीवितेति मे।
वचनीयमिदं व्यवस्थितं
रमण! त्वामनुयामि यद्यपि॥ २१

अन्वयः। हे रमण त्वाम् (अनुयामि) यद्यपि, किन्तु रतिः मदनेन विनाकृता (सती) क्षणमात्रं जीविता किल इति मे वचनीयं व्यवस्थितम्॥ २१

मदनेनेति। हे रमण! त्वाम् अनुयामि यद्यपि अनुगमिष्यास्येव, "वर्तमानसामीप्ये वर्तमानवद्वे"ति (३, ३, १३१ पा०) लट्। "यद्यपीत्यवधारणे" इति केशवः। किन्तु रतिः मदनेन विनाकृता वियोजिता सतीत्यर्थः। सुप्सुपेति समासः। क्षणमात्रं जीविता किल इति इदं वचनीयं निन्दा मे मम व्यवस्थितं स्थिरमभूत्॥ २१

२१। चेदहं त्वामाशुम् अधुना वह्निमार्गमाप्नुयां तर्हि स्त्रीमण्डलेषु, मदनेन विना रतिः क्षणमात्रं जीवितेति दुष्कीर्त्तिः चिरं स्थास्यति। सा किंकर्तव्यविमूढेति सूचिता।

क्रियतां कथमन्त्यमण्डनं
परलोकान्तरितस्य ते मया।
सममेव गतोऽस्यतर्कितां
गतिमङ्गेन च जीवितेन च॥ २२

अन्वयः। परलोकान्तरितस्य ते मया अन्त्यमण्डनं कथं क्रियताम्, (त्वम्) अङ्गेन च जीवितेन च सममेव अतर्कितां गतिं गतः असि॥ २२

क्रियतामिति। परलोके अन्तरितस्य व्यवहितस्य मृतस्य इत्यर्थः। ते तव मया अन्त्यमण्डनं कथं केन प्रकारेण क्रियताम्। क्रियतामित्यत्र कर्मचारे लोट्। हुतदग्धस्य ते यथेच्छमण्डनमपि न सम्भवतीत्यर्थः। कुतः अङ्गेन च जीवितेन च समं सहैव अतर्किताम् अविचारितां गतिं गतोऽसि। इह मृतशरीरमपि नास्ति कस्य मण्डनमिति भावः॥ २२

२२। मया अनुक्ते कर्तरि तृतीया। अङ्गेन जीवितेन च सहार्थशब्दयोगे तृतीया।

मृतस्य ते शरीरमपि अनश्यत्, तत् कथं ते अन्त्येष्टिक्रिया मया क्रियते, नात्र ममापराधोऽस्तीति भावः ।

ऋजुतां नयतः स्मरामि ते
शरमुत्सङ्गनिषण्णधन्वनः ।
मधुना सह सस्मितां कथां
नयनोपान्तविलोकितञ्च यत् ॥ २३

अन्वयः । शरम् ऋजुतां नयतः उत्सङ्गनिषण्णधन्वनः ते मधुना सह ( ताम् ) सस्मितां कथां तथा यत् नयनोपान्तविलोकितं तच्च स्मरामि ॥ २३

ऋजुतामिति । शरम् ऋजुताम् आर्जवं नयतः उत्सङ्गे निषण्णम् अङ्कगतं धनुर्यस्य तस्य । "धनुषश्च" ( ५, ४, १३२ पा० ) इत्यनङादेशः । ते तव मधुना वसन्तेन सह । "मधुर्दैत्ये वसन्ते च चैत्रे च" इति विश्वः । सस्मितां कथाम् आलापं तथा यन्नयनोपान्तविलोकितम् अपाङ्गवीक्षणं ते इत्यनुषङ्गः, तच्च स्मरामि ॥ २३

२३ । ते कर्म्मणि षष्ठी "स्मरणार्थेशदयां कर्म्मणि" मधुना सहयोगे तृतीया । मधुना सह ते आलापं शरयोजनञ्चाहं वेद्मि, ततः परं ते किमभूत् तन्न वेद्मीति शेषः ।

क्व नु ते हृदयङ्गमः सखा
कुसुमायोजितकार्मुको मधुः ।
न खलूग्ररुषा पिनाकिना
गमितः सोऽपि सुहृद्गतां गतिम् ॥ २४

अन्वयः । हृदयङ्गमः ते सखा कुसुमायोजितकार्मुकः मधुः क्व नु ? अथवा सः अपि उग्ररुषा पिनाकिना सुहृद्गतां गतिं न गमितः खलु ? ॥ २४

क्व न्विति । हृदयं गच्छतीति हृदयङ्गमः हृद्यः । खच्प्रकरणे "गमेः सुप्युपसंख्यानमि"ति ( ३, २, ३८ पा० वा० ) खच्प्रत्ययः । "अरुर्द्विषदजन्तस्य मुम्" ( ६, ३, ६७ ) इति मुमागमः । ते तव सखा कुसुमैरायोजितम् आरचितं कार्मुकं येन कार्मुकनिर्माता मधुः वसन्तः क्व नु वा गत इति शेषः । अथवा सोऽपि उग्ररुषा तीव्रकोपेन पिनाकिना ईश्वरेण सुहृदा मदनेन

गतां प्राप्तां भस्मतामित्यर्थः। न गमितः खलु, न प्रापितः किम्?। "जिज्ञासानुनये खलु" इत्यमरः॥ २४

२४। पिनाकिना तृतीया अनुक्ते कर्तरि। नु सम्बोधने। खलु प्रश्ने, नु भोः! साम्प्रतं ते सखा मां विपन्नां दृष्ट्वा क पलायते। विपदि कोऽपि सखा न भवति। सर्वाः स्वार्थमूलकं सख्यमित्याशङ्के।

अथ तैः परिदेविताक्षरैः
हृदये दिग्धशरैरिवाहतः।
रतिमभ्युपपत्तुमातुरां
मधुरात्मानमदर्शयत् पुरः॥ २५

अन्वयः। अथ मधुः तैः परिदेविताक्षरैः दिग्धशरैरिव हृदये आहतः (सन्) आतुरां रतिम् अभ्युपपत्तुम् आत्मानं पुरः अदर्शयत्॥ २५

अर्थात। अथ तैः परिदेविताक्षरैः विलापवचनैः हृदये दिग्धशरैः विषलिप्तमुखैः शरैः इवाहतः सन्। "विषाक्ते दिग्धलिप्तकौ" इत्यमरः। मधुः वसन्तः आतुराम् आपन्नां रतिम् अभ्युपपत्तुं अनुग्रहीतुम् आश्वासयितुमित्यर्थः। "अभ्युपपत्तिरनुग्रहः" इत्यमरः। आत्मानं पुरः अदर्शयत् आविरभूदित्यर्थः॥ २५

२५। स्वजनसुलभचञ्चलतया रतिः मधुं यत् परुषं वाक्यमवदत् तत् श्रुत्वा वितुन्नहृदयः मधुः रत्याः पुरतः आविरभूदिति। अक्षरैः करणे, कर्तरि वा तृतीया।

तमवेक्ष्य रुरोद सा भृशं
स्तनसम्बाधमुरो जघान च।
स्वजनस्य हि दुःखमग्रतो
विवृतद्वारमिवोपजायते॥ २६

अन्वय.। सा तम् अवेक्ष्य भृशं रुरोद, स्तनसम्बाधम् उरो जघान च, (तथाहि) स्वजनस्य अग्रतः दुःखं विवृतद्वारमिव उपजायते॥ २६

तात्पर्य। सा रतिः तं मधुं अवेक्ष्य दृष्ट्वा भृशं रुरोद। स्तनौ सम्बाध्य स्तनसंबाधम्। "परिक्लिश्यमाने च"ति (३, ४, ५५ पा०) णमुल्। उरो जघान ताड़ितवती च। तथाहि

स्वजनस्य अग्रतः दुःखं विवृतम्, अपसारितं द्वारं कपाटं यस्य तदिव उपजायते आविर्भवति, उच्छृङ्खलं प्रवर्त्तत इत्युक्तेत्याभिप्रायः॥२६

२६। स्वजनसन्दर्शनेन शोकप्रवलतया साम्प्रतं पूर्णाङ्गस्तनयुगलवेष्टितमुरः आहत्य केशांश्च छित्वा विलपितुमारभत, आर्य्याङ्गनानां शोकप्रकृतिरीदृशी एवेत्यर्थः।

इति चैनमुवाच दुःखिता
सुहृदः पश्य वसन्त! किं स्थितम्।
तदिदं कणशो विकीर्य्यते
पवनैर्भस्म कपोतकर्बुरम्॥ २७

अन्वयः। दुःखिता (सा) एनम् इति उवाच च हे वसन्त! पश्य सुहृदः किं स्थितम्, तत् इदं कपोतकर्बुरं कणशः भस्म पवनैः विकीर्य्यते॥ २७

इतीति। दुःखमस्याः सञ्जातं दुःखिता, सञ्जातदुःखेत्यर्थः। (५, २, ३६ पा०) तारकादित्वादितच्। सा रतिः एनं वसन्तम् इत्युवाच च। चकारः पूर्वोक्तसमुच्चयार्थः। हे वसन्त! पश्य सुहृदः त्वत्सखस्य किं स्थितं किमुपस्थितं तदिदं कपोतकर्बुरं पारावतशवलं कणशः चूर्णीभूतं (५, ४, ४२ पा०) अल्पार्थाच्छस्प्रत्ययः। भस्म पवनैः विकीर्य्यते विक्षिप्यते, पश्य भस्मीभूतस्ते सुहृदित्यर्थः॥ २७

२७। यस्य मदनस्य रूपेण त्रिभुवनं विस्मितं, तस्य कीदृशी दशा सञ्जातेति रतिः मधुमशोचत्। रूपयौवनप्रगल्भाः योषितो भवन्ति।

अयि सम्प्रति देहि दर्शनं
स्मर! पर्य्युत्सुक एष माधवः
दयितास्वनवस्थितं नृणां
न खलु प्रेम चलं सुहृज्जने॥ २८

अन्वयः। अयि स्मर! सम्प्रति दर्शनं देहि, एष माधवः पर्य्युत्सुकः, नृणां दयितासु अनवस्थितं प्रेम सुहृज्जने न चलम् खलु॥ २८

अयीति। अयि स्मर! सम्प्रति दर्शनं देहि। एष माधवः वसन्तः पर्य्युत्सुकः त्वद्दर्शनोत्कण्ठितः। त्वामपि अनादृतवतो-

ऽस्य को माधव इत्याशङ्क्याह । नृणां पुरुषाणां दयितासु प्रेम अनवस्थितं अस्थिरं चलमित्यर्थः, सुहृज्जने प्रेम तु न चलं खलु ॥२८

२८। नृणां वनितासु प्रेम चञ्चलं स्यात् । सुहृदि तत् दृढ़म् अतएवाहं याचे त्वद्दर्शनोत्कण्ठं सधुम् आत्मानं दर्शयेति भावः ।

अमुना ननु पार्श्ववर्त्तिना
जगदाज्ञां ससुरासुरं तव ।
विसतन्तुगुणस्य कारितं
धनुषः पेलवपुष्पपत्रिणः ॥ २९

अन्वयः । ननु मदन ! पार्श्ववर्त्तिना अमुना ससुरासुरं जगत् विसतन्तुगुणस्य पेलवपुष्पपत्त्रिणः तव धनुषः आज्ञां कारितम् ॥ २९

ईदृशाः सुहृदः कति न सन्तीत्याशङ्क्य न कोऽपीत्याह,—अमुनेति । ननु मदन ! पार्श्ववर्त्तिना सहचरेण अमुना वसन्तेन ससुरासुरम् सुरासुरसहितं जगत् विसतन्तुगुणस्य मृणालसूत्रमौर्वीकस्य पेलवानि कोमलानि पुष्पाणि एव पत्रिणः वाणा यस्य तस्य तव धनुषः आज्ञां कारितम् जगदाज्ञा कारितेत्यर्थः । "हृक्रोरन्यतरस्यामि"ति ( १, ४, ५३ पा० ) जगतः कर्मत्वम् ॥ २९

२९। अमुना अनुक्ते कर्त्तरि तृतीया । यस्य सख्युः मधोरानुकूल्येन ससुरासुरं जगत् भवता आयत्तीकृतं तादृशं वन्धुं मा अवजानीहि । भाग्यवलेन ईदृशः सखा त्वया लब्धः ।

गत एव न ते निवर्त्तते
स सखा दीप इवानिलाहतः ।
अहमस्य दशेव पश्य मां
अविषह्यव्यसनेन धूमिताम् ॥ ३०

अन्वयः । स ते सखा अनिलाहतः दीप इव गत एव न निवर्तते, अहम् अस्य दशेव ( तिष्ठामि ) अविषह्यव्यसनेन धूमितां मां पश्य ॥ ३०

<u>गत इति</u> । स ते सखा अनिलाहतः वायुताड़ितः दीप इव गत एव न निवर्त्तते, अहमस्य दीपायमानस्य दशा वर्त्तिः इव तिष्ठामीति शेषः । "दशा वर्त्ताववस्थायां वस्त्रान्ते स्युर्दशा अपि" इति विश्वः । कुतः अविषह्यव्यसनेन सोढुमशक्यदुःखप्रकर्षेण धूमितां

सञ्जातधूमां मां पश्य। धूमवत्त्वात् नष्टदीपदशासाम्यं धूमस्य व्यसनमेवेत्यर्थः॥ ३०

३०। व्यसनेन तृतीया करणे। निर्व्वापिता वर्त्तिः धूमत्यागेन यथा मलिना भवति तथा व्यसनविषादितम् अश्रुवर्षणेन मलिनां मां पश्येति भावः।

विधिना कृतमर्द्धवैशसं
ननु मां कामवधे विमुञ्चता।
अनपायिनि संश्रयद्रुमे
गजभग्ने पतनाय वल्लरी॥ ३१

अन्वयः। ननु (वसन्त!) कामवधे मां विमुञ्चता विधिना अर्द्धवैशसं कृतम्, अनपायिनि संश्रयद्रुमे गजभग्ने वल्लरी पतनाय॥ ३१

विधिनेति। ननु वसन्त! कामवधे मदनवधे मां विमुञ्चता वर्जयता, अमारयतेत्यर्थः। विधिना दैवेन विशसति हिनस्तीति विशसो घातुकः। पचाद्यच्। विशसस्य कर्म्म वैशसं (५, १, १३० पा०) "युवादित्वादण्प्रत्ययः"। अर्द्धवैशसम् अर्द्धवधः कृतम्। "अर्द्धो वा एष आत्मनो यत् पत्नी" इति श्रुतेः। पत्युः स्वस्य च अश्रयाश्रयिभूतयोः एकपदार्थत्वाभिप्रायेण अर्द्धोक्तिः। तथा च एकदेशवधे देशान्तरस्यापि वधनियमजान्मामपि विधिरघ्नन्नेव हतवानिति तात्पर्य्यम्। एतदेवोपपादयति—अनपायिनि अनपायित्वेन विश्वस्ते संश्रयद्रुमे आश्रयवृक्षे गजभग्ने सति वल्लरी लता पतनाय भवतीति शेषः। पतितुमेव सालमित्यर्थः। "तुमर्थाच्च भाववचनादि"ति (२, ३, १५ पा०) चतुर्थी॥ ३१

३१। विधिना अनुक्ते कर्त्तरि तृतीया। दम्पत्योः परस्परम् अर्द्धाङ्गत्वात् मदनहरणेन रतेरर्द्धाङ्गं हृतम्; अर्द्धाङ्गनाशात् जीविनः कदापि न जीवेयुरतो ममापि मरणं ध्रुवमिति।

तदिदं क्रियतामनन्तरं
भवता बन्धुजनप्रयोजनम्।
विधुरां ज्वलनातिसर्जना-
न्ननु मां प्रापय पत्युरन्तिकम्॥३२

अन्वयः । तत् भवता अनन्तरम् इदं बन्धुजनप्रयोजनं क्रियताम् । ननु (वसन्त !) विधुरां मां ज्वलनातिसर्ज्जनात् पत्युः अन्तिकं प्रापय ॥ ३२

सम्प्रति अनन्तरकर्त्तव्यं प्रार्थयते,—तदिति । तत् तस्मात् कारणादुक्तप्रकारेण अन्यथापि मरणस्य अवश्यम्भावादित्यर्थः । अनन्तरं भवता इदम् वक्ष्यमाणं बन्धुकृत्यं क्रियताम् । प्रार्थनायां लोट् । तदेव उपदिशति । ननु वसन्त ! विधुरां विवशां मां ज्वलनातिसर्ज्जनात् अग्निदानात् पत्युरन्तिकं प्रापय अग्निप्रवेशनं कारयेत्यर्थः ॥ ३२

३२ । भवता अनुक्ते कर्तरि तृतीया । ज्वलनातिसर्जनात् हेतौ पञ्चमी । साम्प्रतं पतिदर्शनव्याकुला रतिः वह्निप्रवेशमरणसङ्कल्पा वन्धोरानुकूल्यं मरणायोजनं प्रार्थयते ।

शशिना सह याति कौमुदी
सह मेघेन तड़ित् प्रलीयते ।
प्रमदाः पतिवर्त्मगा इति
प्रतिपन्नं हि विचेतनैरपि ॥ ३३

अन्वयः । कौमुदी शशिना सह याति, तड़ित् मेघेन सह प्रलीयते, प्रमदाः पतिवर्त्मगाः इति विचेतनैरपि प्रतिपन्नं हि ॥ ३३

कर्त्तव्यस्य अयमर्थः स्त्रीणामित्याह,—शशिनेति । कौमुदी चन्द्रिका शशिना सह याति, शशिनि अस्तमिते स्वयं नश्यतीत्यर्थः । तड़ित् सौदामिनी मेघेन सह प्रलीयते प्रणश्यति । कर्त्तरि लट् । प्रमदाः स्त्रियः पतिवर्त्म गच्छन्तीति पतिमार्गानुगामिन्यः इति एतत् विचेतनैः अल्पचेतनैः अविवेकिभिः अपीत्यर्थः, प्रतिपन्नम् ज्ञातम् । अलवणा यवागूः अनुदरा कन्येतिवत् अल्पत्वाभिप्रायेण विचेतनैरपीति निर्देशः । नाथस्तु पृथग्जनैरिति पपाठ । पतिवर्त्मगा इत्यत्र स्मृतिः—"आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता" इति ॥ ३३

३३ । विचेतनैरिति अनुक्ते कर्तरि तृतीया । स्वामिना सह मरणं स्त्रीणां पातिव्रात्यलक्षणमित्यवलम्ब्य दर्शयति सामितः सङ्कल्पात् न निवारय । विचेतनैरल्पबुद्धिभिरपि विवेचितमेतदन्येषां का कथेति शेषः ।

अमुनैव कषायितस्तनी
सुभगेन प्रियगात्रभस्मना ।
नवपल्लवसंस्तरे यथा
रचयिष्यामि तनुं विभावसौ ॥ ३४

अन्वयः । अमुना सुभगेन प्रियगात्रभस्मनैव कषायितस्तनी ( अहम् ) नवपल्लवसंस्तरे यथा विभावसौ तनुं रचयिष्यामि ॥ ३४

अमुनैवेति । अमुना पुरोवर्त्तिना सुभगेन शोभनेन प्रियगात्र-भस्मनैव एवकारो मण्डनान्तरनिवृत्त्यर्थः, कषायितस्तनी रञ्जित-स्तनी । "रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे" इति वैज-यन्ती । नवपल्लवसंस्तरे यथा नवपल्लवतल्प इव विभावसौ वह्नौ तनुं शरीरं रचयिष्यामि निधास्यामि इत्यर्थः ॥ ३४

३४ । स्वामिनः देहभस्मना स्तनौ रञ्जयित्वा स्वामिनः प्रियत्वात् तत्संसर्गाशया वह्नौ पतिष्यामि अभिप्रायमिमं जानीहि ।

कुसुमास्तरणे सहायतां
बहुशः सौम्य ! गतस्त्वमावयोः ।
कुरु सम्प्रति तावदाशु मे
प्रणिपाताञ्जलियाचितश्चिताम् ॥ ३५

अन्वयः । हे सौम्य ! त्वम् आवयोः बहुशः कुसुमास्तरणे सहायतां गतः, सम्प्रति प्रणिपाताञ्जलियाचितः सन् आशु मे चितां कुरु ॥ ३५

कुसुमेति । हे सौम्य साधो ! त्वम् आवयोः रतिपञ्चबाणयोः बहुशः बहुवारं कुसुमास्तरणे पुष्पशयने सहायतां गतः । सम्प्रति प्रणिपाताञ्जलिना याचितः । अञ्जलिपूर्वकं प्रार्थितः सन्नित्यर्थः । आशु मे चितां काष्ठचयं कुरु कुरुष्व । यथा इह तथामुत्र उप-कर्त्तव्यं मित्रेणेत्यर्थः ॥ ३५

३५ । बहुशः वारार्थे संख्यायां शस् । हे बन्धो ! सुखशयने यथा त्वं आवयोरानुकूल्य मकरोस्तथाधुना मरणचिन्ताया मे चितां विरचय्य तादृक् आनुकूल्यं दर्शयितुं प्रसीद, चेत् त्वं मे प्रार्थनं स्त्रीजनोचितं चाञ्चल्यं मन्यसे, ततः प्रणिपाताञ्जलिना प्रार्थये सती नेदं चञ्चलता ।

तदनु ज्वलनं मदर्पितं
त्वरयेर्दक्षिणवातवीजनैः ।
विदितं खलु ते यथा स्मरः
क्षणमप्युत्सहते न मां विना ॥ ३६

अन्वयः । तदनु मदर्पितं ज्वलनं दक्षिणवातवीजनैः त्वरयेः मां विना स्मरः क्षणमपि यथा न उत्सहते तथा ते विदितं खलु ॥ ३६

तदिति । तत् चिताकरणम् अनु अनन्तरं मय्यर्पितं मदर्पितं ज्वलनम् अग्निं दक्षिणवातवीजनैः मलयमारुतसञ्चालनैः त्वरयेः त्वरितं ज्वलयेरित्यर्थः । त्वराहेतुमाह,—ते तव विदितं खलु । मतिबुद्धिपूजार्थेभ्यश्चे"ति ( ३, २, १८८ पा० ) वर्त्तमाने क्तः । तद्योगात् कर्त्तरि षष्ठी । यथा येन प्रकारेण स्मरः मां विना क्षणमपि न उत्सहते न दृष्यति । तथा त्वया ज्ञातमेव इत्यर्थः ॥ २६

३६ । चेदग्निः सम्यक् न ज्वलति तर्हि दक्षिणानिलं वीजयेः । यतः दक्षिणानिलं आवां आद्रियावहे । मम विलम्बेन मदनस्तव व्याकुलोऽभवत् अतः त्वं त्वरस्व ।

इति चापि विधाय दीयतां
सलिलस्याञ्जलिरेक एव नौ ।
अविभज्य परत्र तं मया
सहितः पास्यति ते स बान्धवः ॥ ३७

अन्वयः । अपि च इति विधाय नौ एक एव सलिलस्य अञ्जलिः दीयताम्, तं स ते बान्धवः परत्र मया सहितः अविभज्य पास्यति ॥ ३७

इतीति । अपि च इति एवं विधाय कृत्वा नौ आवाभ्याम् एक एव सलिलस्य अञ्जलिर्दीयताम् । तम् अञ्जलिम् स ते बान्धवः सखा स्मरः परत्र परलोके मया सहितोऽविभज्य पास्यति ॥ ३७

३७ । पुत्रहीनौ आवां तव क्षेमं प्रासाव इत्याशङ्क्याह त्वम् आवामुद्दिश्य जलाञ्जलिं यच्छेः तम् आवां तत्र पास्यावः ।

परलोकविधौ च माधव!
स्मरमुद्दिश्य विलोलपल्लवाः
निवपेः सहकारमञ्जरीः
प्रियचूतप्रसवो हि ते सखा॥ ३८

अन्वयः। किञ्च हे माधव! परलोकविधौ स्मरमुद्दिश्य विलोलपल्लवाः सहकारमञ्जरीः निवपेः, हि (यस्मात्) ते सखा प्रियचूतप्रसवः॥ ३८

परलोकेति। किञ्च हे माधव! वसन्त! परलोकविधौ पिण्डोदकादिकर्मणि स्मरमुद्दिश्य विलोलाः पल्लवाः यासु ताः सहकारमञ्जरीः चूतवल्लरीः निवपेः देहि, हि यस्मात् कारणात् ते सखा स्मरः प्रियाः चूतप्रसवा यस्य स तथोक्तः॥ ३८

३८। सहकारमञ्जरीभिः विलोलपल्लवैश्च आवयोः श्राद्धं कुर्य्याः, यतः तौ आवयोः प्रियतमौ भवतः।

इति देहविमुक्तये स्थितां
रतिमाकाशभवा सरस्वती
शफरीं ह्रदशोषविक्लवां
प्रथमा वृष्टिरिवान्वकम्पयत्॥ ३९

अन्वयः। इति देहविमुक्तये स्थितां रतिम् आकाशभवा सरस्वती ह्रदशोषविक्लवां शफरीं प्रथमा वृष्टिरिव अन्वकम्पयत्॥ ३९

इतीति। इति देहस्य विमुक्तये शरीरस्य विसर्गाय स्थितां, कृतनिश्चयामिति यावत, रतिम् आकाशभवा सरस्वती अशरीरा वाक् ह्रदशोषविक्लवां ह्रदस्य जलाधारस्य शोषेण विक्लवां शफरीं प्रोष्ठीम्। "प्रोष्ठी तु शफरी द्वयोः" इत्यमरः। प्रथमा वृष्टिः वर्षम् इव अन्वकम्पयत् अनुकम्पितवती सदयमुवाचेत्यर्थः। "कृपा दयानुकम्पा स्यात्" इत्यमरः॥ ३९

३९। देहविमुक्तये चतुर्थी निमित्तार्थे। वह्निमार्गेण देहं त्यक्ष्यामीति निश्चितां रतिं आकाशभवा सरस्वती अनुकम्पयति।

कुसुमायुधपत्नि ! दुर्लभ-
स्तव भर्त्ता न चिराद्भविष्यति ।
शृणु येन स कर्म्मणा गतः
शलभत्वं हरलोचनार्च्चिषि ॥४०

अन्वयः। हे कुसुमायुधपत्नि ! तव भर्त्ता चिरात् दुर्लभः न भविष्यति, किञ्च शृणु (तत् कर्म्म) येन कर्म्मणा स ते भर्त्ता हरलोचनार्च्चिषि शलभत्वं गतः ॥ ४०

कुसुमेति। हे कुसुमायुधपत्नि ! रति ! तव भर्त्ता चिरात् चिरं दुर्लभो न भविष्यति किन्तु अचिरमेव सुलभो भविष्यति इत्यर्थः। किञ्च, शृणु तत्कर्मेति शेषः, येन कर्मणा सः ते भर्त्ता हरलोचनस्यार्च्चिः ज्वाला, "ज्वाला भासो नपुंस्यर्च्चिः" इत्यमरः, तस्मिन् शलभत्वं गतः। "समौ पतङ्गशलभौ" इत्यमरः ॥४०

४०। कर्मणा हेतौ तृतीया। ते भर्त्ता अचिरेणैव सुलभः भविष्यतीति आश्वासवचनेन रतिम् अनुकम्पयतीति भावः।

अभिलाषमुदीरितेन्द्रियः
स्वसुतायामकरोत् प्रजापतिः ।
अथ तेन निगृह्य विक्रिया-
मभिशप्तः फलमेतदन्वभूत् ॥४१

अन्वयः। उदीरितेन्द्रियः प्रजापतिः स्वसुतायाम् अभिलाषम् अकरोत्, अथ तेन विक्रियां निगृह्य अभिशप्तः सन् (स्मरः) एतत् फलम् अन्वभूत् ॥ ४१

तदेव कर्मोपाचष्टे,—अभिलाषमिति। उदीरितेन्द्रियः प्रेरितेन्द्रियः स्मरेणेति शेषः। प्रजापतिः ब्रह्मा स्वसुतायां सरस्वत्याम् अभिलाषम् अनुरागम् अकरोत्। अथ तेन प्रजापतिना विक्रियाम् इन्द्रियविकारं निगृह्य निरुध्य अभिशप्तः सन् एतत् फलं दाहात्मकं स्वकर्मफलम् अन्वभूत् ॥ ४१

४१। तेन अनुक्ते कर्तरि तृतीया। पुरा किल भगवान् ब्रह्मा मदनबाणेन पीड़ितः सन् स्वसुतां सरस्वतीं सन्ध्यां वा बलात्कर्त्तुमुपचक्रमे, तदवस्थं पितरं विलोक्य भयेन सन्ध्या पलायामास। ततः निगृह्य आत्मानं शशाप तेनैव कामः हरकोपानले भस्मीभूत आसीत्

परिणेष्यति पार्वतीं यदा
तपसा तत्प्रवणीकृतो हरः ।
उपलब्धसुखस्तदा स्मरं
वपुषा स्वेन नियोजयिष्यति ॥४२

इति चाह स धर्म्मयाचितः
स्मरशापावधिदां सरस्वतीम् ।
अशनेरमृतस्य चोभयोः
वशिनश्चाम्बुधराश्च योनयः ॥४३

युग्मकम् ।

अन्वयः । धर्मयाचितः स "तपसा तत्प्रवणीकृतः हरः यदा पार्व्वतीं परिणेष्यति तदा उपलब्धसुखः स्मरं स्वेन वपुषा नियोजयिष्यति" इत्येव स्मरशापावधिदां सरस्वतीम् आह, तथाहि वशिनः अम्बुधराश्च अशनेः अमृतस्य च इत्युभयोः योनयः (भवन्ति) ॥ ४३

शापावधिरपि तेनैवोक्त इत्याह श्लोकद्वयेन,—परिणेष्यतीत्यादिना । धर्मेण धर्माख्यप्रजापतिना याचितः प्रार्थितः सः भगवान् ब्रह्मा । तपसा कारणेन तस्यां पार्वत्यां प्रवणीकृतः अभिमुखीकृतः हरः शिवः यदा पार्वतीं परिणेष्यति उद्वक्ष्यति तदा उपलब्धसुखः प्राप्तानन्दः सन् । स्मरं कामं स्वेन वपुषा नियोजयिष्यति सङ्गमयिष्यति,—इति एवं स्मरशापस्यावधिदाम् अवसानदायिनीं सरस्वतीं वाचञ्च आह, एवं शापावधिमपि उक्तवान् इत्यर्थः । ननु तथा क्रुद्धस्य कथमीदृशो शान्तिरत आह,—वशिनः जितेन्द्रियाश्च अम्बुधराश्च अशनेरमृतस्य च इति उभयोर्योनयः प्रभवाः । वशिनश्चेत् अशन्यमृतशब्दौ कोपप्रसादपरौ अन्यत्र वैद्युताम्बुदकपरौ ॥ युग्मकम् ॥ ४२—४३

४२ । तपसा हेतौ तृतीया । वपुषा सहार्थेऽप्रयोगे तृतीया हरपार्व्वत्योः विवाहानन्तरं कुमारसम्भवसमये ते भर्त्ता पुनः जीविष्यति ।

४३ । शिवानुकम्पया अयं जीवेत् कथं तत् सम्भवेत् यथा मेघात् समुत्पन्नं वज्रं जगतः अनिष्टं साधयति, मेघोत्पन्नं वर्षणं जगतः हितं साधयति । तथा शिवस्य कोपेन मदनोऽम्रियत, तस्यैव प्रसादेन स जीविष्यतीत्यर्थः ।

तदिदं परिरक्ष शोभने
भवितव्यप्रियसङ्गमं वपुः
रविपीतजला तपात्यये
पुनरोघेन हि युज्यते नदी ॥४४

अन्वयः । हे शोभने ! तत् भवितव्यप्रियसङ्गमं वपुः परिरक्ष, तथाहि रविपीतजला नदी तपात्यये पुनरोघेन युज्यते ॥ ४४

तदिति । हे शोभने ! तत् तस्मात् कारणात् भवितव्यः भविष्यन् प्रियसङ्गमः यस्य तथोक्तं इदं वपुः परिरक्ष । तथाहि रविपीतजला नदी तपात्यये प्रावृषि । "प्रावृट् तपात्यये" इति हलायुधः । पुनरोघेन प्रवाहेण युज्यते सङ्गच्छते हि ॥ ४४

४४ । यथा निदाघे शून्यगर्भा नदी वर्षासु स्रोतस्विनी भवति, तथा शून्यजीवनः ते पत्युः देहः कालेन सजीवः स्यात् । अतः देहोऽयं त्वया यत्नेन रक्षणीयः ।

इत्थं रतेः किमपि भूतमदृश्यरूपं
मन्दीचकार मरणव्यवसायबुद्धिम् ।
तत्प्रत्ययाच्च कुसुमायुधबन्धुरेनाम्
आश्वासयत् सुचरितार्थपदैर्वचोभिः ॥४५

अन्वयः । इत्थम् अदृश्यरूपं किमपि भूतं रतेः मरणव्यवसायबुद्धिं मन्दीचकार कुसुमायुधबन्धुः तत्प्रत्ययात् एनां सुचरितार्थपदैः वचोभिः आश्वासयत् च ॥ ४५

इत्थमिति । इत्थम् अनेन प्रकारेण अदृश्यरूपं किमपि भूतं कश्चित् प्राणी । "युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु" इत्यमरः । रतेः मदनदारायाः मरणव्यवसायबुद्धिं मरणोद्योगबुद्धिं मन्दीचकार निवारयामासेत्यर्थः । "मूढाल्पापटुनिर्भाग्या मन्दाः" इत्यमरः । अथ कुसुमायुधबन्धुः वसन्तश्च तत्प्रत्ययात् तस्मिन् भूते विश्वासात् । "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । एनां रतिं सुष्ठु चरितार्थानि पदानि येषां तैः वचोभिः

वाक्यैः आश्वासयत्। सर्व्वथा ते देवताप्रसादात् प्रियसङ्गमो भविष्यतीत्यादिवचनैः अस्याः दुःखं अपाचकार इत्यर्थः ॥ ४५

४५। वचोभिः तृतीया कारणे। आकाशवाणीं श्रुत्वा साम्प्रतं रतिः मरणात् विरराम, मधुरैश्च मधुरैर्वाक्यैः तां सान्त्वयितुम् आरेभे।

अथ मदनवधूरुपप्लवान्तं
व्यसनकृशा परिपालयाम्बभूव।
शशिन इव दिवातनस्य लेखा
किरणपरिक्षयधूसरा प्रदोषम् ॥४६

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
रतिविलापो नाम चतुर्थः सर्गः ॥४

अन्वयः। व्यसनकृशा मदनवधूः उपप्लवान्तम् किरणपरिक्षयधूसरा दिवातनस्य शशिनः लेखा प्रदोषमिव परिपालयाम्बभूव ॥ ४६

अथेति। अथानन्तरं व्यसनेन दुःखेन कृशा मदनवधूः रतिः उपप्लवान्तं विपदवधिं किरणपरिक्षयेण धूसरा मलिना दिवातनस्य दिनभवस्य। "सायञ्चिरम्"त्यादिना (४, ३, २३ पा०) ट्यु-प्रत्ययः। शशिनः चन्द्रस्य लेखा प्रदोषं रात्रिमिव परिपालयाम्बभूव प्रतीक्षांचक्रे। पुष्पिताग्रावृत्तम् "अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥ ४६

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां रति-
विलापोनाम चतुर्थः सर्गः ॥ ४

४६। यथा दिवसोदिता चन्द्रकला हीनप्रभा शोभने, तथा पतिमरणशोकेन कृशाङ्गी सा आत्मानं स्वामिदेहं च रक्षितुं यतते स्म।

---

## पञ्चमः सर्गः ।

तथा समक्षं दहता मनोभवं
पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्व्वती
प्रियेषु सौभाग्यफला हि चारुता ॥१

अन्वयः । पार्व्वती तथा समक्षं मनोभवं दहता पिनाकिना भग्नमनोरथा सती हृदयेन रूपं निनिन्द । तथाहि चारुता प्रियेषु सौभाग्यफला ( भवति ) ॥ १

तथेति । पर्व्वतस्यापत्यं स्त्री पार्व्वती तथा तेन प्रकारेण अक्ष्णः समीपे समक्षं पुरतः । "अव्ययं विभक्तिसमीपसमृद्धो"त्यादिना ( २, १, ६ पा० ) अव्ययीभावः । मनोभवं मन्मथं दहता भस्मीकुर्व्वता पिनाकिना ईश्वरेण भग्नः खण्डितः मनोरथः अभिलाषो यस्याः सा तथोक्ता सती हृदयेन मनसा रूपं सौन्दर्य्यं निनिन्द । धिक् मे रूपं, यत् हरमनोहरणाय नालं इति गर्हितवतीत्यर्थः । युक्तञ्च एतदित्याह,—तथाहि, चारुता सौन्दर्य्यं प्रियेषु पतिषु विषये सौभाग्यं प्रियवाल्लभ्यं फलं यस्याः सा तथोक्ता । सौन्दर्य्यस्य तदेव फलं यद्भर्तृसौभाग्यं लभ्यते ; नो चेत् विफलं तत् इति भावः । अस्मिन् सर्गे वंशस्थं वृत्तम् । "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ॥ १

१ । पार्व्वती स्वचक्षुर्भ्यां भस्मीभवन्तं मदनं दृष्ट्वा स्वकीयं रूपं यौवनञ्च अवजज्ञे, येन हरं मदनायत्तं कर्तुं न शक्यते तत् धिक्, स्वामिसौभाग्यं लब्धमक्षमम् आत्मानं च निनिन्द ।

इयेष सा कर्त्तुमवन्ध्यरूपतां
समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा द्वयं
तथाविधं प्रेम पतिश्च तादृशः ॥२

अन्वयः । सा समाधिम् आस्थाय तपोभिः आत्मनः अवन्ध्यरूपतां कर्त्तुम् इयेष, अन्यथा तथाविधं प्रेम तादृशः पतिश्च ( एतत् ) द्वयं कथं वा अवाप्यते ॥ २

इयेषेति । सा पार्व्वती समाधिम् एकाग्रताम् आस्थाय अवलम्ब्य तपोभिः वक्ष्यमाणनियमैः करणभूतैः आत्मनः स्वस्य अवन्ध्यरूपतां सफलसौन्दर्य्यं कर्त्तुं इयेष इच्छति स्म तपसा शिवं वशीकर्त्तुमुद्युक्तेत्यर्थः । अन्यथा ततोऽन्यप्रकारेण कथं वा तत् द्वयमवाप्यते । किं तद्द्वयं ? तथाभूता विधा प्रकारो यस्य तत् तथाविधं प्रेम स्नेहः येन अर्द्धाङ्गहरा हरस्य भवेदिति भावः । तादृशः पतिश्च यो मृत्युञ्जय इति भावः । द्वयमेव खलु स्त्रीणामपेक्षितं, यद्भर्त्तृवाल्लभ्यं जीवद्भर्तृकत्वञ्चेति, तच्च तपश्चर्य्यैकसाध्यमिति निश्चिकाय इत्यर्थः । अत्र मनुः—"यद्दुष्करं यद्दुरापं यद्दुर्गं यच्च दुस्तरं । तत् सर्वं तपसा प्राप्यं तपो हि दुरतिक्रमम् इति (अ० ११ श्लो० १३८)२

१। येन तादृक् रूपं यौवनं च शिवमनोमोहनार्हं लब्धुं शक्ष्यामि तादृक् तपः आचरिष्यामीति निःश्चत्य सा समाधिम् अवलम्बितुं इयेष ।

निशम्य चैनां तपसे कृतोद्यमां
सुतां गिरीशप्रतिसक्तमानसाम् ।
उवाच मेना परिरभ्य वक्षसा
निवारयन्ती महतो मुनिव्रतात् ॥३

अन्वयः । मेना च गिरीशप्रतिसक्तमानसां तपसे कृतोद्यमां सुतां निशम्य एनां वक्षसा परिरभ्य महतो मुनिव्रतात् निवारयन्ती उवाच ॥ ३

निशम्येति । मेना मेनका च गिरीशप्रतिसक्तमानसां हरासक्तचित्तां तपसे तपश्चरणाय कृतोद्यमां कृतोद्योगां सुतां निशम्य श्रुत्वा एनां पार्वतीं वक्षसा परिरभ्य आलिङ्ग्य महतो मुनिव्रतात् तपसः निवारयन्ती उवाच । मुनिव्रतादित्यत्र यद्यपि मुनिव्रतस्य मेनकाया अनीप्सितत्वात्, "वारणार्थानामीप्सितः" (१, ४, २७ पा०) इति न अपादानत्वं, तथापि कृतोद्यमामिति मानसप्रवेशोक्तत्वात् "ध्रुवमपायेऽपादानमि"ति (१, ४, २४ पा०) अपादानत्वमेव स्यात् यथाह भाष्यकारः—"यच्च मिथ्या सम्प्राप्य निवर्त्तते तच्च ध्रुवमपायेऽपादानमिति प्रसिद्धम्" ॥ ३

२। रूपेण यौवनेन च गिरिशं पतिमाप्तुमक्षमां, तपस्यया तं पतिं प्राप्स्यामीति

तपसे कृतसंकल्पां पार्वतीं निवारयितुं मेना यतते स्म। तपसे निमित्तार्थे चतुर्थी वचसा तृतीया करणे मुनिव्रतात् अपादाने पञ्चमी।

मनीषिताः सन्ति गृहेषु देवताः
तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्त्रिणः ॥४

अन्वयः। मनीषिताः देवताः गृहेषु सन्ति, हे वत्से ! तपः क्व ? तावकं वपुश्च क्व ? पेलवं शिरीषपुष्पं भ्रमरस्य पदं सहेत, पतत्त्रिणस्तु पदं न सहेत ॥ ४

सामान्यनिषेधमुक्त्वा विशेषनिषेधमाह,—मनीषिता इति। हे वत्से ! मनसः ईषिताः इष्टाः मनीषिताः। शकन्ध्वादित्वात्साधुः। देवताः शच्यादयः गृहेषु सन्ति, त्वं ता आराधयेति शेषः। तपः क्व, तव इदं तावकं, "युष्मदस्मदोः अन्यतरस्यां खञ् च" (४, ३, १, पा॰ इत्यण्प्रत्ययः, "तवकममकावेकवचने" इति (४, ३, ३ पा॰) तवकादेशः। वपुश्च क्व। तथाहि पेलवं मृदुलं शिरीषपुष्पं भ्रमरस्य भृङ्गस्य पदं पदस्थितिं सहेत पतत्त्रिणः पुनः पक्षिणस्तु पदं न सहेत, अतिसौकुमार्य्यात्। दिव्योपभोगयोग्यं ते वपुर्न दारुणतपःक्षममित्यर्थः। अत्र दृष्टान्तालङ्कारः ॥ ४

४। सर्व्वे देवा अस्मिन्नद्रौ निवसन्ति, समाराधयितुम् इच्छसि चेत् ? गृहे स्थित्वा तान् आराधय। मुनिव्रतावलम्बनेनालं तपःकष्टं सोढुं ते शरीरं न शक्नुयात्। इत्थं मेनका पार्व्वतीं सान्त्वयामास।

इति ध्रुवेच्छामनुशासती सुतां
शशाक मेना न नियन्तुमुद्यमात् ।
क ईप्सितार्थस्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत् ॥५

अन्वयः। इति अनुशासती मेना ध्रुवेच्छां सुताम् उद्यमात् नियन्तुं न शशाक। तथाहि ईप्सितार्थस्थिरनिश्चयं मनः निम्नाभिमुखं पयश्च कः प्रतीपयेत् ॥ ५

इतीति। इति एवम् अनुशासती उपदिशन्ती मेना ध्रुवेच्छां स्थिरव्यवसायां सुतां पार्वतीम् उद्यमात् उद्योगात्तपोलक्षणात्

नियन्तुं निवारयितुं न शशाक समर्था न अभूत् । तथाहि,— ईप्सितार्थे इष्टार्थे स्थिरनिश्चयं मनः निम्नाभिमुखं पयश्च कः प्रतीपयेत् प्रतीकूलयेत् प्रतिनिवर्त्तयेदित्यर्थः । निम्नप्रवणं पय इव इष्टार्थाभिनिविष्टं मनो दुर्वारमिति भावः । अत्र दीपकानुप्राणितोऽर्थान्तरन्यासालङ्कारः ॥ ५

५ । उद्यमात् पञ्चमी अपादाने । ईप्सितः अर्थः तस्मिन् स्थिरः निश्चयः यस्य तत् । निम्ने अभिमुखम् । प्रतीप + णिच् + लिङ् + यात् ।

कदाचिदासन्नसखीमुखेन सा
मनोरथज्ञं पितरं मनस्विनी ।
अयाचतारण्यनिवासमात्मनः
फलोदयान्ताय तपःसमाधये ॥६

अन्वयः । अथ कदाचित् मनस्विनी सा मनोरथज्ञं पितरम् आसन्नसखीमुखेन फलोदयान्ताय तपःसमाधये आत्मनः अरण्यनिवासम् अयाचत ॥ ६

कदाचिदिति । अथ कदाचित् मनस्विनी स्थिरचित्ता सा पार्वती मनोरथज्ञम् अभिलाषाभिज्ञं पितरं हिमवन्तम् आसन्नसखी आसन्नसखी सैव मुखं उपायः । "मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि" इति विश्वः । तेन, फलोदयः फलोत्पत्तिः अन्तः अवधिर्यस्य तस्मै तपःसमाधये तपोनियमार्थम् आत्मनः स्वस्य अरण्यनिवासं वनवासम् अयाचत । "दुह्याच्"—इत्यादिना ( १, ४, ५१ पा० सू० भा० ) द्विकर्मकत्वम् ॥ ६

६ । पार्वती समये—विश्वस्तसख्या जनकं अरण्यवासेन तपोभिलाषं याचितवती । समाधये चतुर्थी निमित्तार्थे ।

अथानुरूपाभिनिवेशतोषिणा
कृताभ्यनुज्ञा गुरुणा गरीयसा ।
प्रजासु पश्चात् प्रथितं तदाख्यया
जगाम गौरी शिखरं शिखण्डिमत् ॥७

अन्वयः । अथ गौरी अनुरूपाभिनिवेशतोषिणा गरीयसा गुरुणा कृताभ्यनुज्ञा सती पश्चात् प्रजासु तदाख्यया प्रथितं शिखण्डिमत् शिखरं जगाम ॥ ७

अथेति। अथ गौरी अनुरूपेण योग्येन अभिनिवेशेन आग्र-हेण-तुष्यतीति तथोक्तेन गरीयसा पूज्यतमेन गुरुणा पित्रा कृताभ्य-नुज्ञा "तपः कुरु" इति कृतानुमतिः सती पश्चात् तपःसिद्ध्युत्तरकालं प्रजासु जनेषु तदाख्यया तस्याः गौर्य्याः संज्ञया प्रथितं गौरीशिखर-मिति प्रसिद्धमित्यर्थः। शिखण्डिमत, न तु हिंस्रप्राणिप्रचुर-मिति भावः। शिखरं शृङ्गं जगाम ययौ॥ ७

७। गुरुणा अनुज्ञे कर्त्तरि तृतीया। हिमालयः सुतायाः अभिलाषमगत्यं ज्ञात्वा हिमालयस्य कस्मिन्नपि स्थाने तां तपसे आदिशत्, ततः तत् स्थानं गौरीशिखरमिति प्रसिद्धम् आसीत्।

विमुच्य सा हारमहार्य्यनिश्चया
विलोलयष्टिप्रविलुप्तचन्दनम्।
बबन्ध बालारुणबभ्रु वल्कलं
पयोधरोत्सेधविशीर्णसंहति॥८

अन्वयः। अहार्य्यनिश्चया सा विलोलयष्टिप्रविलुप्तचन्दनं हारं विमुच्य बालारुणबभ्रु पयोधरोत्सेधविशीर्णसंहति वल्कलं बबन्ध॥ ८

विमुच्येति। अहार्य्यनिश्चया अनिवार्य्यनिश्चया सा गौरी विलो-लाभिः चलाभिः यष्टिभिः प्रतिसरैः प्रविलुप्तं प्रमृष्टं चन्दनं स्तना-न्तरगतं येन तं तथोक्तं हारं मुक्तावलीं विमुच्य विहाय बालारुण-बभ्रु बालार्कपिङ्गलं पयोधरयोः स्तनयोः उत्सेधेन उच्छ्रायेण विशीर्णा विघटिता संहतिः अवयवसंश्लेषो यस्य तत् तथोक्तम् वल्कलं कण्ठलम्बि स्तनोत्तरीयभूतं बबन्ध धारयामास इत्यर्थः॥८

८। साम्प्रतं पार्व्वती राजतनयोचितं भूषणं वसनञ्च विहाय तपःप्रयोजनार्थं वल्क-लादिकं गृह्णाति। दृढ़चित्तानां मनः सङ्कल्पात् न विरमति इति भावः।

यथा प्रसिद्धैर्मधुरं शिरोरुहैः
जटाभिरप्येवमभूत्तदाननम्।
न षट्पदश्रेणिभिरेव पङ्कजं
सशैवलासङ्गमपि प्रकाशते॥९

अन्वयः। तदाननं प्रसिद्धैः शिरोरुहैः यथा मधुरमभूत्, जटाभिरपि एवमभूत्। तथाहि पङ्कजं षट्पदश्रेणिभिरेव न, किन्तु सशैवलासङ्गमपि प्रकाशते॥ ९

यथेति। तस्याः देव्याः आननं तदाननं प्रसिद्धैः भूषितैः। "प्रसिद्धौ ख्यातभूषितौ" इत्यमरः। रोहन्तीति रुहाः। "इगुपधज्ञा-प्री किरः कः" इति ( ३, १, १३५ पा० ) कप्रत्ययः। शिरसि रुहाः तैः शिरोरुहैः मूर्द्धजैः यथा मधुरं प्रियम् अभूत्। "स्वादुप्रियौ तु मधुरौ" इत्यमरः। जटाभिरप्येवं मधुरम् अभूत्। तथाहि—पङ्कजं पद्मं षट्पदश्रेणिभिः भ्रमरपङ्क्तिभिरेव न किन्तु सह शैवलासङ्गेन सशैवलासङ्गमपि। "तेन सहेति तुल्ययोगे" (२, २, २८ पा० ) बहुव्रीहिः। प्रकाशते शैवलेनापि शोभत इत्यर्थः॥९

९। जटाभिरिति तृतीया करणे। यथा पङ्कजं शैवालपरिवेष्टितं सत् शोभते, तथा अस्याः मुखं जटाभिरविरलमाच्छादितं सत् शोभते, स्वभावसौन्दर्य्यं न केनापि विलुप्यति इति भावः।

प्रतिक्षणं सा कृतरोमविक्रियां
व्रताय मौञ्जीं त्रिगुणां बभार याम्।
अकारि तत्पूर्वनिबद्धया तया
सरागमस्या रसनागुणास्पदम्॥१०

अन्वयः। सा प्रतिक्षणं कृतरोमविक्रियां त्रिगुणां यां मौञ्जीं व्रताय बभार तत्पूर्वनिबद्धया तया अस्या रसनागुणास्पदं सरागम् अकारि॥ १०

प्रतिक्षणमिति। सा देवी प्रतिक्षणं क्षणे क्षणे कृतरोमविक्रियां पारुष्यात् कृतरोमाञ्चां त्रिगुणां त्रिरावृत्तां यां मौञ्जीं मुञ्जमयीं मेखलां व्रताय तपसे बभार। तदेव पूर्वं प्रथमं यस्य तत्पूर्वं यथा तथा निबद्धया तया मौञ्ज्या अस्याः देव्याः रशनागुणस्यास्पदं स्थानं जघनं सह रागेण सरागं सलोहितम् अकारि कृतम्, सौकुमार्य्यातिशयादिति भावः॥ १०

१०। व्रताय चतुर्थी निमित्तार्थे। कृता रोमविक्रिया यस्याः सा बहुव्रीहिः। रसनागुणास्पदस्य जघनस्य सौकुमार्य्यातिशयात् न, किन्तु मौञ्ज्याः कार्कश्यसहनाचमत्वात् लोहितादिर्भावः युक्तः।

विसृष्टरागादधरान्निवर्त्तितः
स्तनाङ्गरागारुणिताच्च कन्दुकात्।

कुशाङ्कुरादानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयी तया करः ॥ ११

अन्वयः । तया विसृष्टरागात् अधरात् स्तनाङ्गरागारुणितात् कन्दुकाच्च निवर्तितः कुशाङ्कुरादानपरिक्षताङ्गुलिः करः अक्षसूत्रप्रणयी कृतः ॥ ११

विसृष्टेति । तया देव्या विसृष्टरागात् त्यक्तलाक्षारसरञ्जनात् अधरात् अधरोष्ठात् निवर्त्तितः निसृष्टरागादिति पाठे नितरां त्यक्तलाक्षारागात्, रागत्यागेन निष्प्रयोजनत्वादिति भावः । तथा स्तनाङ्गरागेण अरुणितात् । अरुणीकृतात् पतनसमये तस्य स्तनयोः उपरोधादिति भावः । कन्दुकाच्च निवर्त्तितः । कुशाङ्कुराणाम् आदानेन लवनेन परिक्षताः व्रणिताः अङ्गुलयः यस्य स तथोक्तः करः पाणिः अक्षसूत्रप्रणयी अक्षमालासहचरः कृतः ॥ ११

११ । अधरात् कन्दुकाच्च पञ्चमी अपादाने ।

महार्हशय्यापरिवर्त्तनच्युतैः
स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी
निषेदुषी स्थण्डिल एव केवले ॥ १२

अन्वयः । महार्हशय्यापरिवर्त्तनच्युतैः स्वकेशपुष्पैरपि या दूयते स्म, सा बाहुलतोपधायिनी केवले स्थण्डिले एव अशेत निषेदुषी च ॥ १२

महार्हेति । महान् अर्हो मूल्यं यस्याः सा महार्हा श्रेष्ठा या शय्या तस्यां परिवर्त्तनेन लुण्ठनेन च्युतैः भ्रष्टैः स्वकेशपुष्पैरपि या देवी दूयते स्म क्लिश्यति स्म, पुष्पाधिकसौकुमार्य्यादिति भावः । सा देवी बाहुलताम् उपधत्ते उपधानीकरोतीति बाहुलतोपधायिनी सती केवले संस्तरणरहिते स्थण्डिले भूमावेव अशेत शयितवती । तथा निषेदुषी उपविष्टा च । "क्वसुश्चे"ति ( ३, २, १०७ पा० ) क्वसुः । "उगितश्चे"ति ( ४, १, ६ पा० ) ङीप् । भूमौ एव शयनादिव्यवहारो न जातु उपरीत्यर्थः ॥ १२

१२ । या पूर्वं शिरोभूषणकुसुमावपातं सोढुं न शक्नुयात्, सा साम्प्रतं वन्धुरे पाषाणे स्वप्तुं न क्लिश्यति । वाह्यवस्तुशक्तिप्रभावेण सुखदुःखयोरनुभावः ।

पुनर्ग्रहीतुं नियमस्थया तया
द्वयेऽपि निक्षेप इवार्पितं द्वयम् ।
लतासु तन्वीषु विलासचेष्टितं
विलोलदृष्टं हरिणाङ्गनासु च ॥ १३

अन्वयः। नियमस्थया तया द्वयेऽपि द्वयं पुनः ग्रहीतुं निक्षेप अर्पितमिव, तन्वीषु लतासु विलासचेष्टितं हरिणाङ्गनासु विलोलदृष्टञ्च ॥ १३

पुनरिति। नियमस्थया व्रतस्थया तया देव्या द्वयेऽपि द्वयं पुनः ग्रहीतुं पुनः आनेतुं निक्षेपः अर्पितमिव निक्षेपत्वेन अर्पितं किमु ? क्वचिद् द्वयोषु इति प्रामादिकः पाठः। कुत्र द्वये किं द्वयम् अर्पितम् ? इत्याह,—तन्वीषु लतासु विलास एव चेष्टितं विलासचेष्टितं, हरिणाङ्गनासु विलोलदृष्टं चञ्चलावलोकितं च। व्रतस्थायां तस्यां तयोरदर्शनात् लतादिषु दर्शनाच्च अर्पितम् इवेत्युत्प्रेक्षा, न तु वस्तुतोऽर्पणमस्तीति भावः ॥ १३

१३। तया अनुक्ते कर्त्तरि तृतीया। व्रतावलम्बिन्याः तस्याः विलोलदृष्टेः विलासचेष्टायाः, परिहारविधानात् व्रतानन्तरं एतत् द्वयम् अहं ग्रहीष्यामीत्याशङ्क्य लतासु हरिणीषु च द्वयमर्पितमिव। अतएव ते विलासचेष्टां विलोलदृष्टिं च अजानीतामिति भावः।

अतन्द्रिता सा स्वयमेव वृक्षकान्
घटस्तनप्रस्रवणैर्व्यवर्द्धयत् ।
गुहोऽपि येषां प्रथमाप्तजन्मनां
न पुत्रवात्सल्यमपाकरिष्यति ॥ १४

अन्वयः। सा अतन्द्रिता स्वयमेव वृक्षकान् घटस्तनप्रस्रवणैः व्यवर्द्धयत, गुहोऽपि प्रथमाप्तजन्मनां येषां पुत्रवात्सल्यं न अपाकरिष्यति ॥ १४

अतन्द्रितेति। सा देवी स्वयमेव अतन्द्रिता असञ्जाततन्द्रा सती तारकादित्वात् ( ५, २, ३६ पा० ) इतच्प्रत्ययः। वृक्षकान् स्वल्पवृक्षान्। अल्पे ( ५, ३, ८५ पा० ) इति अल्पार्थे कप्रत्ययः। घटाविव स्तनौ तयोः प्रस्रवणैः प्रस्तुतपयोभिः व्यवर्द्धयत्। गुहः कुमारः अपि प्रथमाप्तजन्मनां प्रथमलब्धजन्मनाम् अग्रजातानां-

मित्यर्थः येषां वृक्षकाणां सम्बन्धि पुत्रवात्सल्यं सुतप्रेम न अपाकरिष्यति, उत्तरत्र कुमारोदयेऽपि न तेषु पुत्रवात्सल्यं निवर्त्तिष्यत इत्यर्थः॥ १४

१४। तपश्चरणसमये पार्वती स्वहस्ताम्बुसेचनपरिवर्द्धितेषु वृक्षेषु तथा स्निह्यति, यथा गुहोऽपि तेभ्योऽधिकं पुत्रवात्सल्यं लब्धुं न शक्नुयादिति।

अरण्यबीजाञ्जलिदानलालिताः
तथा च तस्यां हरिणा विशश्वसुः।
यथा तदीयैर्नयनैः कुतूहलात्
पुरः सखीनाममिमीत लोचने॥ १५

अन्वयः। अरण्यबीजाञ्जलिदानलालिताः हरिणाश्च तस्यां तथा विशश्वसुः, यथा कुतूहलात् तदीयैः नयनैः लोचने सखीनां पुरः अमिमीत॥ १५

अरण्येति। अरण्यबीजानां नीवारादीनाम् अञ्जलयः तेषां दानेन लालिताः हरिणाश्च तस्यां देव्यां तथा विशश्वसुः विस्रम्भं जग्मुः। "समौ विस्रम्भविश्वासौ" इत्यमरः। यथा कुतूहलात् औत्सुक्यात् तदीयैः हरिणसम्बन्धिभिः नयनैः नेत्रैः करणैः। स्वकीये लोचने सखीनां पुरः पुरतः। अनेन तेषां सम्बन्धसहत्वमुक्तम्। अमिमीत अक्षिपरिमाणतारतम्यज्ञानाय मानं चकार इत्यर्थः। केचित्तु, सा पार्वती तदीयैः नेत्रैः कुतूहलात् पुरोऽग्रे वर्त्तमानानां सखीनां लोचने अमिमीत व्रतस्थत्वात् न आत्मनः इत्याहुः। माङ्माने इति अस्माद्धातोर्लङ्। इयमेव खलु विश्वासस्य परा काष्ठा यदक्षिपीड़नेऽपि न क्षुभ्यन्तीति भावः॥ १५

१५। नयनैः तृतीया करणे। कुतूहलात् हेतौ पञ्चमी। प्रत्यहं स्वहस्तनीवारप्रदानेन कृतविश्वासानां हरिणानाम् औत्सुक्यवशात् सखीभ्यां सार्द्धं स्वकीये नेत्रे अमिमीत।

कृताभिषेकां हुतजातवेदसं
त्वगुत्तरासङ्गवतीमधीतिनीम्।
दिदृक्षवस्तामृषयोऽभ्युपागमन्
न धर्म्मवृद्धेषु वयः समीक्ष्यते॥ १६

अन्वय:। कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीम् अधीतिनीं तां दिदृचव: ऋषय: अभ्युपागमन्, (तथाहि) धर्म्मवृद्धेषु वय: न समीक्ष्यते॥ १६

तप:प्रभावमाह,—कृतेति। कृताभिषेकां कृतस्नानां हुतजातवेदसं हुताग्निकां कृतहोमाम् इत्यर्थ:। त्वचा वल्कलेन उत्तरासङ्गवतीम् उत्तरीयवतीं त्वगुत्तरासङ्गवतीम्, अधीतमस्या: अस्तीति अधीतिनीं स्तुतिपाठादि कुर्वतीम्। "इष्टादिभ्यश्च" (५, २, ८८ पा०)। इति इनि:। तां देवीं दिदृचव: द्रष्टुमिच्छव ऋषय: मुनय: अभ्युपागमन् समुपागता:। न च अत्र कनिष्ठसेवा दोष इत्याह,—धर्म्मवृद्धेषु वयो न समीक्ष्यते न प्रमाणीक्रियते। सति धर्म्मज्येष्ठेत्र न प्रयोजकमित्यर्थ:। तथाच मनु:,—"न तेन वृद्धो भवति येनास्य पलितं शिर:। यो वा युवाप्यधीयानस्तं देवा: स्थविरं विदु:॥" (अ० २ श्लो० १५६)॥ १६

१६। सा दृढ़क् कठोरं तपस्समारेभे; यत् सर्वे ऋषय: तत्तपो द्रष्टुं तत्र समाजग्मु:। गुणा: शैशवं वार्द्धकं वा न विचारयन्ति, स्थानविशेषेषु ते स्वशक्तिं प्रकाशयन्ति।

विरोधिसत्त्वोज्झितपूर्व्वमत्सरं
द्रुमैरभीष्टप्रसवार्च्चितातिथि।
नवोटजाभ्यन्तरसम्भृतानलं
तपोवनं तच्च बभूव पावनम्॥ १७

अन्वय:। विरोधिसत्त्वोज्झितपूर्वमत्सरं द्रुमै: अभीष्टप्रसवार्च्चितातिथि नवोटजाभ्यन्तरसम्भृतानलं तच्च तपोवनं पावनं बभूव॥ १७

विरोधीति। विरोधिभि: सत्त्वै: गोव्याघ्रादिभि: उज्झितपूर्वमत्सरं त्यक्तपूर्ववैरं, हिंसारहितमित्यर्थ:। द्रुमै: अभीष्टप्रसवेन इष्टफलेन अर्च्चिता: पूजिता: अतिथय: यस्मिन् तत् तथोक्तम्। नवानामुटजानां पर्णशालानाम् अभ्यन्तरेषु सम्भृता: सञ्चिता: अनला: अग्नयो यस्मिन् तत् तथोक्तं तच्च तपोवनं पावयतीति पावनं बभूव। अहिंसातिथिसत्काराग्निपरिचर्य्याभि: जगत्पावनं बभूव इत्यर्थ:॥ १७

१७। द्रुमैः तृतीया अनुक्ते कर्त्तरि। तस्याः तपःप्रभावेण नित्यवैराणां पशूनामपि सौहृद्यं जातम्। द्रुमैरपि प्रचुरफलप्रदानेन अतिथयः सत्कृताः, अभीष्टसिद्धेर् नाचिरोऽयमिति भावः।

यदा फलं पूर्वतपःसमाधिना
न तावता लभ्यममंस्त काङ्क्षितम्।
तदानपेक्ष्य स्वशरीरमार्दवं
तपो महत् सा चरितुं प्रचक्रमे॥ १८

अन्वयः। सा यदा तावता पूर्वतपःसमाधिना काङ्क्षितं फलं लभ्यं न अमंस्त, तदा स्वशरीरमार्द्दवम् अनपेक्ष्य महत् तपः चरितुं प्रचक्रमे॥ १८

यदेति। सा देवी यदा यस्मिन् काले तावता तावत्प्रमाणेन पूर्वतपः समाधिना पूर्व्वेण अनुष्ठीयमानप्रकारेण तपोनियमेन काङ्क्षितं फलं लभ्यं लब्धुं शक्यं नामंस्त अशक्यम् अमंस्तेत्यर्थः। तदा तत्काले, अविलम्बेन इत्यर्थः। स्वशरीरस्य मार्दवं मृदुत्वं सौकुमार्य्यम् अनपेक्ष्य अविगणय्य महत् दुस्वरं तपश्चरितुं साधयितुं प्रचक्रमे उपचक्रमे॥ १८

१८। पूर्व्वतपःसमाधिना अनुक्ते कर्त्तरि तृतीया। प्रचक्रमे "प्रोपाभ्यामारम्भे" इत्यात्मनेपदम्। अनायासेन यत् साधयितुं न शक्यं, तद् महता कष्टेनावश्य साधयेत्। तया अनुक्ते कर्त्तरि तृतीया।

क्लमं ययौ कन्दुकलीलयापि या
तया मुनीनां चरितं व्यगाह्यत।
ध्रुवं वपुः काञ्चनपद्मनिर्मितं
मृदु प्रकृत्या च ससारमेव च॥ १९

अन्वयः। या कन्दुकलीलयापि क्लमं ययौ, तया मुनीनां चरितं व्यगाह्यत, ध्रुवम् (अस्याः) वपुः काञ्चनपद्मनिर्म्मितम् (अतएव) मृदु च ससारमेव च॥ १९

क्लममिति। या देवी कन्दुकलीलया कन्दुकक्रीड़यापि क्लमं ययौ ग्लानिं प्राप, तया देव्या मुनीनां चरितं तीव्रं तपः व्यगाह्यत प्रविष्टम्। अत्र उत्प्रेक्षते,—ध्रुवम् अस्याः वपुः काञ्चनपद्मेन सुवर्णकमलेन निर्म्मितं घटितम्। अतएव प्रकृत्या पद्म-

स्वभावेन मृदु च सुकुमारमपि काञ्चनस्वभावेन ससारञ्च कठिनं एव। तथा च तदुपादानकत्वात् देव्या वपुषः सुकुमारस्यापि तीव्रतपःक्षमत्वम् इत्युत्प्रेक्षार्थः ॥ १९

१९। कन्दुकलीलया करणे तृतीया। प्रकृत्या 'प्रकृत्यादिभ्यः' तृतीया। पूर्वं या कन्दुकक्रीड़याश्राम्यत् साधुना अतिकठोरं तपः चरितुं न क्लिश्यति, अतः काञ्चनपद्ममिव अस्याः वपुः ससारं समार्द्रञ्च भवतीति भावः। तथा अनुक्ते कर्त्तरि तृतीया।

शुचौ चतुर्णां ज्वलतां हविर्भुजां
शुचिस्मिता मध्यगता सुमध्यमा।
विजित्य नेत्रप्रतिघातिनीं प्रभा-
मनन्यदृष्टिः सवितारमैक्षत ॥ २०

अन्वयः। शुचौ शुचिस्मिता सुमध्यमा (सा) ज्वलतां चतुर्णां हविर्भुजां मध्यगता (सती) नेत्रप्रतिघातिनीं प्रभां विजित्य अनन्यदृष्टिः (सती) सवितारम् ऐक्षत ॥ २०

शुचाविति। शुचौ ग्रीष्मे शुचिस्मिता विशदमन्दहासा सुमध्यमा पार्वती ज्वलतां दीप्तिमतां चतुर्णां हविर्भुजाम् अग्नीनां मध्यगता सती नेत्रे प्रतिहन्तीति तां नेत्रप्रतिघातिनीं प्रभां सावित्रं तेजः विजित्य। न विद्यते अन्यत्र दृष्टिर्यस्याः सा अनन्यदृष्टिः सती सवितारं सूर्यम् ऐक्षत ददर्श। "ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः" इति स्मरणात्। पञ्चाग्निमध्ये तपश्चचारेत्यर्थः। तत्र सवितैव पञ्चमोऽग्निः "अग्निः सविता सवितैवाग्निः" इति श्रौतलिङ्गात् ॥ २०

२०। निदाघे ज्वलदग्निमध्यगता सा निर्निमेषाभ्यां चक्षुर्भ्यां सवितारमैक्षत, इतःपरं किं कठोरं स्यात्।

तथातितप्तं सवितुर्गभस्तिभि-
र्मुखं तदीयं कमलश्रियं दधौ।
अपाङ्गयोः केवलमस्य दीर्घयोः
शनैः शनैः श्यामिकया कृतं पदम् ॥ २१

अन्वयः। सवितुः गभस्तिभिः तथा अतितप्तं तदीयं मुखं कमलश्रियं दधौ, (किन्तु) अस्य दीर्घयोः अपाङ्गयोः केवलं श्यामिकया शनैः शनैः पदं कृतम् ॥ २१

तथेति। सवितुः सूर्य्यस्य गभस्तिभिः किरणैः तथा पूर्व्वोक्त-प्रकारेण अतितप्तं सन्तप्तं तस्याः इदं तदीयं मुखं कमलश्रियं कमलस्य शोभां दधौ प्राप। यथा रवितापात् कमलं न म्लायति प्रत्युत विकसति तथा तदीयं मुखमासीदिति भावः। किन्तु अस्य मुखस्य दीर्घयोः अपाङ्गयोः केवलं नेत्रान्तयोरेव शनैः शनैः मन्दं मन्दं श्यामिकया कालिम्ना पदं स्थानं कृतम्। तयोः सौकुमार्य्यादित्यर्थः॥ २१

२१। गभस्तिभिः तृतीया करणे। श्यामिकया अनुक्ते कर्त्तरि तृतीया। यथा सूर्य्यकिरणैः कमलं न म्लायति, तथा अस्याः मुखमपि सूर्य्यरश्मिभिः न म्लायति, श्यामिका तु मन्दं मन्दं तत्र पदं विदधातीति भावः।

अयाचितोपस्थितमम्बु केवलं
रसात्मकस्योडुपतेश्च रश्मयः।
बभूव तस्याः किल पारणाविधि-
र्न वृक्षवृत्तिव्यतिरिक्तसाधनः॥ २२

अन्वयः। अयाचितोपस्थितं केवलम् अम्बु रसात्मकस्य उडुपतेः रश्मयश्च तस्याः पारणाविधिः बभूव किल, वृक्षवृत्तिव्यतिरिक्तसाधनः न (बभूव)॥ २२

अयाचितेति। अयाचितोपस्थितम् अप्रार्थितोपनीतं केवलम् अम्बु उदकं रसात्मकस्य अमृतमयस्य उडूनां नक्षत्राणां पतिः चन्द्रस्तस्य रश्मयश्च तस्याः पार्वत्याः पारणाविधिः अभ्यवहारकर्म्म बभूव, तावन्मात्रसाधनकोऽभूत् इत्यर्थः। साध्यसाधनयोः अभेदेन व्यपदेशः. साधनान्तरव्यावृत्त्यर्थः। किल इति प्रसिद्धौ। वृक्षाणां या वृत्तिः जीवनोपायः तद्व्यतिरिक्तं साधनम् उपायो यस्य स तथोक्तः पारणाविधिः न बभूव। वृक्षोऽपि अयाचितोपस्थितेन मेघोदकेन इन्दुकिरणैश्च जीवतीति प्रसिद्धम्। अम्बिकापि तावन्मात्रम् अवालम्बतेत्यर्थः॥ २२

२२। यथा वृक्षाः मेघाम्बुना चन्द्ररश्मिना च जीवनं धारयन्ति, तथा पार्व्वत्यपि वृक्षवृत्तिमवलम्ब्य तपस्यायां जीवनं धारयतीति भावः।

निकामतप्ता विविधेन वह्निना
नभश्चरेणेन्धनसम्भृतेन सा।

तपात्यये वारिभिरुक्षिता नवै-
र्भुवा सहोष्माणममुञ्चदूर्ध्वगम्॥ २३

अन्वयः। विविधेन नभश्चरेण इन्धनसम्भृतेन वह्निना निकामतप्ता सा तपात्यये नवैः वारिभिः उक्षिता भुवा सह ऊर्ध्वगम् उष्माणम् अमुञ्चत्॥ २३

निकामेति। विविधेन पञ्चविधेन इत्यर्थः। नभश्चरेण खेचरेण, आदित्यरूपेण इत्यर्थः। इन्धनसम्भृतेन काष्ठसमिद्धेन वह्निना निकामम् अत्यन्तं तप्ता सा अम्बिका तपात्यये ग्रीष्मान्ते प्रावृषीत्यर्थः, नवैर्वारिभिः उक्षिता सिक्ता सती भुवा पञ्चाग्नितप्तया सह ऊर्ध्वगम् ऊर्ध्वप्रसृतम् उष्माणं वाष्पम् अमुञ्चत्। "ग्रीष्मोष्मवाष्पमुष्माणम्" इति यादवः॥ २३

२३। वह्निना नभश्चरेण च तृतीया करणे वारिभिस्तृतीया करणे।

स्थिताः क्षणं पक्ष्मसु ताड़िताधराः
पयोधरोत्सेधनिपातचूर्णिताः।
वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदबिन्दवः॥ २४

अन्वयः। प्रथमोदबिन्दवः तस्याः पक्ष्मसु क्षणं स्थिताः (ततः) ताड़िताधराः, (ततः) पयोधरोत्सेधनिपातचूर्णिताः (ततः) वलीषु स्खलिताः (इत्थम्) चिरेण नाभिं प्रपेदिरे॥ २४

स्थिता इति। उदकस्य बिन्दवः उदबिन्दवः, "मन्थौदने"त्यादिना (६, ३, ६० पा०) उदकशब्दस्य उदादेशः। प्रथमे उदबिन्दवः, प्रथमविशेषणात् बिन्दूनां विरलत्वं बहुवचनात् न अतिविरलत्वञ्च गम्यते। तथा च चिरत्वाभ्यन्तरगमनयोः निर्वाहः। तस्याः पार्वत्याः पक्ष्मसु नेत्रलोमसु क्षणं स्थिताः स्थितिं गताः। स्थिता इत्यनेन पक्ष्मणां सान्द्रत्वं क्षणमिति स्नैग्ध्यञ्च गम्यते। अनन्तरं ताड़िताः व्यथिताः अधरः ओष्ठो यैः ते तथोक्ताः। एतेन अधरस्य मार्दवं गम्यते। ततः पयोधरयोः स्तनयोः उत्सेधे उपरिभागे निपातेन पतनेन चूर्णिताः जर्जरिताः, कुचकाठिन्यादिति

भावः। तदनु वलीषु उदररेखासु स्खलिताः निम्नोन्नतत्वादिति भावः। इत्थं चिरेण न तु शीघ्रं, प्रतिबन्धबाहुल्यादिति भावः। नाभिं प्रपेदिरे प्रविष्टाः न तु निर्जग्मुः, एतेन नाभेः गाम्भीर्य्यं गम्यते। अत्र प्रतिपदमर्थवत्त्वात्परिकरालङ्कारः ॥ २४

२४। पक्ष्मित्यनेन पक्ष्मणां चञ्चलत्वात् लीलादृष्टित्वं सूचितम्। ताड़ित इत्यनेन अधरस्य मार्दवम्। चूर्णिताः इत्यनेन पयोधरयोः काठिन्यम्। चिरेण इत्यनेन वलीनां गभीरत्वमिति भावः।

शिलाशयां तामनिकेतवासिनीं
निरन्तरास्वन्तरवातवृष्टिषु।
व्यलोकयन्नुन्मिषितैस्तड़िन्मयै-
र्महातपःसाक्ष्य इव स्थिताः क्षपाः ॥ २५

अन्वयः। निरन्तरासु अन्तरवातवृष्टिषु अनिकेतवासिनीम्। शिलाशयां तां महातपः-साक्ष्ये स्थिताः क्षपाः तड़िन्मयैः उन्मिषितैः व्यलोकयन्निव ॥ २५

शिलेति। निरन्तरासु नीरन्ध्रासु अन्तरे मध्ये वातो यासां तादृश्यो या वृष्टयः तासु अन्तरवातवृष्टिषु। न निकेते गृहे वसतीति अनिकेतवासिनीम् अनावृतदेशवासिनीमित्यर्थः। शिलायां शेते इति शिलाशयां शिलातलशायिनीम्। "अधिकरणे शेतेः"रिति (३, २, १५ पा०) अच्प्रत्ययः। तां पार्वतीं साक्षाद्द्रष्टा साक्षी "साक्षाद्द्रष्टरि संज्ञायाम्" (५, २, ९१ पा०) इति इनिप्रत्ययः। तस्य कर्म्म साक्ष्यं महातपसः साक्ष्ये स्थिताः क्षपाः तड़िन्मयैः विद्युद्रूपैः उन्मिषितैरवलोकनैः व्यलोकयन्निव, इवेति चक्षुषा विलोकनमेव उत्प्रेक्ष्यते। साक्ष्यन्तु "आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्म्मश्च जानाति नरस्य वृत्तम्" इति प्रमाणसिद्धत्वात् न उत्प्रेक्ष्यमित्यनुसन्धेयम् ॥ २५

२५। अनावृतशिलातलशायिनी सा तपस्यायाः अतिकठोरत्वात् वर्षारात्रीरयापयदिति भावः।

निनाय सात्यन्तहिमोत्किरानिलाः
सहस्यरात्रीरुदवासतत्परा।

परस्पराक्रन्दिनि चक्रवाकयोः
पुरो वियुक्ते मिथुने कृपावती ॥ २६

अन्वयः। सा अत्यन्तहिमोत्किरानिलाः सहस्यरात्रीः उदवासतत्परा परस्पराक्रन्दिनि पुरो वियुक्ते चक्रवाकयोः मिथुने कृपावती (सती) निनाय ॥ २६

एवं वर्षासु विहितं तपःप्रकारमुक्त्वा सम्प्रति हेमन्ते तपश्चरणप्रकारमाह,—निनायेति। सा पार्वती उत्किरन्ति चिपन्तीत्युत्किराः। "इगुपधज्ञे"त्यादिना (३, १, १३५ पा०) कः। अत्यन्तं हिमानां उत्किराः अनिलाः यासु ताः सहस्यराचीः। पौषरात्रीः। "पौषे तैषसहस्यौ द्वौ" इत्यमरः। उदके वासः उदवासः। "प्रेषं वासवाहनधिषु च" (६, ३, ५८ पा०) इत्युदादेशः। उदवासे तत्परा आसक्ता तथा परस्परमाक्रन्दिनि अन्योन्यम् आक्रोशिनि पुरः अग्रे वियुक्ते विरहिणि वियोगं प्राप्ते इति यावत्। चक्रवाकी च चक्रवाकश्च चक्रवाकौ तयोः चक्रवाकयोर्मिथुने द्वन्द्वे कृपावती सती निनाय। दुःखिषु कृपालुत्वं महतां स्वभाव इति चक्रवाकमिथुने कृपा, न तु कामितया इति व्याख्यानवक्राशः। "अप्सु वासस्तु हेमन्ते क्रमशो वर्द्धयेत्तपः"इति मनुः (अ० ६श्लो०२३)॥२६

२६। चक्रवाकाभ्यां सार्द्धं जाग्रती सती सहस्यदीर्घरात्रीरयापयदितःपरं तपस्यायाः कठोरत्वं न स्यादिति भावः।

मुखेन सा पद्मसुगन्धिना निशि
प्रवेपमानाधरपत्त्रशोभिना।
तुषारवृष्टिक्षतपद्मसम्पदां
सरोजसन्धानमिवाकरोदपाम् ॥ २७

अन्वयः। सा निशि पद्मसुगन्धिना प्रवेपमानाधरपत्त्रशोभिना मुखेन तुषारवृष्टिक्षतपद्मसम्पदाम् अपां सरोजसन्धानम् अकरोदिव ॥ २७

मुखेनेति। सा पार्वती निशि रात्रौ पद्मवत् सुगन्धिना सुरभिणा। "गन्धस्येत्" इत्यादिना (५, ४, १३५ पा०) इकारः। प्रवेपमानः कम्पमानः अधरः ओष्ठ एव पत्त्रं दलं तेन शोभत इति शोभि-तथोक्तेन मुखेन तुषारवृष्ट्या तुहिनवर्षेण क्षताः नाशिताः ... इति ...ाः पद्म-

सम्पदः यासां तासाम् अपां सरोजसन्धानं पद्मसङ्घट्टनम् अकरोत् इव इत्युक्तं चालङ्कारः। पद्मान्तरं तुहिनेन उपहन्यते तन्मुखपद्मन्तु न तथेति व्यतिरेकालङ्कारो व्यज्यत इत्युभयोः सङ्करः॥ २७

२७। मुखेन उपलक्षणे तृतीया। पद्मन्तु तुषारपातेन नश्यति, अस्याः मुखपद्मं तुषारपातेन न नश्यतीति भावः।

स्वयंविशीर्णद्रुमपर्णवृत्तिता
परा हि काष्ठा तपसस्तया पुनः।
तदप्यपाकीर्णमतः प्रियंवदां
वदन्त्यपर्णेति च तां पुराविदः॥ २८

अन्वयः। स्वयंविशीर्णद्रुमपर्णवृत्तिता तपसः परा काष्ठा हि, तया पुनः तदपि अपाकीर्णम्, अतः प्रियंवदां तां पुराविदः अपर्णा इति च वदन्ति॥ २८

स्वयमिति। स्वयं विशीर्णानि स्वतश्च्युतानि द्रुमपर्णानि एव वृत्तिः जीवनं यस्य तस्य भावस्तत्ता तपसः परा काष्ठा परमुत्कर्षो हि। "काष्ठोत्कर्षे स्थितौ दिशि" इत्यमरः। तया देव्या पुनः तत् पर्णवर्त्तनमपि अपाकीर्णम् अपाकृतम्। अतः पर्णापकरणाद्धेतोः प्रियं वदतीति प्रियंवदा। "प्रियवशे वदः खच्" इति (३, २, ३८ पा०) खच्प्रत्ययः। "अरुर्द्विषदजन्तस्य मुम्" इति (६, ३, ६७ पा०) मुमागमः। तां पार्वतीं पुराविदः पुराणज्ञाः तपः-करणसमये अविद्यमानं पर्णभक्षणं यस्याः सा अपर्णा इति वदन्ति नामान्तरसमुच्चयार्थश्चकारः स्वयं प्रियंवदाः परेषामपि प्रियवाद-भाजनानि भवन्तीति भावः। अत्र 'पर्णा'मित्यपपाठः इति शब्दाभि-हिते द्वितीयानुपपत्तेः। यथाह वामनः। "निपातेनाप्यभिहिते कर्म्मणि न कर्म्मविभक्तिः परिगणनस्य प्रायिकत्वात्" इति॥ २८

२८। तपस्याकाले विशीर्णतरुपर्णभक्षणमपि तस्या अरुचिरजायत इति हेतोः मुनयस्ताम् अपर्णां कथयन्ति। तयेति अनुक्ते कर्त्तरि तृतीया। अपर्णा इति इत्यव्यययोगे प्रथमेति भावः।

मृणालिकापेलवमेवमादिभि-
र्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम्।

तपः शरीरैः कठिनैरुपार्जितं
तपस्विनां दूरमधश्चकार सा ॥ २९

अन्वयः। मृणालिकापेलवं स्वम् अङ्गम् एवमादिभिः व्रतैः अहर्निशं ग्लपयन्ती सा कठिनैः शरीरैः उपार्ज्जितं तपस्विनां तपः दूरम् अधश्चकार ॥ २९

मृणालिकेति। मृणालिकापेलवं पद्मिनीकन्दकोमलं स्वं स्वकीयम् अङ्गं शरीरम् एवम् उक्तप्रकार-तोयाग्निमध्यवासव्रतम् आदिः येषां तैः व्रतैः, अहश्च निशा च अहर्निशम्। समाहारे द्वन्द्वैकवद्भावः। ‚अत्यन्तसंयोगे द्वितीया। ग्लपयन्ती कर्शयन्ती सा पार्वती। कठिनैः क्लेशसहैरित्यर्थः। शरीरैः उपार्जितं सम्पादितं तपस्विनाम् ऋषीणां तपः दूरम् अत्यन्तम् अधश्चकार तिरश्चकार अतिशिश्ये इत्यर्थः। तपस्विभिः अपि एवं तपः कर्त्तुं न शक्यत इति तात्पर्य्यार्थः ॥ २९

२९। व्रतैस्तृतीया करणे। मृणालिकापेलवं स्वाङ्गं तपःक्लेशेन ग्लपयित्वा तपस्विनां तपोयशो जहारेति भावः।

अथाजिनाषाढ़धरः प्रगल्भवाक्
ज्वलन्निव ब्रह्ममयेन तेजसा।
विवेश कश्चिज्जटिलस्तपोवनं
शरीरबद्धः प्रथमाश्रमो यथा ॥ ३०

अन्वयः। अथ अजिनाषाढ़धरः प्रगल्भवाक् ब्रह्ममयेन तेजसा ज्वलन्निव कश्चित् जटिलः शरीरबद्धः प्रथमाश्रमो यथा तपोवनं विवेश ॥ ३०

अथेति। अथ अनन्तरम् अजिनम् कृष्णमृगत्वक् आषाढ़ः प्रयोजनमस्येति आषाढ़ः पालाशदण्डः। "पालाशदण्ड आषाढ़" इत्यमरः। "विशाखाषाढ़ादण् मन्थदण्डयोः" (५, १, ११०पा०) इति अण्प्रत्ययः। तयोः धरः तथोक्तः प्रगल्भवाक् प्रौढ़वचनः ब्रह्ममयेन वैदिकेन तेजसा ब्रह्मवर्च्चसेन इत्यर्थः। ज्वलन्निव स्थितः। इवशब्दो निर्द्धारणार्थः। कश्चित् अनिर्दिष्टः जटिलः, जटावान् ब्रह्मचारीति शेषः। ( ५, २, १०० पा० ) पिच्छादित्वादिल्लच्प्रत्ययः। शरीरबद्धः बद्धशरीरः शरीरवान् इत्यर्थः। "वाहिताग्न्या-

दिषु" ( २, २, ३७ पा० ) पाठात् साधुः। प्रथमाश्रमः यथा ब्रह्मचर्य्याश्रम इव। यथाशब्द इवार्थे। तपोवनं देव्या इति शेषः, विवेश प्रविष्टवान्॥ ३०

३०। तेजसा उपलक्षणे इत्तौ वा तृतीया। साम्प्रतं देव्याः तपस्यया उत्कण्ठितः स शिवः छद्मवेशेन तां परीक्षितुमवाजगाम इति शेषः।

तमातिथेयी बहुमानपूर्वया
सपर्य्यया प्रत्युदियाय पार्वती।
भवन्ति साम्येऽपि निविष्टचेतसां
वपुर्विशेषेष्वतिगौरवाः क्रियाः॥ ३१

अन्वयः। आतिथेयी पार्वती बहुमानपूर्व्वया सपर्य्यया तं प्रत्युदियाय, साम्ये सत्यपि निविष्टचेतसां वपुर्विशेषेषु अतिगौरवाः क्रियाः भवन्ति॥ ३१

तमिति। अतिथिषु साध्वी आतिथेयी। "पथ्यतिथि" इत्यादिना ( ४, ४, १०४ पा० ) ढञ्प्रत्ययः। "टिड्ढाणञि"त्यादिना ( ४, १, १५ पा० ) ङीप्। पार्वती तं ब्रह्मचारिणं बहुमानपूर्वया बहुमानः पूर्वो यस्यास्तया गौरवपूर्वया इत्यर्थः सपर्य्यया अर्चया। सपर्य्यार्च्चार्हणाः समाः" इत्यमरः। प्रत्युदियाय प्रत्युज्जगाम। कथं समानेऽपि तस्याः तादृशो प्रतिपत्तिः अत आह। साम्ये सति अपि निविष्टचेतसां स्थिरचित्तानां वपुर्विशेषेषु शरीरविशेषेषु अतिशयितं गौरवं यासु ताः अतिगौरवाः अतिगौरवसहिताः क्रियाः चेष्टाः भवन्ति, प्रवर्त्तन्ते इत्यर्थः। साधवो न साम्याभिनिवेशिन इति भावः॥ ३१

३१। सपर्य्यया तृतीया करणे। सा आतिथ्येन ब्रह्मचारिणं सत्कर्तुं यते। आतिथ्यक्रिया व्यक्तिविशेषेषु विविधा भवन्तीति भावः।

विधिप्रयुक्तां परिगृह्य सत्क्रियां
परिश्रमं नाम विनीय च क्षणम्।
उमां स पश्यन् ऋजुनैव चक्षुषा
प्रचक्रमे वक्तुमनुज्झितक्रमः॥ ३२

अन्वयः । सः विधिप्रयुक्तां सत्क्रियां परिगृह्य क्षणं परिश्रमं विनीय च नाम उमाम् ऋजुनैव चक्षुषा पश्यन् अनुज्झितक्रमः सन् वक्तुं प्रचक्रमे ॥ ३२

विधेति । सः ब्रह्मचारी विधिना प्रयुक्ताम् अनुष्ठितां सत्क्रियां पूजां परिगृह्य स्वीकृत्य क्षणं परिश्रमं विश्रामञ्च विनीय नाम । नामेति अपरमार्थे । अथ उमाम् ऋजुनैव विलासरहितेनैव चक्षुषा पश्यन् अनुज्झितक्रमः अत्यक्तोचितपारिपाटीकः सन् वक्तुं प्रचक्रमे प्रारेभे ॥ ३२

३२ । चक्षुषा तृतीया करणे । प्रचक्रमे । "प्रोपाभ्यामारम्भे" इत्यात्मनेपदम् । साम्प्रतं ब्रह्मचारी आतिथ्यं स्वीकृत्य तां वक्तुम् आरेभे इति भावः ।

अपि क्रियार्थं सुलभं समित्कुशं
जलान्यपि स्नानविधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्त्तसे
शरीरमाद्यं खलु धर्म्मसाधनम् ॥ ३३

अन्वयः । क्रियार्थं समित्कुशं सुलभम् अपि ? जलानि अपि ते स्नानविधिक्षमाणि ? स्वशक्त्या तपसि प्रवर्त्तसे अपि ? शरीरम् आद्यं धर्म्मसाधनं खलु ॥ ३३

अपीति । अत्र अपिशब्दः प्रश्ने । क्रियार्थं होमादिकर्मानुष्ठानार्थं समिधश्च कुशाश्च समित्कुशम् । "जातिरप्राणिनाम्" इति (२, ४, पा०) द्वन्द्वैकवद्भावः । सुलभमपि ? सुलभं कच्चित् ? जलानि ते तव स्नानविधिक्षमाणि स्नानक्रियायोग्यानि अपि कच्चित् ? किञ्च स्वशक्त्या निजसामर्थ्यानुसारेण तपसि प्रवर्त्तसे अपि ? देहम् अपीडयित्वा तपश्चरसि कच्चित् इत्यर्थः । युक्तञ्च नाम एतत् । खलु यस्मात् शरीरम् आद्यं धर्म्मसाधनम् । धर्म्मस्तु कायेन वाचा बुद्ध्या धनादिना च बहुभिः साध्यते तेषु च वपुः एव मुख्यं साधनं, सति देहे धर्मार्थकाममोक्षलक्षणाः चतुर्वर्गाः साध्यन्ते । अतएव "सततमात्मानमेव गोपयीत" इति श्रुतिः ॥ ३३

३३ । स्वशक्त्या तृतीया प्रकृत्यादित्वात् । तपस्विनां तपोयोग्यानां वस्तूनां सुलभासुलभ प्रश्नः कर्त्तव्यः, तेषां सुलभत्वेन तपस्विनां सुखम् अन्यथा न इति भावः ।

अपि त्वदावर्जितवारिसम्भृतं
प्रवालमासामनुबध्नि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते
तुलां यदारोहति दन्तवाससा ॥ ३४

अन्वयः । त्वदावर्जितवारिसम्भृतम् आसां वीरुधां प्रवालम् अनुबध्नि अपि ? यत् चिरोज्झितालक्तकपाटलेन ते दन्तवाससा तुलाम् आरोहति ॥ ३४

अपि त्वदेति । त्वया आवर्जितेन सिक्तेन वारिणा सम्भृतं जनितम् आसां वीरुधां लतानां प्रवालं पल्लवम् अनुबध्यपि ? अनुस्यूतं किम् ? यत् प्रवालं चिरोज्झितः चिरकालत्यक्तः लाक्षारागो येन तत् तथापि पाटलं स्वभावरक्तमित्यर्थः, तेन चिरोज्झितालक्तकपाटलेन ते तव दन्तवाससा अधरेण । "ओष्ठाधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः । तुलां साम्यम् आरोहति गच्छति इत्यर्थः । तत्र तुलाशब्दस्य सादृश्यवाचित्वात् तद्योगेऽपि "तुल्यार्थैः अतुलोपमाभ्यामि"ति (२, ३, ७२ पा०) न तृतीयाप्रतिषेधः, तत्र सूत्रे सदृशवाचिन एव ग्रहणादिति ॥ ३४

३४ । दन्तवाससा तुलाशब्दयोगे तृतीया । तपस्यया अङ्गप्रसाधनपरिहारादपि स्वभावसुन्दरत्वात् नवजातपल्लवेन सह तस्या ओष्ठाधरस्य साम्यं नित्यमस्तीति भावः ।

अपि प्रसन्नं हरिणेषु ते मनः
करस्थदर्भप्रणयापहारिषु ।
य उत्पलाक्षि प्रचलैर्विलोचनै-
स्तवाक्षिसादृश्यमिव प्रयुञ्जते ॥ ३५

अन्वयः । करस्थदर्भप्रणयापहारिषु हरिणेषु ते मनः प्रसन्नम् अपि ? हे उत्पलाक्षि ! ये प्रचलैः विलोचनैः तव अक्षिसादृश्यं प्रयुञ्जते इव ॥ ३५

अपीति । करस्थान् दर्भान् प्रणयेन स्नेहेन अपहरन्ति इति ते तथोक्तेषु सापराधेषु इति भावः । "करस्थदर्भप्रणयापराधिषु" इति पाठे दर्भाणां प्रणयेन प्रार्थनया अपराधिषु हरिणेषु विषये

ते मनः प्रसन्नमपि ? न क्षुभितं किम् ? सापराधेषु अपि न कोपि-तव्यं तपस्विभिः इति भावः। हे उत्पलाक्षि ! ये हरिणाः प्रचलैः चञ्चलैः विलोचनैः नेत्रैः तव अक्षिसादृश्यं प्रयुञ्जते इव अभिनयन्तीव। प्रसन्नत्वात् मृगनेत्राणि त्वन्नयनैः साम्यमुपयान्तीति भावः। उत्पलक्षेपचलैः इति पाठान्तरे उत्पलकम्पचलैः "भावानयने द्रव्यानयनम्" इति न्यायेन क्षिप्यमाणोत्पलचलैः इत्यर्थः॥ ३५

३५। विलोचनैः सादृश्यशब्दयोगे तृतीया। करस्थान् दर्भान् भक्षयतामतएवापराधिनां तेषां हरिणानां सा प्रसीदति, यतः तपस्विनी सापराधेभ्यः न कुप्यति, तस्याश्चञ्चलविलोचनैः सादृश्यं ते अभिनयन्ति, अतस्तेषां प्रसीदतीति भावः।

यदुच्यते पार्वति ! पापवृत्तये
न रूपमित्यव्यभिचारि तद्वचः।
तथाहि ते शीलमुदारदर्शने !
तपस्विनामप्युपदेशतां गतम्॥ ३६

अन्वयः। हे पार्वति ! रूपं पापवृत्तये न इति यत् उच्यते तत् वचः अव्यभिचारि, तथाहि हे उदारदर्शने ! ते शीलं तपस्विनामपि उपदेशतां गतम्॥ ३६

यदिति। हे पार्वति ! रूपं सौम्याकृतिः पापवृत्तये पापाचरणाय न भवतीति यदुच्यते। लोकैरिति शेषः। तद्वचः न व्यभिचरति न स्खलतीति अव्यभिचारि सत्यम्। "यत्राकृतिस्तत्र गुणाः" "न सुरूपाः पापसमाचारा भवन्ति" इत्यादयो लोकवादा न विसंवादमासादयन्ति इत्यर्थः। किमिति ज्ञायते—तथाहि हे उदारदर्शने ! आयताक्षि ! सुरूपे इत्यर्थः। अथवा उन्नतज्ञाने ! विवेकवतीत्यर्थः। ते तव शीलं सद्वृत्तम्। "शीलं स्वभावे सद्वृत्ते" इत्यमरः। तपस्विनामपि उपदिश्यते अनेनेति उपदेशः प्रवर्त्तकं प्रमाणं तत्ताम् उपदेशतां गतं प्राप्तम्। मुनयोऽपि त्वां वीक्ष्य स्ववृत्ते प्रवर्त्तन्ते इति भावः॥ ३६

३६। पापवृत्तये चतुर्थी निमित्तार्थे। पर्व्वतपुत्रीति चित्तकाठिन्येन पापाचारशङ्का न कर्त्तव्या। विवेकिनां शीलस्योत्कृष्टत्वात् सर्व्वैः तस्याः उपदेशस्य ग्रहणमुचितम्।

विकीर्णसप्तर्षिबलिप्रहासिभि-
स्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।
यथा त्वदीयैश्चरितैरनाविलै-
र्महीधरः पावित एष सान्वयः ॥ ३७

अन्वयः । एष महीधरः विकीर्णसप्तर्षिबलिप्रहासिभिः दिवः च्युतैः गाङ्गैः सलिलैः तथा न पावितः, अनाविलैः त्वदीयैश्चरितैः यथा सान्वयः पावितः ॥ ३७

विकीर्णेति । एषः महीधरः हिमवान् सप्त च ते ऋषयश्च सप्तर्षयः । "दिक्सङ्ख्ये संज्ञायाम् (२, १, ५० पा०) इति समासः । विकीर्णैः पर्य्यस्तैः सप्तर्षीणां सम्बन्धिभिः बलिभिः पुष्पोपहारैः प्रहसन्ति ये तथोक्तैः दिवः अन्तरीक्षात् च्युतैः गाङ्गैः सलिलैः तथा न पावितः । अनाविलैः अकलुषैः त्वदीयैः चरितैः यथा सान्वयः सपुत्रपौत्रः पावितः पवित्रोकृतः ॥ ३७

३७ । सप्तर्षिदत्तबलिपुष्पधारणादधिकपवित्रया गङ्गया हिमवान् आत्मानं न तथा पवित्र मन्यते, यथा त्वया स मन्यते एतेन गङ्गायां तवाधिक्यमिति व्यज्यते । सलिलैः तृतीया करणे ।

अनेन धर्म्मः सविशेषमद्य मे
त्रिवर्गसारः प्रतिभाति भाविनि !
त्वया मनोनिर्विषयार्थकामया
यदेक एव प्रतिगृह्य सेव्यते ॥ ३८

अन्वयः । हे भाविनि ! अनेन धर्म्मः सविशेषं त्रिवर्गसारः अद्य मे प्रतिभाति, यत् मनोनिर्विषयार्थकामया त्वया एकः धर्म्म एव प्रतिगृह्य सेव्यते ॥ ३८

अनेनेति । हे भाविनि ! प्रशस्ताभिप्राये ! अनेन कारणेन धर्म्मः सविशेषं सातिशयम अद्य मे त्रयाणां धर्म्मकामार्थानां वर्गः त्रिवर्गः । "त्रिवर्गो धर्म्मकामार्थैश्चतुर्वर्गः समोक्षकैः" इत्यमरः । तत्र सारः श्रेष्ठः प्रतिभाति । यत् यस्मात् कारणात् मनसो निर्विषयौ अर्थकामौ यस्याः तया त्वया एकः धर्म्म एव प्रतिगृह्य स्वीकृत्य

सेव्यते। यत्त्वया अर्थकामौ विहाय धर्म्म एव अवलम्बितः। अतः सर्व्वेषां नः स श्रेयान् इति प्रतिपद्यत इत्यर्थः॥ ३८

३८। त्वया अनुक्ते कर्त्तरि तृतीया। अनेन हेतौ तृतीया। यतस्त्वया अर्थकामौ विहाय एक एव धर्म्मः सेव्यते, ततः मया धर्म्मार्थकामानां धर्म्म एव श्रेष्ठः अनुमीयते। विचारः। ननु शिवो मे भर्त्ता भविष्यतीति या साम्प्रतं तपस्यति तर्हि कथं तस्याः कामस्य परिहारो युज्यते? सत्यम्, धर्म्मार्थं तस्याः पतिकामो न तु सुखाय, पतिं विना स्त्रीणां धर्म्माचरणासम्भवादिति भावः।

प्रयुक्तसत्कारविशेषमात्मना
न मां परं सम्प्रतिपत्तुमर्हसि।
यतः सतां सन्नतगात्रि! सङ्गतं
मनीषिभिः साप्तपदीनमुच्यते॥ ३९

अन्वयः। आत्मना प्रयुक्तसत्कारविशेषं मां परं सम्प्रतिपत्तुं नार्हसि, हे सन्नतगात्रि! यतः मनीषिभिः सतां सङ्गतं साप्तपदीनम् उच्यते॥ ३९

सम्प्रति मनोरथं जिज्ञासुः प्रस्तौति,—प्रयुक्तेति। आत्मना त्वया प्रयुक्तः कृतः सत्कारविशेषः पूजातिशयो यस्य तं मां परम् अन्यं सम्प्रतिपत्तुम् अवगन्तुं न अर्हसि। हे सन्नतगात्रि! सन्नताङ्गि! "अङ्गगात्रकण्ठेभ्यः" इति (४, १, ५५ पा० वा०) वक्तव्यात् ङीप्। यतः कारणात् मनस ईषिभिः मनीषिभिः विद्वद्भिः। शकन्ध्वादित्वात् साधुः। सतां सङ्गतं सख्यं सप्तभिः पदैः आपद्यत इति साप्तपदीनं सप्तपदोच्चारणसाध्यम् उच्यते। तच्च आवयो त्वत्कृतसत्कारप्रयोगादेव सिद्धमित्यर्थः। "साप्तपदीनं सख्यमि"ति (५, २, २२ पा०) निपातनात् साधुः॥ ३९

३९। आत्मना तृतीया अनुक्ते कर्त्तरि। यतः हेतौ पञ्चमी। सन्नतं गात्रं यस्याः तस्याः सम्बोधने। सं सम्यक् नतम् अवनत पूर्णयौवनेन स्तनभारादिति। मनीषिभिः अनुक्ते कर्त्तरि तृतीया।

अतोऽत्र किञ्चिद्भवतीं बहुक्षमां
द्विजातिभावादुपपन्नचापलः।

अयं जनः प्रष्टुमनास्तपोधने !
न चेद्रहस्यं प्रतिवक्तुमर्हसि ॥४०

अन्वयः । हे तपोधने ! अतः अत्र बहुक्षमां भवतीं द्विजातिभावात् उपपन्नचापलः अयं जनः किञ्चित् प्रष्टुमनाः रहस्यं न चेत्, प्रतिवक्तुम् अर्हसि ॥ ४०

अत इति । हे तपोधने ! अतः सख्याद्धेतोः अत्र प्रस्तावे बहु-क्षमां बह्वपराधसहां यद्वा क्षमावतीं भवतीं त्वां द्विजातिभावात् ब्राह्मणत्वात् उपपन्नचापलः सुलभधार्ष्ट्यः अयं जनः । स्वयमित्यर्थः । किञ्चित्प्रष्टुं मनो यस्य सः किञ्चित्प्रष्टुमनाः प्रष्टुकामः । "तुम् काम-मनसोः अपी"ति ( ६, ३, १०९ पा० वा० ) मकारलोपः । रहसि भवं रहस्यं गोप्यं न चेत् प्रतिवक्तुम् अर्हसि ॥ ४०

४० । अतः पञ्चमी हेत्वर्थे । द्विजातिभावात् पञ्चमी हेतौ । रूपयौवनव्यवहारं न परीक्ष्य साम्प्रतं शालीनतां परीक्षितुमीहते ।

कुले प्रसूतिः प्रथमस्य वेधसः
त्रिलोकसौन्दर्य्यमिवोदितं वपुः ।
अमृग्यमैश्वर्य्यसुखं नवं वयः
तपःफलं स्यात् किमतः परं वद ॥४१

अन्वयः । प्रथमस्य वेधसः कुले प्रसूतिः, वपुः त्रिलोकसौन्दर्य्यमिव उदितम्, ऐश्वर्य्य-सुखम् अमृग्यम्, वयः नवम्, अतः परं किं तपःफलं स्यात् वद ॥ ४१

प्रष्टव्यमाह,—कुल इति । प्रथमस्य वेधसः हिरण्यगर्भस्य कुले अन्ववाये प्रसूतिः उत्पत्तिः । "यज्ञार्थं हि मया सृष्टो हिमवानच-लेश्वरः" इति ब्रह्मपुराणवचनात् । वपुः शरीरं त्रयाणां लोकानां सौन्दर्य्यमिव उदितम् एकत्र समाहृतम् । ऐश्वर्य्यसुखं सम्पत्सुखम् अमृग्यम् अन्वेषणीयं न भवति, किन्तु सिद्धमेवेत्यर्थः । वयः नव यौवनमित्यर्थः । अतःपरम् अतोऽन्यत् किं तपःफलं स्यात् ? वद । अस्ति चेदिति शेषः, न किञ्चित् अस्तीत्यर्थः ॥ ४१

४१ । अतः परशब्दयोगे पञ्चमी । तपसया लोकाः यत् प्राप्नुवन्ति तत् सर्वं त्वय्यस्ति कथं ते इयं सुदुष्करा तपस्या ? इत्ययं मे प्रश्नः चेत् ते रहस्यं न स्यात् तर्हि प्रतिवक्तव्यः ।

भवत्यनिष्टादपि नाम दुःसहात्
मनस्विनीनां प्रतिपत्तिरीदृशी।
विचारमार्गप्रहितेन चेतसा
न दृश्यते तच्च कृशोदरि! त्वयि ॥४२

अन्वयः। दुःसहात् अनिष्टादपि मनस्विनीनाम् ईदृशी प्रतिपत्तिः भवति नाम, हे कृशोदरि! विचारमार्गप्रहितेन चेतसा तच्च त्वयि न दृश्यते ॥ ४२

भवतीति। दुःसहात् सोढुमशक्यात् अनिष्टात् भर्त्रादि कृतादपि मनस्विनीनां धीरस्त्रीणाम् ईदृशी तपश्चरणलक्षणा प्रतिपत्ति प्रवृत्तिः। "प्रतिपत्तिस्तु गौरवे। प्राप्तौ प्रवृत्तौ प्रागल्भ्ये" इति केशवः। भवति नाम। नामेति सम्भावनायाम्। विचारमार्गे प्रहितेन चेतसा चित्तेन तत् अनिष्टं च। हे कृशोदरि! त्वयि न दृश्यते। विचार्य्यमाणे तदपि नास्ति असम्भावितत्वादित्यर्थः॥ ४२

४२। अनिष्टात् इती पञ्चमी। चेतसा करणे वा प्रकृत्यादिभ्यः तृतीया। भर्तृकृतापमानात् ते इयं तपस्या न मन्यते, यतस्त्वं मनस्विनी, मनस्विनीनां तादृशी प्रवृत्तिर्न दृश्यते।

अलभ्यशोकाभिभवेयमाकृतिः
विमानना सुभ्रु! कुतः पितुर्गृहे।
पराभिमर्शो न तवास्ति कः करं
प्रसारयेत् पन्नगरत्नसूचये ॥४३

अन्वयः। हे सुभ्रु! इयम् आकृतिः अलभ्यशोकाभिभवा, पितुः गृहे विमानना कुतः? पराभिमर्शः तव नास्ति, पन्नगरत्नसूचये कः करं प्रसारयेत् ॥ ४३

अनिष्टाभावमेव प्रपञ्चयति,—अलभ्येति। हे सुभ्रु! इयं त्वदीया आकृतिः मूर्त्तिः अलभ्यः लब्धुमनर्हः शोकेन भर्त्राद्यवमानजेन दुःखेन अभिभवः तिरस्कारो यस्याः सा तथोक्ता, दृश्यत इति शेषः। असम्भावितञ्च अयमर्थ इत्याह—पितुर्गृहे विमानना अवमानः कुतः? न सम्भाव्यत एवेत्यर्थः। न च अपि अन्यस्माद्भावी-त्याह। पराभिमर्शः परधर्षणन्तु तव नास्ति। पन्नगरत्नसूचये

फणिशिरोमणिशलाकां ग्रहीतुम् इत्यर्थः। "क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः" (२, ३, १४ पा०) इति चतुर्थी। करं हस्तं कः प्रसारयेत्? "सुभ्रु!" इत्यत्र भ्रूशब्दस्योवङ्स्थानीयत्वात् नेयङुवङ्स्थानावस्त्रीति (१, ४, ४ पा०) नदीसंज्ञाप्रतिषेधात् "अम्बार्थनद्योर्ह्रस्वः (७, ३, १०७ पा०) इति ह्रस्वत्वं नास्ति। तेन ह्रस्वः प्रामादिक इति केचित्। अन्ये तु एतस्मादेव ज्ञापकात् क्वचिदूकारान्तस्याप्यूङन्तत्वात् नदीत्वे ह्रस्वत्वमित्याहुः। "अप्राणिजातेश्च अरज्ज्वादीनाम्" (५, २, ६६ पा० वा०) इत्यत्र "अलाबूः" "कर्कन्धू"रित्यूकारान्तादप्यूङ्प्रत्ययमुदाजहार भाष्यकारः। अतएव आह वामनः "ऊकारादप्यूङ् प्रकृतेरि"ति। "सुभ्रु! कुतस्तातगृहेऽवमाननमि"ति पाठान्तरकरणन्तु साध्वसमेव उक्तोपपत्तिसम्भवात्। अन्यत्रापि "सुभ्रु! त्वं कुपितत्यपास्तमशनं त्यक्ता कथा योषिताम्" इत्यादिप्रयोगदर्शनात् वंशस्थवृत्ते पादादौ जगणभङ्गप्रसङ्गाच्चेत्यलं गोष्ठीभिः॥ ४३

४३। तत्र सौन्दर्यविमुग्धस्य पत्युः तिरस्कारेण तपस्येयं न सम्भवेत। पितुर्गृहे ते अनादरस्यापि असम्भवः। यथा सर्प-शिरोमणिग्रहणाय मृत्युभयात् कोऽपि करं न प्रसारयेत्, तथा परपुरुषधर्षणादिदं ते तपः न सम्भवेत्। सूचये चतुर्थी तुमर्थे।

किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्द्धकशोभि वल्कलम्।
वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते॥४४

अन्वयः। (हे गौरि!) किमिति यौवने त्वया आभरणानि अपास्य वार्द्धकशोभि वल्कलं धृतम्? प्रदोषे स्फुटचन्द्रतारका विभावरी अरुणाय कल्पते यदि, वद?॥ ४४

<u>किमिति।</u> हे गौरि! किमिति? केन हेतुना यौवने त्वया आभरणानि अपास्य विहाय वृद्धस्य भावो वार्द्धकम् (५, १, १२२ पा०) मनोज्ञादित्वाद्वुञ्प्रत्ययः। "वार्द्धकं वृद्धसङ्घाते वृद्धत्वे वृद्धकर्म्मणि" इति विश्वः। तत्र शोभत इति वार्द्धकशोभि वल्कलं धृतम्। प्रदोषे रजनीमुखे स्फुटाः प्रकटाश्चन्द्रः तारकाश्च यस्याः

सा स्फुटचन्द्रतारका विभावरी रात्रिः अरुणाय सूर्य्यसुताय कल्पते यदि ? अरुणं गन्तु कल्पते किम् ? वद ब्रूहि । "क्रियार्थोपपदस्य" इत्यादिना ( २, ३, १४ पा० ) चतुर्थी । दीप्यमानशशाङ्कतारके प्रदोषे यद्यरुण उदेति, ततो विभूषणापहारिण तव वल्कलधारणं सङ्गच्छते इति भावः ॥ ४४ ॥

४४ । अरुणाय क्रियायोगे वा क्वापि सम्पद्यमाने चतुर्थी । स्फुटचन्द्रतारका विभावरी सूर्य्यपुत्राय कल्पते यदि, तर्हि तवेदं रूपं यौवनञ्च वाईकाहत्तिमनलम्बितुं युज्यते इति भावः ।

दिवं यदि प्रार्थयसे वृथा श्रमः
पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना
न रत्नमन्विष्यति मृग्यते हि तत् ॥४५

अन्वयः । यदि दिवं प्रार्थयसे श्रमो वृथा, तव पितुः प्रदेशाः देवभूमयः, अथ उपयन्तारं ( यदि प्रार्थयसे ) समाधिना अलम्, तथाहि रत्नं न अन्विष्यति, तत् हि मृग्यते ॥४५

तपःप्रयोजनं निराकर्त्तुमाह,—दिवमिति । दिवं स्वर्गं प्रार्थयसे कामयसे यदि तर्हि श्रमः तपश्चरणप्रयासः वृथा निष्फलः । यदि स्वर्गार्थं तप्यसे ततः श्रमं मा कार्षीः । कुतः ? तव पितुः हिमवतः प्रदेशाः देवभूमयः स्वर्गपदार्थाः तत्रत्या इत्यर्थः । अथ उपयान्तारम् वरं प्रार्थयसे, तर्हि समाधिना तपसा अलम् ? न कर्त्तव्यमित्यर्थः । निषेध्यस्य निषेधं प्रति करणत्वात् तृतीया । तथाहि रत्नं कर्त्तृ न अन्विष्यति न मृगयते, ग्रहीतारम् इति शेषः । किन्तु तद्रत्नं मृग्यते ग्रहीतृभिः इति शेषः । न हि वरार्थं त्वया तपसि वर्त्तितव्यं किन्तु तेनैव त्वदर्थमिति भावः ॥ ४५

४५ । अमरावतीलाभाय चेदियं ते तपस्या तर्हि ते पितुः राजधानी तदधिका । अभिलषितवरलाय चेत्, तर्हि तत् निष्प्रयोजनं, रूपेणगुणेन च त्वया गुणवान् रूपवांश्च पतिर्लप्स्यते इत्यहं मन्ये ।

निवेदितं निश्वसितेन सोष्मणा
मनस्तु मे संशयमेव गाहते ।

न दृश्यते प्रार्थयितव्य एव ते
भविष्यति प्रार्थितदुर्लभः कथम् ॥४६

अन्वयः। सोष्मणा निश्वसितेन निवेदितम्, तथापि मे मनस्तु संशयमेव गाहते, कुतः? ते प्रार्थयितव्य एव न दृश्यते, प्रार्थितदुर्लभः कथं भविष्यति? ॥ ४६

वरवाचकाचरश्रवणानन्तरमेव देव्या उष्णोच्छ्वासमालक्ष्य प्रश्नेषु च प्रत्युत्तरमनुपलभ्य स्वयमेवाशङ्क्याह,—निवेदितमिति। सोष्मणा निश्वसितेन निश्वासवायुना निवेदितं चिन्तानुभावेन उष्णोच्छ्वासेन ते वरार्थित्वं सूचितमित्यर्थः। तर्हि किं प्रश्नव्यसनेन इत्याह—मन इति। मनस्तु तथापि मे संशयमेव गाहते प्राप्नोति। कुतः? ते तव। "कृत्यानां, कर्त्तरि वा" ( २, ३, ७१ पा० ) इति षष्ठी। प्रार्थयितव्यः प्रार्थयितुमर्हः एव न दृश्यते। प्रार्थितदुर्लभः प्रार्थितो यो दुर्लभः सः कथं भविष्यति? नास्त्येव इत्यर्थः। ॥ ४६

४६। निश्वसितेन अनुक्ते कर्तरि तृतीया। सर्व्वसम्पन्नायाः ते अभिलषितवस्तुनोऽभावात् प्रतिलाभाय तवेदं इत्यहं सन्देह्मि।

अहो स्थिरः कोऽपि तवेप्सितो युवा
चिराय कर्णोत्पलशून्यतां गते।
उपेक्षते यः श्लथलम्बिनीर्जटाः
कपोलदेशे कलमाग्रपिङ्गलाः ॥४७

अन्वयः। अहो तव ईप्सितः कोऽपि युवा स्थिरः यः चिराय कर्णोत्पलशून्यतां गते कपोलदेशे श्लथलम्बिनीः कलमाग्रपिङ्गलाः जटाः उपेक्षते ॥ ४७

अथ पतिप्रार्थनामेव सिद्धवत् कृत्वा आह,—अहो इति। अहो चित्रं तव ईप्सितः आप्तुमिष्टः युवा कोऽपि स्थिरः कठिनः वर्त्तते इति शेषः। कुतः? यः युवा चिराय चिरात्प्रभृति। कर्णोत्पलशून्यतां गते प्राप्ते कपोलदेशे गण्डस्थले श्लथाः शिथिलबन्धनाः अतएव लम्बिन्यः ताः श्लथलम्बिनीः कलमाः शालिविशेषाः तेषाम् अग्राणि तद्वत् पिङ्गलाः जटाः उपेक्षते। यः त्वाम् ईदृशीं दृष्ट्वा न व्यथते, स नूनं वज्रहृदय इत्यर्थः। ॥ ४७

४७। पतित्वेन स्वीकरिष्यमाणः युवा यतस्तवेदृशीं दशामुपेक्षते द्रष्टुं शक्नोति च ततः मन्ये स दृढ़हृदयो भवति।

मुनिव्रतैस्त्वामतिमात्रकर्शितां
दिवाकराप्लुष्टविभूषणास्पदाम् ।
शशाङ्कलेखामिव पश्यतो दिवा
सचेतसः कस्य मनो न दूयते ॥४८

अन्वयः। मुनिव्रतैः अतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम् अतएव दिवा शशाङ्कलेखामिव स्थितां त्वां पश्यतः सचेतसः कस्य मनः न दूयते ॥ ४८

मुनिव्रतैरिति। मुनिव्रतैः चान्द्रायणादिभिः अतिमात्रम् अत्यन्तं कर्शितां कृशीकृतां दिवाकरेण सूर्य्येण आप्लुष्टानि दग्धानि वातातपसंस्पर्शात् मृदुत्वाच्च श्यामीकृतानि विभूषणास्पदानि भूषण-स्थानानि यस्यास्तां तथोक्ताम्। अतएव दिवा अहनि शशाङ्करेखामिव स्थितां त्वां पश्यतः सचेतसः जीवतः कस्य पुंसः मनः न दूयते न परितप्यते। अपि तु सर्वस्य एवेत्यर्थः ॥ ४८

४८। सूर्य्यकरदग्धां चन्द्रकलामिव तपःक्लिष्टां त्वां दृष्ट्वा जीवतो यस्य मनो न दूयते स पाषाणः। एतेन तदीप्सितस्य युनो नैष्ठुर्य्यं सूचितम्। एतावान् निष्ठुरचित्तः स युवा त्वया न वरणीय इति भावः।

अवैमि सौभाग्यमदेन वञ्चितं
तव प्रियं यश्चतुरावलोकिनः।
करोति लक्ष्यं चिरमस्य चक्षुषो
न वक्त्रमात्मीयमरालपक्ष्मणः ॥ ४९

अन्वयः। तव प्रियं सौभाग्यमदेन वञ्चितम् अवैमि यः आत्मीयं वक्त्रम् चतुरावलोकिनः अरालपक्ष्मणः अस्य चक्षुषः चिरं लक्ष्यं न करोति ॥ ४९

अवैमीति। तव प्रियं वल्लभं सौभाग्यमदेन सौन्दर्य्यगर्वेण कर्त्रा वञ्चितं विप्रलब्धम् अवैमि वेद्मि। यः प्रियः चतुरं मधुरम् अवलोकत इति चतुरावलोकिनः अरालपक्ष्मणः कुटिलरोम्णः "अरालं वृजिनं जिह्मम्" इत्यमरः। अस्य त्वदीयस्य चक्षुषः आत्मीयं वक्त्रं मुखं चिरं लक्ष्यं विषयं न करोति दृष्टिपथं न गच्छतीत्यर्थः। तदयं गर्वेण हतः निष्फलात्मलाभो जात इति भावः ॥ ४९

४९। सौभाग्यमदेन अनुक्ते कर्त्तरि तृतीया। सौभाग्यमेव मदः (कर्म्मधारयः) तेन। भराले पञ्चमी यस्य स तस्य (बहुव्रीहिः)।

क्रियच्चिरं श्राम्यसि गौरि! विद्यते
ममापि पूर्वाश्रमसञ्चितं तपः।
तदर्द्धभागेन लभस्व काङ्क्षितं
वरं तमिच्छामि च साधु वेदितुम् ॥ ५०

अन्वयः। हे गौरि! कियत् चिरं श्राम्यसि, ममापि पूर्वाश्रमसञ्चितं तपः विद्यते, तदर्द्धभागेन काङ्क्षितं (वरं) लभस्व, तं वरं साधु वेदितुम् इच्छामि ॥ ५०

क्रियदिति। हे गौरि! कियत् किम्प्रमाणकं किमवधिकमित्यर्थः चिरं श्राम्यसि तपस्यसि? "अत्यन्तसंयोगे" (२, ३, ५ सू०) द्वितीया। ममापि पूर्वाश्रमः प्रथमाश्रमः ब्रह्मचर्य्याश्रमः तत्र सञ्चितं सम्पादितं तपः विद्यते। अर्द्धश्चासौ भागश्च तेन तस्य तपसः अर्द्धभागेन एकदेशेन काङ्क्षितम् इष्टं वरम् उपयन्तारं लभस्व। तं वरं साधु सम्यक् वेदितुं ज्ञातुम् इच्छामि। यद्यसौ योग्यो भवति तदा ममापि सम्मतिरिति भावः ॥ ५०

५०। पार्वत्याः अतिकठोरं तपःकष्टं दृष्ट्वा दयापरवशः सन् स जटिलः स्वस्य तपोऽर्द्धभागेन अस्या अभीष्टं साधयितुं यतते, अस्याः अभिलाषावगमनमिष्टमस्येति भावः।

इति प्रविश्याभिहिता द्विजन्मना
मनोगतं सा न शशाक शंसितुम्।
अथो वयस्यां परिपार्श्ववर्त्तिनीं
विवर्त्तितानञ्जननेत्रमैक्षत ॥ ५१

अन्वयः। इति द्विजन्मना प्रविश्य अभिहिता सा मनोगतं शंसितुं न शशाक, अथो परिपार्श्ववर्त्तिनीं वयस्यां विवर्त्तितानञ्जननेत्रम् ऐक्षत ॥ ५१

इतीति। इति इत्थं द्विजन्मना द्विजेन प्रविश्य अन्तर्गत्वा आत्मवत् रहस्यम् उद्भाव्य इत्यर्थः। अभिहिता उक्ता सा पार्वती मनोगतं हृदिस्थं वरं शंसितुं वक्तुं न शशाक समर्था न अभूत्, लज्जयेति शेषः। अथो अनन्तरं परिपार्श्ववर्त्तिनीं वयस्यां सखीं

विवर्त्तितं विचालितम् अनञ्जनं व्रतवशात् वर्जितकज्जलं नेत्रं यस्मिन् कर्म्मणि तत् तथा ऐच्चत। नेत्रसंज्ञया एव प्रत्युत्तरं वाचयाञ्चकार इत्यर्थः ॥ ५१

५१। द्वे जन्मनी यस्येति बहुव्रीहिः। द्विजन्मना अनुक्ते कर्तरि तृतीया।

सखी तदीया तमुवाच वर्णिनं
निबोध साधो तव चेत् कुतूहलम्।
यदर्थमम्भोजमिवोष्णवारणं
कृतं तपःसाधनमेतया वपुः॥ ५२

अन्वयः। तदीया सखी तं वर्णिनम् उवाच हे साधो! तव कुतूहलं चेत् निबोध, यदर्थम् एतया अम्भोजम् उष्णवारणमिव वपुः तपःसाधनं कृतम् ॥ ५२

सखीति। तस्याः पार्वत्याः इयं तदीया सखी वयस्या तम्। वर्णः प्रशस्तिरिति चीरस्वामी। सोऽस्यास्तीति वर्णिनं ब्रह्मचारिणम्। "वर्णाद्ब्रह्मचारिणी" (५, २, १३ पा०) इनिप्रत्ययः। उवाच ब्रूते स्म। किमिति ?। हे साधो! विद्वन्! तव कुतूहलञ्चेत् श्रोतुम् अस्तीति शेषः, तर्हि निबोध अवगच्छ आकर्णय इत्यर्थः। "बुध अवगमन" इति धातोर्भौवादिकाल्लोट्। श्रातव्यं किं? तदाह,—यस्मै लाभाय इदं यदर्थम् "अर्थेन सह नित्यसमासः सर्वलिङ्गता चेति वक्तव्य"मिति (२, १, ३६ पा० स्य) वार्त्तिकनियमात् क्रियाविशेषणम्। एतया पार्वत्या अम्भोजं पद्मम् उष्णवारणम् आतपत्रमिव वपुः शरीरं तपःसाधनं कृतं तपःप्रवृत्तिकारणमुच्यते श्रूयतामित्यर्थः ॥ ५२

५२। एतया अनुक्ते कर्तरि तृतीया। स्त्रीणामियमेव प्रकृतिः यत् ताः सहसा अभिलाषं वक्तुं न शक्नुवन्ति, वाक्चातुर्य्यमवलम्ब्य तमेव प्रकाशयन्ति।

इयं महेन्द्रप्रभृतीनधिश्रियः
चतुर्दिगीशानवमत्य मानिनी।
अरूपहार्य्यं मदनस्य निग्रहात्
पिनाकपाणिं पतिमाप्तुमिच्छति॥ ५३

अन्वयः। मानिनी इयम् अधिश्रियः महेन्द्रप्रभृतीन् चतुर्दिगीशान् अवमत्य मदनस्य निग्रहात् अरूपहार्य्यं पिनाकपाणिं पतिम् आप्तुम् इच्छति ॥ ५३

"दृङ्मनःसङ्गसङ्कल्पो जागरः कृशता रतिः। ह्रीत्यागोन्माद-मूर्च्छान्ता इत्यनङ्गदशा दश" इति। तत्र अस्याः कांश्चिद्दशाः क्रमगमनादृत्येव योजयति, "इयमित्यादिभिः" षड्भिः श्लोकैः। इयमिति। मानिनी इन्द्राणीप्रभृतीरतिशय्य वर्त्तितव्यम् इति अभिमानवती इयं पार्वती अधिश्रियः अधिकैश्वर्य्यान् महेन्द्रप्रभृतीन् इन्द्रादीन् चतसृणां दिशामीशान् इन्द्रवरुणयमकुबेरान्। "तद्धितार्थे"त्यादिना (२, १, ५१ पा०) उत्तरपदसमासः। अवमत्य अवधूय मदनस्य निग्रहात् निबर्हणाद्धेतोः अकामुकत्वात् इत्यर्थः। रूपेण सौन्दर्य्येण हार्य्यः वशीकरणीयो न भवतीति अरूपहार्य्यम्। पिनाकः पाणौ यस्य तं पिनाकपाणिं हरम्। "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत" इति (२, २, ३७ पा०) साधु। पतिम् आप्तुमिच्छति। एतेन सङ्कल्पावस्था सूचिता ॥ ५३

५३। मदनस्य कर्म्मणि षष्ठी। निग्रहात् हेतौ पञ्चमी। अरूपहार्य्यमनेन विशेषणेन शिवस्य महत्वं सूचितम्। मदनस्य निग्रहादित्यनेन धर्म्मार्थमेव पतिलाभो युज्यते न तु कामार्थम्।

असह्यहुङ्कारनिवर्त्तितः पुरा
पुरारिमप्राप्तमुखः शिलीमुखः।
इमां हृदि व्यायतपातमक्षिणो-
द्विशीर्णमूर्त्तेरपि पुष्पधन्वनः ॥ ५४

अन्वयः। पुरा असह्यहुङ्कारनिवर्त्तितः पुरारिम् अप्राप्तमुखः विशीर्णमूर्त्तेरपि पुष्पधन्वनः शिलीमुखः इमां हृदि व्यायतपातम् अक्षिणोत् ॥ ॥ ५४

असह्येति। पुरा पूर्वम् असह्येन सोढुमशक्येन हुङ्कारेण रौद्रेण निवर्त्तितः। अतएव पुरारिं हरम् अप्राप्तमुखः अप्राप्तफलः विशीर्णमूर्त्तेः नष्टशरीरस्य अपि पुष्पधन्वनः कामस्य शिलीमुखः बाणः इमां पार्वतीं हृदि व्यायतः, सुदूरावगाढ़ः इति यावत्। तादृक् पातः प्रहारो यस्मिन् कर्म्मणि तत्तथा अक्षिणोत् अकर्षत्। दग्धदेहस्यापि मार्गणो लग्नः, "मृदुः सर्वत्र बाध्यत" इति भावः।

अनेन "विलखवती शैलसुतापि भावमि"त्यत्रोक्त (३ स० ६८श्लो०) चक्षुःप्रीतिमनःसङ्गाख्यम् अवस्थाद्वयमनन्तरावस्थोपयोगितया अनूद्य कार्श्यावस्था सूचिता ॥ ५४

५४। असह्यः हुङ्कारः कर्मधारयः। तेन निवर्तितः तृतीयातत्पुरुषः। हृदि अवच्छेदे सप्तमी। विशीर्णा मूर्त्तिः यस्य। पुष्पं धनुर्यस्य बहुव्रीहिः।

तदा प्रभृत्युन्मदना पितुर्गृहे
ललाटिकाचन्दनधूसरालका ।
न जातु बाला लभते स्म निर्वृतिं
तुषारसङ्घातशिलातलेष्वपि ॥ ५५

अन्वयः। तदा प्रभृति पितुः गृहे उन्मदना ललाटिकाचन्दनधूसरालका बाला जातु तुषारसङ्घातशिलातलेष्वपि निर्वृतिं न लभते स्म ॥ ५५

तदेति। तदेति छेदः तदा प्रभृति तद् आरभ्य इत्यर्थः। सप्तम्यर्थस्यापि दाप्रत्ययस्य पञ्चम्यर्थे लक्षणा प्रभृतियोगि पञ्चमीनियमात्। पितुर्गृहे उन्मदना उत्कटमन्मथा, ललाटस्य अलङ्कारः ललाटिका तिलकः। "कर्णललाटात् कन् अलङ्कारे" (४, ३, ६५ पा०) इति कन्प्रत्ययः। तस्याः चन्दनेन धूसराः धूसरवर्णा अलकाः चूर्णकुन्तलाः यस्याः सा तथोक्ता बाला पार्वती जातु कदाचिदपि तुषारसङ्घाताः तुषारघनास्त एव शिलाः तासां तलेषु उपरिभागेषु अपि निर्वृतिं सुखं न लभते स्म। एतेन अत्यपरसंज्ञा विषयविद्वेषावस्था द्वादशावस्थापन्ने संज्वरस्य व्यज्यते ॥ ५५

५५। उन्मदना मल्लिनाथेनास्य उत्कटमन्मथेति प्रतिशब्दो दत्तः। तर्हि कथमेतत् सङ्गच्छते। [५३ श्लोके] मदनस्य निग्रहादिति पदं मल्लिनाथेन व्याख्यायते, निवर्त्तणात्, अकामुकत्वात्, तर्हि कथम् उन्मदना सदुक्तिरियमिति भावः।

उपात्तवर्णे चरिते पिनाकिनः
सवाष्पकण्ठस्खलितैः पदैरियम् ।
अनेकशः किन्नरराजकन्यका
वनान्तसङ्गीतसखीररोदयत् ॥ ५६

अन्वयः । पिनाकिनः चरिते उपात्तवर्णे सवाष्पकण्ठस्खलितैः पदैः इयं वनान्तसङ्गीतसखीः किन्नरराजकन्यकाः अनेकशः अरोदयत् ॥ ५६

उपात्तेति । पिनाकिनः शम्भोः चरिते त्रिपुरविजयादिचेष्टिते उपात्तवर्णे प्रारब्धगीतक्रमे । "गीतक्रमे स्तुतौ वेदे वर्णशब्दः प्रयुज्यते" इति हलायुधः । सवाष्पे गद्गदे कण्ठे स्खलितैः विशीर्णैः पदैः सुप्तिङन्तरूपैः करणैः । वनान्ते सङ्गीतेन निमित्तेन सखीः वयस्याः किन्नरराजकन्यकाः अनेकशः बहुशः अरोदयत् अश्रुमोचनमकारयत् । हरचरितगानजनितमदनवेदनाम् एनां वीक्ष्य किन्नर्य्योऽपि रुरुदुरिति भावः । अत्र वर्णस्खलनलक्षणकार्य्योक्त्या पुनः पुनः तत्कारणीभूतमूर्च्छावस्थाप्रादुर्भावो व्यज्यते अन्यथा सखीरोदनानुपपत्तेरिति । द्वादशावस्थापक्षे तु प्रलापावस्था च व्यज्यते । "प्रलापो गुणकीर्त्तनम्" इत्यालङ्कारिकाः ॥ ५६

५६ । पदैस्तृतीया करणे । हरचरितगानश्रवणेन प्रबलमन्मथां मदनस्य दशमावस्थायां स्थितां दृष्ट्वा सर्व्वाः रुरुदुरित्यर्थः ।

त्रिभागशेषासु निशासु च क्षणं
निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकण्ठ ! व्रजसीत्यलक्ष्यवाक्
असत्यकण्ठार्पितबाहुबन्धना ॥ ५७

अन्वयः । किञ्च (सा) त्रिभागशेषासु निशासु क्षणं नेत्रे निमील्य सहसा हे नीलकण्ठ ! क्व व्रजसि इत्यलक्ष्यवाक् तथा असत्यकण्ठार्पितबाहुबन्धना (सती) व्यबुध्यत ॥ ५७

त्रिभागेति । किञ्चेति चार्थः, शिष्यत इति शेषः । कर्म्मणि घञ् । त्रिभ्यो भागेभ्यः शेषासु अवशिष्टासु । 'यद्वा रात्रेः त्रियामत्वेन प्रसिद्धत्वात् तृतीयो भागः त्रिभागः । संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यते । यथा 'शतांशः' 'सहस्रांशः' इति । त्रिभागः शेषः यासां तासु निशासु क्षणं क्षणमात्रं नेत्रे निमील्य मीलयित्वा सहसा सद्यः । हे नीलकण्ठ ! क्व व्रजसि ? कुत्र गच्छसीति अलक्ष्या निर्विषया वाग् वचनं यस्याः सा तथोक्ता । तथा असत्ये मिथ्याभूते कण्ठेऽर्पितं बाहुबन्धनं यस्याः सा तथा सती व्यबुध्यत विबुद्धवती । एतेन जागरोन्मादौ सूचितौ ॥ ५७

५७। स्वप्नेषु दिवाचिन्तितस्य पदार्थस्य इन्द्रियग्राह्यत्वसम्भवात् पार्वत्याः हरासक्त-चित्तायाः सदा तच्चिन्ताकुलत्वात् स्वप्नेऽपि तद्दर्शनं युक्तम् एतेन अस्या उन्मादावस्था सूचिता।

यदा बुधैः सर्वगतस्त्वमुच्यसे
न वेत्सि भावस्थमिमं कथं जनम्।
इति स्वहस्तोल्लिखितश्च मुग्धया
रहस्युपालभ्यत चन्द्रशेखरः॥ ५८

अन्वयः। यदा त्वं बुधैः सर्व्वगतः उच्यसे ( ततः ) भावस्थम् इमं जनं कथं न वेत्सि, मुग्धया ( एतया ) स्वहस्तोल्लिखितः चन्द्रशेखरः रहसि इति उपालभ्यत च॥ ५८

स्वप्नसादृश्यप्रतिकृतिदर्शनतदङ्गस्पृष्टस्पर्शाख्यास्त्वारो विरहिणां विनोदाः। तत्र स्वप्नसन्दर्शनमुक्त्वा प्रतिकृतिदर्शनमाह,—यदेति। यदा यत इत्यर्थः। यदेति हेतौ इत्युक्त्वा गणव्याख्याने अस्य उदाहृतत्वात्। त्वं बुधैः मनीषिभिः सर्वगतः सर्वव्यापीति उच्यसे। तत इत्यध्याहारः। भावे इत्याख्ये तिष्ठतीति भावस्थम्, त्वयि अनुरागिणमित्यर्थः, इमं जनम् इममित्यात्मनिर्देशः। कथं? न वेत्सि न जानासीति मुग्धया मूढ़या। आकाशवत्सर्वगतोपालभ्भ इत्यजानानयेत्यर्थः। तया स्वहस्तेन उल्लिखितः चित्रे लिखितः चन्द्रशेखरः रहसि एकान्ते सखीमात्रसमक्षमित्यर्थः। उपालभ्यत साधिक्षेपमुक्तश्च, उक्तसमुच्चयार्थश्चकारः। यद्यपि रहसीत्युक्तं तथापि सखीसमक्षकरणात् लज्जात्यागो व्यज्यत एव॥ ५८

५८। तया अनुक्ते कर्तरि तृतीया। मदनातुराः कामिनः जनाः आत्मानं विनोदयितुं चतुरो पथः अवलम्बन्ते, तत्र पार्वती प्रतिकृतिदर्शनरूपं तृतीयमुपायमाश्रयत।

यदा च तस्याधिगमे जगत्पते-
रपश्यदन्यं न विधिं विचिन्वती।
तदा सहास्माभिरनुज्ञया गुरो-
रियं प्रपन्ना तपसे तपोवनम्॥ ५९

अन्वयः। इयं यदा च तस्य जगत्पतेः अधिगमे विचिन्वती अन्यं विधिं न अपश्यत् तदा ( इयं ) गुरोः अनुज्ञया अस्माभिः सह तपसे तपोवनं प्रपन्ना॥ ५९

यदेति । जगत्पतेः तस्य ईश्वरस्य अधिगमे प्राप्तौ अन्यं विधिम् उपायं विचिन्वती मृगयमाणा यदा न अपश्यत्, तदा इयम् पार्वती गुरोः पितुः अनुज्ञया अस्माभिः सह तपसे तपश्चरितुं तपोवनं प्रपन्ना प्राप्ता ॥ ५९

५९ । जगत्पतेः कर्म्मणि षष्ठी । अनुज्ञया तृतीया हेतौ । तपसे चतुर्थी निमित्तार्थे । केनाप्युपायेन अलभ्यं वस्तु, तपसा निश्चितमेव लभ्यम् इति निश्चित्य तपःस्थतुम् इयेष ।

द्रुमेषु सख्या कृतजन्मसु स्वयं
फलं तपःसाक्षिषु दृष्टमेष्वपि ।
न च प्ररोहाभिमुखोऽपि दृश्यते
मनोरथोऽस्याः शशिमौलिसंश्रयः ॥ ६०

अन्वयः । सख्या स्वयं कृतजन्मसु तपःसाक्षिषु एषु द्रुमेष्वपि फलं दृष्टम् । अस्याः शशिमौलिसंश्रयः मनोरथस्तु प्ररोहाभिमुखः न च दृश्यते ॥ ६०

द्रुमेष्विति । सख्या पार्वत्या स्वयं कृतं जन्म येषां तेषु स्वयं रोपितेषु इत्यर्थः । तपसः साक्षिषु साक्षाद् द्रष्टृषु एषु द्रुमेषु अपि फलं दृष्टं लब्धं जनितमित्यर्थः । अस्याः पार्वत्याः शशिमौलिसंश्रयः चन्द्रशेखरविषयः मनोरथस्तु प्ररोहाभिमुखः अङ्कुरोन्मुखोऽपि न दृश्यते । "प्ररोहस्त्वङ्कुरः" इति वैजयन्ती । स्वयं रोपितवृक्षफल-कालेऽपि अस्याः मनोरथस्य न अङ्कुरोदयोऽपि अस्ति फलाशा तु दूरापास्तेत्यर्थः ॥ ६०

६० । यावता कालेन स्वहस्तरोपितेषु वृक्षेषु फलानि दृश्यन्ते, तावन्तं कालं तपस्यन्ती सा तपस्तत्फलरूपं हरं द्रष्टुं न शक्नोतीति अस्माकं दुःखमिति भावः ।

न वेद्मि स प्रार्थितदुर्लभः कदा
सखीभिरस्रोत्तरमीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं
वृषेव सीतां तदवग्रहक्षताम् ॥ ६१

अन्वय । प्रार्थितदुर्लभः सः तपःकृशां सखीभिः अस्रोत्तरम् ईक्षिताम् इमां (नः) सखीम् तदवग्रहक्षतां सीतां वृषा इव कदा अभ्युपपत्स्यते न वेद्मि ॥ ६१

न वेद्मीति। प्रार्थितः सन् दुर्लभः प्रार्थितदुर्लभः सः देवः तपःकृशां तपसा कृशां क्षीणाम् अतएव सखीभिः अस्रोत्तरम् अश्रुप्रधानं यथा भवति तथा ईक्षिताम् इमां नः सखीं तस्य इन्द्रस्य अवग्रहेण अनावृष्ट्या क्षतां पीड़िताम्। "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रही समौ" इत्यमरः। अवग्रहो वर्षप्रतिबन्ध इत्यर्थः। सीतां कृष्टभुवम्। "सीता लाङ्गलपद्धतिः" इत्यमरः। वृषा वासवः इव। "वासवो वृत्रहा वृषा" इत्यमरः। कदा अभ्युपपत्स्यते अनुग्रहीष्यति न वेद्मि। अत्र वाक्यार्थः कर्म्म। तदवग्रहक्षतामित्यत्र अवग्रहामित्यनेनैव गतार्थत्वे तत्पदस्य वैयर्थ्यापत्तेः तदिति भिन्नं पदं वेद्मीत्यस्य कर्म्म इति युक्तमुत्पश्यामः॥ ६१

६१। यथा सूर्य्यकिरणसन्तापयुक्ता कृष्टा भूमिः वर्षणम् आकाङ्क्षति तथा अस्माकं सखी पञ्चाग्निसन्ताप-कृशा इदं प्रार्थयते तस्याः तु मनोरथः कदा फलिष्यतीति न वेद्मि।

अगूढसद्भावमितीङ्गितज्ञया
निवेदितो नैष्ठिकसुन्दरस्तया।
अयीदमेवं परिहास इत्युमा-
मपृच्छदव्यञ्जितहर्षलक्षणः॥ ६२

अन्वयः। इङ्गितज्ञया तया इति अगूढसद्भावं निवेदितः नैष्ठिकसुन्दरः अव्यञ्जितहर्षलक्षणः अयि (गौरि!) इदम् एवम्? (उत) परिहास इति उमाम् अपृच्छत्॥ ६२

अगूढेति। इङ्गितज्ञया पार्वतीहृदयाभिज्ञया। "इङ्गितं हृद्गतो भावः" इति सज्जनः। तया गौरीसख्या इति एवम् अगूढसद्भावं प्रकाशितसदभिप्रायं यथा तथा निवेदितः ज्ञापितः निष्ठा मरणम् अवधिर्यस्य स नैष्ठिकः यावज्जीवब्रह्मचारी सुन्दरः विलासी। नैष्ठिकश्चासौ सुन्दरश्चेति तथोक्तः, द्वयोः अन्यतरस्य विशेषणत्वाविवक्षायां विशेषणसमासः। किन्तु नैष्ठिकत्वविशेषणेन कामित्वविरोधः। अथवा देवस्य अलौकिकमाहात्म्यत्वात् उभयं तात्त्विकमिति न विरोधः। अव्यञ्जितं हर्षलक्षणं मुखरागादिहर्षलिङ्गं यस्य तथाभूतः सन् अयि गौरि! अयीति कोमलामन्त्रणे, इदं त्वत्सखीभाषितम् एवं? सत्यं किमित्यर्थः। परिहासः केलिर्वा। "द्रवकेलिपरिहासाः" इत्यमरः। इत्येवमुमाम् अपृच्छत् पृष्ठवान्॥ ६२

६२। सखीमुखेन हरैकचित्तां पार्व्वतीं ज्ञात्वा हृष्टोऽपि गूढ़लिङ्गः स द्विजः सखी-वाक्यस्य याथार्थ्यप्रतिपादनच्छलेन किमपि वाक्यं वाचयितुं पार्व्वतीमपृच्छदिति।

अथाग्रहस्ते मुकुलीकृताङ्गुलौ
समर्पयन्ती स्फटिकाक्षमालिकाम्।
कथञ्चिदद्रेस्तनया मिताक्षरं
चिरव्यवस्थापितवागभाषत॥ ६३

अन्वयः। अथ अद्रेः तनया मुकुलीकृताङ्गुलौ अग्रहस्ते स्फटिकाक्षमालिकां समर्पयन्ती चिरव्यवस्थापितवाक् कथञ्चित् मिताक्षरम् अभाषत॥ ६३

अथेति। अथ अनन्तरम् अद्रेस्तनया पार्वती मुकुलीकृताङ्गुलौ सम्पुटीकृताङ्गुलौ अग्रश्चासौ हस्तश्चेति समानाधिकरणसमासः। हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदादिति वामनः। तस्मिन् अग्रहस्ते स्फटिकानामक्षमालिकां जपमालिकाम् अर्पयन्ती आमुञ्चन्ती कथञ्चित् महता कष्टेन चिरव्यवस्थापितवाक् चिरेण स्वीकृतवाक्। एतेन लज्जोपरोधो व्यज्यते। मिताक्षरं परिमितवर्णं यथा तथा अभाषत बभाषे॥ ६३

६३। द्विजस्य वाक्यं श्रुत्वा दीर्घकालं वाग्यता परिमितवर्णं वाक्यमवदत्। उत्कृष्टाङ्गनानामियं प्रकृतिः शालीनतया किमपि सम्यक् वक्तुं न शक्नुयादिति भावः।

यथा श्रुतं वेदविदां वर! त्वया
जनोऽयमुच्चैःपदलङ्घनोत्सुकः।
तपः किलेदं तदवाप्तिसाधनं
मनोरथानामगतिर्न विद्यते॥ ६४

अन्वयः। हे वेदविदां वर! त्वया यथा श्रुतम्, अयं जनः उच्चैःपदलङ्घनोत्सुकः, इदं तपः तदवाप्तिसाधनं किल। मनोरथानाम् अगतिः न विद्यते॥ ६४

किमुवाचेत्याह,—यथेति! हे वेदविदां वर! वैदिकश्रेष्ठ! त्वया यथा श्रुतं, सम्यक् श्रुतम्। श्रुतार्थमेवाह, अयं जनः स्वयमित्यर्थः। उच्चैःपदस्य शिवलाभरूपोन्नतस्थानस्य लङ्घने आक्रमणे उत्सुकः। किमत्रायुक्तमित्यत्राह। इदन्तपः तदवाप्तेः तस्य उच्चैः पदस्य

अवाप्तेः प्राप्तेः, साधनं किल । किलेत्यलीके । अतितुच्छत्वात् असाधकमेवेत्यर्थः । तर्हि त्यज्यतामित्याशङ्क्य दुराशा मां न मुञ्चतीत्याशयेन आह, मनोरथानां कामानाम् अगतिः अविषयः न विद्यते । न हि स्वशक्तिपर्य्यालोचनया कामाः प्रवर्त्तन्त इति भावः ॥ ६४

६४ । यथाव सम्यगर्थे व्यवहृतः, अन्यथा तत्शब्देन प्रयोजनं स्यात् । मनोरथस्य हिताहितपदार्थविचारो नास्ति तेनैव जनाः मनोरथेन जगति प्रायेण क्लिश्यन्ते ।

अथाह वर्णी विदितो महेश्वर-
स्तदर्थिनी त्वं पुनरेव वर्त्तसे ।
अमङ्गलाभ्यासरतिं विचिन्त्य तं
तवानुवृत्तिं न च कर्त्तुमुत्सहे ॥ ६५

अन्वयः । अथ वर्णी आह महेश्वरः विदितः, त्वं पुनरेव तदर्थिनी वर्त्तसे ? ( अहम् ) तम् अमङ्गलाभ्यासरतिं विचिन्त्य तव अनुवृत्तिं कर्त्तुं न च उत्सहे ॥ ६५

अथेति । अथ वर्णी ब्रह्मचारी । "वर्णिनो ब्रह्मचारिणः" इत्यमरः । आह उवाच इत्यर्थः । आहेति भूतार्थे लट्प्रयोगो भ्रान्तिमूल इत्याह वामनः । किमित्याह, महेश्वरः महादेवः विदितः त्वया ज्ञायत इत्यर्थः । बुद्ध्यर्थत्वात् वर्त्तमाने क्तप्रत्ययः, तद्योगात् षष्ठी च । येन त्वं प्राक् भग्नमनोरथा कृतेति भावः । पुनरेव त्वं तमीश्वरम् अर्थयसे तदर्थिन्येव तत्कामैव प्रवर्त्तसे तदभावम् अनुभूयापीति भावः । अनुसरणे को दोषः तत्राह—अमङ्गलाभ्यासे अमङ्गलाचारे रतिर्यस्य तं तथोक्तम् ईश्वरं विचिन्त्य विचार्य्य तव अनुवृत्तिम् अनुसरणं कर्त्तुं न उत्सहे न अनुमन्तुं शक्नोमीत्यर्थः ॥ ६५

६५ । विदितः तवेति शेषः । "क्तस्य च वर्तमाने" इति कर्त्तरि षष्ठी । अहम् अमङ्गलाभ्यासरतिं तं विचिन्त्येति शेषः । स शिवभिन्दया अस्याः दृढभक्तित्वं परीक्षते इति भावः ।

अवस्तुनिर्बन्धपरे कथं नु ते
करोऽयमामुक्तविवाहकौतुकः ।
करेण शम्भोर्वलयीकृताहिना
सहिष्यते तत्प्रथमावलम्बनम् ॥ ६६

अन्वयः । हे अवस्तुनिर्बन्धपरे ! आमुक्तविवाहकौतुकः ते अयं करः वलयीकृताहिना शम्भोः करेण तत्प्रथमावलम्बनं कथं नु सहिष्यते ॥ ६६

अवस्त्विति । अवस्तुनि तुच्छवस्तुनि निर्बन्धः अभिनिवेशः परं प्रधानं यस्याः तस्याः सम्बुद्धिः अवस्तुनिर्बन्धपरे ! पार्वति ! आमुक्तम् आसञ्जितं विवाहे यत् कौतुकं हस्तसूत्रं तद् यस्य सः ते अयं करः । "कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले" इति शाश्वतः । वलयीकृताहिना भूषणीकृतसर्पेण शम्भोः महादेवस्य करेण करणभूतेन तदेव प्रथमं तत्प्रथमम् अपरिचितत्वात् अतिभयङ्करमिति भावः । तच्च तत् अवलम्बनं ग्रहणञ्चेति कथं ? नु सहिष्यते, न कथञ्चिदपि सहिष्यत इत्यर्थः । अग्रतो यद्भावि तद्दूरेऽवतिष्ठतां प्रथमं करग्रह एव दुःसह इति भावः ॥ ६६

६६ । करेण तृतीया करणे । वलयीकृताहिनेत्यव करग्रहणसमये त्वं सर्पदंशनेन गरल यातनया निपीड़िता सती मरिष्यसि, अतस्तस्य पतित्वं परिहर । एतेन पार्व्वत्याः शक्तिग्रहाभावात् निर्बुद्धिता सूच्यते ।

त्वमेव तावत् परिचिन्तय स्वयं
कदाचिदेते यदि योगमर्हतः ।
वधूदुकूलं कलहंसलक्षणं
गजाजिनं शोणितबिन्दुवर्षि च ॥ ६७

अन्वयः । त्वमेव स्वयं तावत् परिचिन्तय, कलहंसलक्षणं वधूदुकूलं शोणितबिन्दुवर्षि गजाजिनञ्च एते कदाचित् योगम् अर्हतो यदि ॥ ६७

त्वमेवेति । हे गौरि ! त्वमेव स्वयम् आत्मना तावदिति मानार्थे । यावन्मात्रं विचारणीयं तावन्मात्रमित्यर्थः । इदमेव उदाहृतञ्च गणव्याख्याने । परिचिन्तय पर्य्यालोचय । किमिति ? कलहंसचिह्नम् । "चिह्नं लक्ष्म च लक्षणम्" इत्यमरः । वध्वाः नवोढ़ायाः दुकूलं वधूदुकूलं "वधू स्नुषा नवोढ़ा स्त्री" इति विश्वः । तथा शोणितबिन्दून् वर्षति इति तथोक्तं आर्द्रमित्यर्थः । गजाजिनञ्च कृत्तिवासश्च । तत् पिनाकिन इत्याशयः । एते कदाचित् जातु अपि योगं सङ्गतिम् अर्हतो यदि ? अर्हतः किम् ? एतत् त्वमेव चिन्तयेति पूर्व्वेणान्वयः । पाणिग्रहणकाले वधूवरयोः वस्त्रान्तग्रन्थिः

क्रियते। कृत्तिवाससा पाणिपीड़ने तु दुकूलधारिण्याः तव कथं सङ्घटिष्यत इति भावः॥ ६७

६७। यदि शब्दोऽस्य निरनुबन्धः। वस्त्राभावात् वधूवरयोर्वस्त्रग्रन्थिबन्धनं चर्म्मवास-सेव सम्पत्स्यते अतः एतादृशस्य निःस्वस्य परिणयने तव का सुखाशा न बुध्यते। स्त्रीणां भोगविलासवासना बलवतीति भावः।

चतुष्कपुष्पप्रकरावकीर्णयोः
परोऽपि को नाम तवानुमन्यते।
अलक्तकाङ्कानि पदानि पादयोः
विकीर्णकेशासु परेतभूमिषु॥ ६८

अन्वयः। चतुष्कपुष्पप्रकरावकीर्णयोः तव पादयोः अलक्तकाङ्कानि पदानि विकीर्ण-केशासु परेतभूमिषु परोऽपि को नाम अनुमन्यते॥ ६८

चतुष्केति। चतुष्के गृहविशेषे यः पुष्पप्रकरः तत्र अवकीर्णयोः न्यस्तयोः। कुसुमास्तृतदिव्यभवनभूसञ्चारोचितयोरित्यर्थः। तव पादयोः अलक्तकाङ्कानि लाक्षारञ्जितानि पदानि पादाकाराणि पादन्यासचिह्नानि। "पदं शब्दे च वाक्ये च व्यवसायापदेशयोः पादतच्चिह्नयोः इति विश्वः। विकीर्णा विक्षिप्ताः केशाः शवशिरो-रुहाः यासु तासु विकीर्णकेशासु। अतत्स्थं तच्च दृष्टञ्चेति वच-नात्, "स्वाङ्गाच्चोपसर्ज्जनात् असंयोगोपधात्" (४, १, ५४ पा०) इति विकल्पात् न ङीप्। परेतभूमिषु श्मशानेषु इत्यर्थः। परोऽपि शत्रुरपि को नाम अनुमन्यते न कोऽपीत्यर्थः। नामेति कुत्सायाम्। पिनाकपाणिपाणिग्रहणे तस्य परेतभूसञ्चारित्वेन साहचर्य्यात् तवापि तत्र सञ्चारोऽवश्यम्भावीति भावः॥ ६८

६८। तस्य दारिद्र्यं किं वर्णयामि वासभवनमपि न वर्त्तते साधुजननिन्दितायां श्मशान-भूमौ स तिष्ठति, पूतिगन्धस्य तीव्रत्वात् तत्र त्वं स्थातुं न शक्ष्यसीति भावः।

अयुक्तरूपं किमतः परं वद
त्रिनेत्रवक्षः सुलभं तवापि यत्।
स्तनद्वयेऽस्मिन् हरिचन्दनास्पदे
पदं चिताभस्मरजः करिष्यति॥ ६९

अन्वयः। त्रिनेत्रवच्चः तव सुलभमपि (भवति)। अतःपरम् अयुक्तरूपं किम्? वद, यत् हरिचन्दनास्पदे अस्मिन् स्तनद्वये चिताभस्मरजः पदं करिष्यति॥ ६९

अयुक्तेति। त्रिनेत्रवच्चः त्र्यम्बकालिङ्गनमित्यर्थः। तव तत्स्वभ्भितया सुलभमपि सुप्रापञ्च भवतीति शेषः। तवेति शेषे षष्ठी। "न लोकाव्यये"त्यादिना कृद्योगलक्षणषष्ठ्या निषेधात्। अतःपरम्। अस्मात् त्रिनेत्रवच्चोलाभात् अन्यत् अयुक्तरूपम् अत्यन्तायुक्तं किं? वद, न किञ्चिदित्यर्थः। "प्रशंसायां रूपप्" इति (५, ३, ६६ पा०) रूपप्प्रत्ययः। कुतः? यत् यस्मात्कारणात् हरिचन्दनास्पदे हरिचन्दनस्य आस्पदे स्थानभूते अस्मिन् स्तनद्वये चिताभस्म श्मशानभस्म तदेव रजः चूर्णं कर्त्तृ, पदं करिष्यति पदं निधास्यति, भर्त्तुः भवस्य भस्माङ्गरागादिति भावः॥ ६९

६९। भस्मलिप्ताङ्गेन वचसा यदा शिवः त्वां परिरप्स्यते तदा तैरेव भस्मभिः ते हरिचन्दनास्पदौ स्तनौ भूषितौ भविष्यतः अतः परमधिकं दुःखं किं स्यादिति।

द्वयञ्च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजहार्य्यया।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति॥ ७०

अन्वयः। द्वयञ्च ते पुरतः अन्या विडम्बना ऊढया वारणराजहार्य्यया त्वया अधिष्ठितं वृद्धोक्षं विलोक्य महाजनः स्मेरमुखो भविष्यति (इति) यत्॥ ७०

द्वयमिति। द्वयञ्च ते तव पुरतः आदौ एव अन्या विडम्बना परिहासः इत्यर्थः, का सेत्यत्राह,—ऊढया परिणीतया, वहेः कर्मणि क्तः। वारणराजहार्य्यया गजेन्द्रवाह्यया त्वया अधिष्ठितम् आरूढं वृद्धमुक्षाणं वृद्धोक्षम्। "अचतुरे"त्यादिना (५, ४, ७७ पा०) निपातः। विलोक्य महाजनः साधुजनः स्मेरमुखः स्मितमुखः भविष्यति उपहसिष्यति, यत्, द्वयमिति पूर्वेण सम्बन्धः। स्मेरेति "नमिकम्पिस्म्यजस" इत्यादिना (३, २, १६७ पा०) रप्रत्ययः॥७०

७०। यदा त्वं वृद्धोक्षमारुह्य तेनैव सार्द्धं विचरिष्यसि तदा तदा तदवस्थां त्वां दृष्ट्वा सर्वे उपहसिष्यन्ति इतोऽधिका विडम्बना का?

इयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया पिनाकिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ ७१

अन्वयः । पिनाकिनः समागमप्रार्थनया सम्प्रति द्वयं शोचनीयतां गतम्, सा कान्तिमती कलावतः कला च, अस्य लोकस्य नेत्रकौमुदी त्वञ्च ॥ ७१

इयमिति । पिनाकिनः ईश्वरस्य समागमप्रार्थनया प्राप्तिकामनया, क्रियमाणया इति शेषः । सम्प्रति द्वयं शोचनीयतां शोच्यत्वं गतम् । किं तदाह,—सा प्रागेव हरशिरोगता । अत्र सेति प्रसिद्धार्थत्वात् न यच्छब्दापेक्षा । तदुक्तं काव्यप्रकाशे "प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते" इति । कान्तिमती । नित्ययोगे मतुप् । कलावतः चन्द्रस्य कला षोड़शो भागश्च अस्य लोकस्य नेत्रकौमुदी नेत्रानन्दिनीत्यर्थः । त्वञ्च कान्तिमतीत्व-नेत्रकौमुदीत्वविशेषणयोः उभयत्रापि अन्वयः । प्रागेका एव शोच्या सम्प्रति द्वे अपीत्यर्थः, शोच्यत्वञ्च निकृष्टाश्रयणादिति भावः ॥ ७१

७१ । समागमप्रार्थनया तृतीया हेतौ । अतिदरिद्रस्य हरस्य समाश्रयणात् सा चन्द्रकला कदापि वृद्धिं न भजते, तद्वत् त्वमपि तदाश्रयणात् कदापि भोगवासना न परितप्स्यति, अतोऽहं वदामि धनवन्तमपरं देवं भजस्वेत्यभिप्रायः ।

वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि ! मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ॥ ७२

अन्वयः । वपुः विरूपाक्षम्, अलक्ष्यजन्मता, वसु दिगम्बरत्वेन निवेदितम्, हे बालमृगाक्षि ! वरेषु यत् मृग्यते, तत् त्रिलोचने व्यस्तमपि अस्ति किम् ? ॥ ७२

"कन्या वरयते रूपं माता वित्तं पिता श्रुतम् । बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः" इति लोकानामाभाणकम् । तत्र किञ्चिदपि नास्तीत्याह,—वपुरिति । वपुः तावदस्य विरूपाणि विकृतरूपाणि अक्षीणि नेत्राणि यस्य तत् विरूपाक्षम् । बहुव्रीहौ

"सक्थ्यक्ष्णोः स्वाङ्गात् षच्" (५, ४, ११३ पा०) इति षच्-प्रत्ययः। वैरूप्यञ्च त्रिनेत्रत्वादिति क्षीरस्वामी। अतो न सौन्दर्य्य-वार्त्तापीत्यर्थः। अलक्ष्यत् अज्ञातं जन्म यस्य तस्य भावस्तत्ता। कुलमपि न ज्ञायत इत्यर्थः। "अलक्षिता जनि"रिति पाठे जनिः उत्पत्तिः अलक्षिता न ज्ञाता। "जनिरुत्पत्तिरुद्भवः" इत्यमरः। वसु वित्तं दिगम्बरत्वेनैव निवेदितं, नास्तीति ज्ञापितम् इत्यर्थः। यदि वित्तं भवति तदा कथं दिगम्बरो भवति। अतो ज्ञयं निर्द्धनोऽयमिति। किं बहुना, हे बालमृगाक्षि! पार्वति! वरेषु वोढृषु। "वरो जामातृवाढ़ारौ" इति विश्वः। यत् रूपवित्तादिकं मृग्यते कन्यातद्बन्धुभिरान्वष्यते तत् त्रिलोचने त्र्यम्बके व्यस्तम् एकमपि, समस्तं मा भूदिति भावः, अस्ति किम्? नास्ति एवेत्यर्थः॥ ७२

७२। दिगम्बरत्वेन तृतीया अनुक्ते कर्त्तरि। शिवस्य एतादृक् वित्तं नास्ति इत यस्य विनिमयेन वस्त्रमाहृत्य स्वकीयां लज्जां निवारयितुं शक्नुयात्। हे मृगाक्षि! वरेषु याद्दश्यः गुणसम्पदः बन्धुभिः अनुसन्धीयन्ते हरे तपामेकमपि नास्ति, तर्हि कथं तं परिणेतुम् इत्थं कष्टं सहसे इति भावः।

निवर्त्तयास्मादसदीप्सितान्मनः
क्व तद्विधस्त्वं क्व च पुण्यलक्षणा।
अपेक्ष्यते साधुजनेन वैदिकी
श्मशानशूलस्य न यूपसत्क्रिया॥ ७३

अन्वयः। अस्मात् असदीप्सितात् मनो निवर्त्तय, तद्विधः क्व? पुण्यलक्षणा त्वञ्च क्व? साधुजनेन श्मशानशूलस्य वैदिकी यूपसत्क्रिया न अपेक्ष्यते॥ ७३

निवर्त्तयेति। अस्मात् असदीप्सितात् अनिष्टमनोरथात् मनः निवर्त्तय निवारय, सा पूर्वोक्ता विधा प्रकारो यस्य तथोक्तः अम-ङ्गलशील इत्यर्थः, क्व? महदन्तरमित्यर्थः, पुण्यलक्षणा प्रशस्त-भाग्यचिह्ना त्वञ्च क्व! अतो न तव अयमर्ह इत्यर्थः। तथाहि साधुजनेन। "साधुर्वार्द्धुषिके चारौ सज्जने चाभिधेयवत्" इति विश्वः। श्मशानशूलस्य श्मशानभूमिनिखातस्य वध्यशङ्कोः वैदिकी वेदोक्ता यूपो नाम पशुबन्धनसाधनभूतः संस्कृतदारुविशेषः तस्य

सत्क्रिया प्रोक्षणाभ्युक्षणादिसंस्कारः यूपसत्क्रिया न अपेक्ष्यते नेष्यते। यथा श्मशानशूले यूपसत्क्रिया न क्रियते, तथा त्वमपि तस्मै न घटसे इति तात्पर्य्यार्थः ॥ ७३

७३। अस्मादिति पञ्चमी अपादाने। वध्यशङ्कुं कोऽपि यूपमिव न सत् कुरुते अतः अमङ्गलाचारः हरः तवार्हो न भवतीति भावः।

इति द्विजातौ प्रतिकूलवादिनि
प्रवेपमानाधरलक्ष्यकोपया।
विकुञ्चितभ्रूलतमाहिते तया
विलोचने तिर्य्यगुपान्तलोहिते ॥ ७४

अन्वयः। द्विजातौ इति प्रतिकूलवादिनि (सति) प्रवेपमानाधरलक्ष्यकोपया तया उपान्तलोहिते विलोचने विकुञ्चितभ्रूलतं तिर्य्यक् आहिते ॥ ७४

इतीति। इति एवम्प्रकारेण द्विजातौ द्विजे प्रतिकूलवादिनि सति प्रवेपमानेन चञ्चलेन अधरेण अधरोष्ठेन लक्ष्यः अनुमेयः कोपः क्रोधः यस्याः तथोक्तया तया पार्वत्या उपान्तलोहिते प्रान्तरक्ते विलोचने विकुञ्चिते कुटिलिते भ्रूलते यस्मिन् तत् तथा सभ्रूभङ्गमित्यर्थः। तिर्य्यक् साचि आहिते निहिते अनादरात् तिर्य्यक् ईक्षित इत्यर्थः ॥ ७४

७४। पतिनिन्दां सोढ़मसहमाना सा क्रोधनिर्भरेण दृष्टिपातेन, स्वेच्छया हरनिन्दां कुर्व्वन्तं द्विजम् ऐक्षिष्ट। पतिव्रतानां योषितामियं नैसर्गिकी प्रकृतिः ताः कदापि पतिनिन्दां न सहन्ते, पार्व्वती क्रोधेन लज्जां विहाय तं वक्तुमुद्यता भवतीति भावः।

उवाच चैनं परमार्थतो हरं
न वेत्सि नूनं यत एवमात्थ माम्।
अलोकसामान्यमचिन्त्यहेतुकं
द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥ ७५

अन्वयः। एनम् उवाच च (त्वं) परमार्थतः हरं न वेत्सि नूनम्, यतः माम् एवम् आत्थ, मन्दाः अलोकसामान्यम् अचिन्त्यहेतुकं महात्मनां चरितं द्विषन्ति ॥ ७५

उवाचेति। अथ एनं ब्रह्मचारिणम् उवाच च। किमिति? परमार्थतः तत्त्वतः हरं न वेत्सि न जानासि नूनम्? कुतः? यतः

माम् एवम् उक्तया रीत्या आत्थ ब्रवीषि । "ब्रुवः पञ्चनामादितः" ( ३, ४, ८४ पा० ) इति रूपसिद्धिः । अज्ञानात् एवायं शिवद्वेष-स्तव इत्याशयेनाह,—मन्दाः मूढ़ाः । "मूढ़ाल्पापटुनिर्भाग्या मन्दा" इत्यमरः । लोकसामान्यम् इतरजनसाधारणं न भवतीति अलोक-सामान्यम् अचिन्त्यहेतुकं दुर्बोधकारणं महात्मनां चरितं द्विषन्ति हेत्वपरिज्ञानात् दूषयन्ति । विद्वांसस्तु कोऽपि अत्र हेतुः अस्तीति मन्यन्ते इत्यर्थः ॥ ७५

७५। त्वं दिगम्बरत्वस्य वृषभारोहणस्य श्मशानवासस्य च कारणं न ज्ञात्वा अमङ्ग-लाचारं निर्धनं इत्यादिना विशेषणेन हरं वृथा निन्दसीति सा तं द्विजमुवाच । विचारः । द्विषन्ति चरितं इत्यत्र कथं द्विष्धातोर्योगे सम्प्रदानं न भवतीति सत्यं महात्मनां चरितं कदापि कोपस्थानं न सम्भवेदिति ।

विपत्प्रतीकारपरेण मङ्गलं
निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः
किमेभिराशोपहतात्मवृत्तिभिः ॥ ७६

अन्वयः । विपत्प्रतीकारपरेण भूतिसमुत्सुकेन वा मङ्गलं निषेव्यते, जगच्छरण्यस्य निराशिषः सतः आशोपहतात्मवृत्तिभिः एभिः किम् ? ॥ ७६

सम्प्रति "अमङ्गलाभ्यासरतिम्" इत्याद्युक्तं ( ५।६५ ) दूषण-जातं "विपदि"त्यादिभिः षड्भिः श्लोकैः परिहर्तुमारभते,—विप-दिति । विपत्प्रतीकारपरेण अनर्थपरिहारार्थिना इत्यर्थः । "उप-सर्गस्य घञ्यमनुष्येषु बहुलमिति ( ६. ३, १२२ पा० ) दीर्घः । भूतिसमुत्सुकेन ऐश्वर्य्यकामेन वा मङ्गलं गन्धमाल्यादिकं निषेव्यते । शरणे रक्षणे साधुः शरण्यः । "तत्र साधु"रिति ( ४, ४, ९८ पा०) यत्प्रत्ययः । "शरणं गृहरक्षित्रोः" इत्यमरः । जगतः शरण्यः तस्य जगच्छरण्यस्य निराशिषः निरभिलाषस्य सतः शिवस्य । "आशी-रुरगदंष्ट्रायां विप्रवाक्याभिलाषयोः" इति शाश्वतः । आशया तृष्णया उपहता दूषिता आत्मवृत्तिः अन्तःकरणवृत्तिः येषां तैः एभिः मङ्गलैः किम् ? वृथा इत्यर्थः । पूर्वं मङ्गलमित्येकवचनस्य जात्यभिप्राय-त्वात् एभिरिति बहुवचनेन परामर्शो न विरुध्यते । इष्टावाप्त्यनिष्ट-

परिहारार्थिनो हि मङ्गलाचारनिर्बन्धः । तदुभयासंस्पृष्टस्य तु यथा-कथञ्चित् आस्ताम् । को दोष इत्यर्थः । एतेन अमङ्गलाभ्यासरति-मि"त्युक्तं ( ६५ श्लो० ) प्रत्युक्तम् ॥ ७६

७६ । विपत्प्रतीकारपरेण, भूतिसमुत्सुकेन च इत्यत्र तृतीया अनुक्ते कर्त्तरि । एभिः किम्‌र्योगे तृतीया । जगत्कारणस्य सर्वनियामकस्य तस्य भोगविलाससाधनभूताभिः सम्पद्भिः किम् ? तत्सकाशे ताः अतीव तुच्छकराः इत्यर्थः ।

अकिञ्चनः सन् प्रभवः स सम्पदां
त्रिलोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्य्यते
न सन्ति याथार्थ्यविदः पिनाकिनः ॥ ७७

अन्वयः । सः अकिञ्चनः ( सन् ) सम्पदां प्रभव इति, पितृसद्मगोचरः (सन्) त्रिलोक-नाथ इति, भीमरूपः ( सन् ) शिव इत्युदीर्य्यते, अतः पिनाकिनः याथार्थ्यविदः न सन्ति ॥७७

अकिञ्चन इति । सः हरः न विद्यते किञ्चन द्रव्यं यस्य स अकिञ्चनः दरिद्रः सन् सम्पदां प्रभवति अस्मादिति प्रभवः कारणम् । पितृसद्मगोचरः श्मशानाश्रयः सन् । त्रयाणां लोकानां नाथः "तद्धितार्थेत्यादिना ( २, १, ५१ पा० ) उत्तरपदसमासः । स देवः भीमरूपः भयङ्कराकारः सन् शिवः सौम्यरूपः इति उदीर्य्यते उच्यते । अतः पिनाकिनः हरस्य यथाभूतोऽर्थः यथार्थः तस्य भावः याथार्थ्यं तत्त्वं तस्य विदः न सन्ति । लोकोत्तरमहिम्नो निर्लेपस्य यथा कथञ्चित् अवस्थानं न दोषायेति भावः । एतेन अवस्तुनिर्बन्ध-परे ( ६६ ) श्लोकोक्तं परिहृतं वेदितव्यम् ॥ ७७

७७ । स स्वयं दिगम्बरः सन् सर्वेभ्यः वसनानि यच्छति । स श्मशानवासभूमिः सन् त्रिलोकाधिपो भवति, अतः अहं वदामि तस्य याथार्थ्यं कोऽपि न विदन्तीति भावः ।

विभूषणोद्भासि पिनद्धभोगि वा
गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरं
न विश्वमूर्त्तेरवधार्य्यते वपुः ॥ ७८

अन्वयः। विश्वमूर्त्तेः वपुः विभूषणोद्भासि स्यात्, पिनद्धभोगि वा ( स्यात् ) गजाजिनालम्बि (स्यात्), दुकूलधारि वा ( स्यात् ) कपालि ( स्यात् ) अथवा इन्दुशेखरं ( स्यात् ) न अवधार्य्यते ॥ ७८

देवस्य लौकिकमौलिकञ्च प्रसाधनं नास्तीत्याशयेनाह,—विभूषणेति। विश्वं मूर्त्तिः यस्येति विश्वमूर्त्तेः अष्टमूर्त्तेः शिवस्य वपुः शरीरं भूषणैः उद्भासत इति भूषणोद्भासि स्यात्। पिनद्धभोगि आसुक्तभुजङ्गमं वा स्यात्। पिनद्धेति नह्यतेरपिपूर्वात्कर्मणि क्तः। "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इति अकारलोपः। गजाजिनालम्बि स्यात्, अथवा दुकूलधारि स्यात्। कपालमस्यास्तीति कपालि ब्रह्मशिरःकपालशेखरं वा स्यात्, इन्दुशेखरं वा स्यात्, न अवधार्य्यते, सर्वं सम्भवतीत्यर्थः। एतेन त्वमेव तावदिति ( ६७ ) श्लोकोक्तं प्रत्युक्तमिति ज्ञेयम् ॥ ७८

७८। स शिवः उन्मत्त इव सर्पैरात्मानं भूषयति गलद्रक्तगजाजिनेन लज्जां निवारयति, नरकपालेन वारि पिबति। इत्येतत् सत्यं सर्वं चेत्, स तादृश उन्मत्तः इतरो भवति; तर्हि कथं तद्वपुरवधारयितुमधुनापि कोऽपि न शक्नुयादिति।

तदङ्गसंसर्गमवाप्य कल्पते
ध्रुवं चिताभस्मरजो विशुद्धये।
तथाहि नृत्याभिनयक्रियाच्युतं
विलिप्यते मौलिभिरम्बरौकसाम् ॥ ७९

अन्वयः। तदङ्गसंसर्गम् अवाप्य चिताभस्मरजः विशुद्धये कल्पते ध्रुवं तथाहि नृत्याभिनयक्रियाच्युतं (तत्) अम्बरौकसां मौलिभिः विलिप्यते ॥ ७९

अयुक्तरूपं किमतःपरं वदेति ( ६९ ) श्लोकोक्तं प्रत्याह—तदङ्गेति। तस्य शिवस्य अङ्गं तस्य संसर्गम् अवाप्य आसाद्य चिताभस्मैव रजः विशुद्धये कल्पते अलं पर्य्याप्नोति इत्यर्थः। अलमर्थयोगात् "नमःस्वस्तिस्वाहे"त्यादिना ( २, ३, १६ पा० ) चतुर्थी। ध्रुवं शोधकत्वं प्रमाणसिद्धमित्यर्थः। प्रमाणमेवाह,—तथाहि प्रसिद्धमेवेत्यर्थः। नृत्ये ताण्डवे यः अभिनयः अर्थव्यञ्जकचेष्टाविशेषः स एव क्रिया तया निमित्तेन च्युतं पतितं चिताभस्मरज इति शेषः। अम्बरौकसां देवानां मौलिभिः विलिप्यते ध्रियते।

अशुद्धं चेत् कथमिन्द्रादिभिः भ्रियेतेत्यर्थापत्तिः अनुमानं वा प्रमाण-मित्यर्थः ॥ ७९

७९। अपवित्रं चिताभस्म तदङ्गसंसर्गात् शुध्यति, अन्यथा देवाः कथं नृत्यकाले तदङ्गस्खलितात् भस्मपरागान् शिरोभिर्धारयन्ति। विशुद्धये—क्लृपि सम्पद्यमाने चतुर्थी।

असम्पदस्तस्य वृषेण गच्छतः
प्रभिन्नदिग्वारणवाहनो वृषा।
करोति पादावुपगम्य मौलिना
विनिद्रमन्दाररजोऽरुणाङ्गुली ॥ ८०

अन्वयः। प्रभिन्नदिग्वारणवाहनः वृषा असम्पदः वृषेण गच्छतः तस्य पादौ मौलिना उपगम्य विनिद्रमन्दाररजोऽरुणाङ्गुली करोति ॥ ८०

यदुक्तं "दिगम्बरत्वे निवेदितं वसु" (७२ श्लो०) "द्वयञ्च तेऽन्या पुरतो विडम्बने"त्यादि (७० श्लो०) च तत्रोत्तरमाह,—असम्पद इति। प्रभिन्नः मदस्रावो दिग्वारणः दिग्गजः वाहनं यस्य सः। ऐरावतेन ऊढ़ इत्यर्थः। वृषा देवेन्द्रः असम्पदः दरिद्रस्य वृषेण गच्छतः वृषभारूढ़स्य तस्य ईश्वरस्य पादौ मौलिना मुकुटेन उपगम्य प्रणम्य इत्यर्थः। विनिद्राणां विकसितानां मन्दाराणां कल्प-तरुकुसुमानां रजोभिः परागैः अरुणाः अङ्गुलयः ययोः तौ तथाक्तौ करोति। दिग्गजारोहिणाम् इन्द्रादीनामपि वन्द्यस्य इन्दुमौलेः किं सम्पदा ? वृषारोहणे वा को दोषः ? इत्यर्थः ॥ ८०

८०। वृषेण मौलिना च तृतीया करणे। चेत् तस्य माहात्म्यं नास्ति, तर्हि कथं ऐश्वर्य्यवानिन्द्रः तत्पादयोः स्वमुकुटं लुण्ठयति।

विवक्षता दोषमपि च्युतात्मना
त्वयैकमीशं प्रति साधु भाषितम्।
यमामनन्त्यात्मभुवोऽपि कारणं
कथं स लक्ष्यप्रभवो भविष्यति ॥ ८१

अन्वयः। च्युतात्मना (अतएव) दोषं विवक्षतापि त्वया ईशं प्रति एकं साधु भाषितम्, यम् आत्मभुवोऽपि कारणम् आमनन्ति स कथं लक्ष्यप्रभवः भविष्यति ॥ ८१

यदुक्तम् "अलच्यजन्मते"ति (७२ श्लो०) तत्रोत्तरमाह,—विवक्षतेति। च्युतात्मना नष्टस्वभावेन अतएव दोषं दूषणं विवक्षता वक्तुमिच्छतापि त्वया ईशं प्रति एकम् "अलच्यजन्मते"ति एतदेकं वच इत्यर्थः। साधु भाषितं सम्यगुक्तम्, कुतः? यम् ईश्वरम् आत्मभुवोऽपि ब्रह्मणोऽपि। "ब्रह्मात्मभूः सुरज्येष्ठः" इत्यमरः। कारणमामनन्ति उदाहरन्ति, विद्वांस इति शेषः। "पाघ्राध्मास्थाम्नादाणि"त्यादिना (७, ३, ७८ पा०) मनादेशः। सः ईश्वरः कथं लच्यप्रभवः? लच्यजन्मा भविष्यति? अनादिनिधनस्य भगवतः कारणशङ्काकलङ्कस्य न अन्विष्यते इत्यर्थः॥ ८१

८१। त्वयेति तृतीया अनुक्ते कर्त्तरि। विवक्षता—वि+वच्+सन्+शतृ+तृतीयैकवचनेन सिद्धम्। च्युतः आत्मा यस्य स तेन बहुव्रीहिः। ईशमिति द्वितीया प्रतिशब्दयोगे। लच्यः द्रष्टव्यः प्रभवो उत्पत्तिर्यस्य स बहुव्रीहिः। कारणं यमित्यत्र उद्देश्यविधेयान्वयः।

अलं विवादेन यथा श्रुतस्त्वया
तथाविधस्तावदशेषमस्तु सः।
ममात्र भावैकरसं मनः स्थितं
न कामवृत्तिर्वचनीयमीक्षते॥ ८२

अन्वयः। विवादेन अलम्, त्वया यथा श्रुतः सः अशेषं तथा अस्तु मम मनस्तु अत्र भावैकरसं (सत्) स्थितम्, तथाहि कामवृत्तिः वचनीयं न ईक्षते॥ ८२

<u>अलमिति</u>। अथवा विवादेन कलहेन अलम्? त्वया यथा येन प्रकारेण सः ईश्वरः श्रुतः अशेषं कार्त्स्न्येन तथाविधः तावत्प्रकारः एव अस्तु। मम मनः तु अत्र ईश्वरे भावः शृङ्गारः एकः अद्वितीयः रसः आस्वाद्यो यस्य तत् तथा स्थितम्। तथाहि कामवृत्तिः स्वेच्छाव्यवहारो वचनीयम् अस्थानसङ्गापवादं नेक्षते न विचारयति। न हि स्वेच्छासञ्चारिणो लोकापवादात् बिभ्यतीति भावः॥ ८२

८२। विवादेन अलंयोगे तृतीया। त्वयेति अनुक्ते कर्त्तरि तृतीया। वचनीयं गर्ह्यम्। कामवृत्तिर्यस्य स बहुव्रीहिः। शिवैकशरणं मे मनः कदापि अस्मात् विचालयितुं भवान् न शक्नुयादिति।

निवार्य्यतामालि ! किमप्ययं वटुः
पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतोऽपभाषते
शृणोति तस्मादपि यः स पापभाक् ॥ ८३

अन्वयः । हे आलि ! स्फुरितोत्तराधरः ( अतएव ) किमपि पुनर्विवक्षुः अयं वटुः निवार्य्यताम्, यो महतः अपभाषते न केवलं सः, तस्मात् यः शृणोति सोऽपि पापभाक् ( भवति ) ॥ ८३

निवार्य्यतामिति । हे आलि ! सखि ! "आलिः सखी वयस्या च" इत्यमरः । स्फुरितोत्तराधरः स्फुरणभूयिष्ठः अयं वटुः माणवकः पुनः किमपि विवक्षुः वक्तुमिच्छुः । ब्रुव. सनन्तादुप्रत्ययः । निवार्य्यताम् । तर्हि वक्तुमेव कथं ददासीत्याह,—तथाहि यो महतः पूज्यान् अपभाषते अपवदति न केवलं स पापभाग् भवति । तत्र स्मृतिः, "गुरोः प्राप्तः परीवादो न श्रोतव्यः कथञ्चन । कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः" इति । किन्तु तस्मात् महतामपवादकात् यः शृणोति महदपवादकवाक्यमिति शेषः, सः अपि पापभाक् इत्यनुषज्यते ॥ ८३

८३ । तस्मात् पञ्चमी अपादाने । पापभाक् पाप+भज्+ण्वि । हे आलि ! पुनः शिवनिन्दां श्रोतुं न शक्नोमि । अतः प्रार्थये वटुमिमं शिवनिन्दाकथनात् निवारय महतामपभाषणं य एव शृणोति स प्रायश्चित्तार्हः भवति ।

इतो गमिष्याम्यथवेति वादिनी
चचाल बाला स्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितः
समाललम्बे वृषराजकेतनः ॥ ८४

अन्वयः । अथवा इतः गमिष्यामि इति वादिनी बाला स्तनभिन्नवल्कला चचाल, वृष-राजकेतनः स्वरूपम् आस्थाय कृतस्मितः ( सन् ) तां समाललम्बे ॥ ८४

सम्प्रति गन्तव्यपक्षमाश्रयते,—इत इति । अथवा इतः अन्यत्र गमिष्यामि इति वादिनी वदन्ती स्तनाभ्यां भिन्नवल्कला व्ययवशात्

कुचस्रस्तचीरा बाला पार्वती चचाल। वृषराजकेतनः वृषभध्वजश्च स्वरूपमास्थाय निजरूपमाश्रित्य कृतस्मितः सन् तां पार्वतीं समालम्ब्य जग्राह ॥ ८४

८४। इतः पञ्चमी अपादाने। शिवैकशरणां तां विदित्वा स भगवान् पिनाकपाणिः स्वमूर्तिमवलम्ब्य शिवनिन्दाश्रवणभयात् स्थानान्तरे गमनोद्यतां पार्वतीं करौ प्रसार्य जग्राह।

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिः
निक्षेपणाय पदमुद्धृतमुद्वहन्ती।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥८५

अन्वयः। तं देवं वीक्ष्य वेपथुमती सरसाङ्गयष्टिः निक्षेपणाय उद्धृतं पदम् उद्वहन्ती शैलाधिराजतनया मार्गाचलव्यतिकराकुलिता सिन्धुरिव न ययौ न तस्थौ ॥ ८५

तमिति। तं देवं वीक्ष्य वेपथुमती कम्पवती सरसाङ्गयष्टिः स्विन्नगात्री, महादेवदर्शनेन देव्याः सात्त्विकभावोदयः उक्तः। निक्षेपणाय अन्यत्र विन्यासाय उद्धृतमुत्क्षिप्तं पदम् अङ्घ्रिम् उद्वहन्ती शैलाधिराजतनया पार्वती मार्गे अचलः तस्य व्यतिकरेण समाहत्या अवरोधनेन इति यावत्। आकुलिता सम्भ्रमिता सिन्धुः नदी इव। "देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः। न ययौ न तस्थौ लज्जयेति भावः। वसन्ततिलका वृत्तमेतत् ८५

८५। निक्षेपणाय चतुर्थी निमित्तार्थे। पुरुषाङ्गस्पर्शेन सात्त्विकाविर्भावात्, अयं शिवः अधुना सखीसमक्षं मां स्प्रक्ष्यते इति भिया वेपमाना सा अत एव न तस्थौ स्थिरा न बभूव, शिवेन कराभ्यां दृढं गृहीता, अत एव न ययौ गन्तुं न शशाक।

अद्य प्रभृत्यवनताङ्गि! तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ ८६

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
तपःफलोदयो नाम पञ्चमः सर्गः ॥ ५

अन्वयः। चन्द्रमौलौ "हे अवनताङ्गि! अद्य प्रभृति तव तपोभिः क्रीतः दासः अस्मि" इति वादिनि (सति) सा अह्नाय नियमजं क्लमम् उत्ससर्ज, तथाहि क्लेशः फलेन पुनः नवतां विधत्ते॥ ८६

अद्येति। चन्द्रमौलौ शिवे, हे अवनताङ्गि! पार्वति! अद्य-प्रभृति अस्माद्दिनादारभ्येत्यर्थः। प्रभृतियोगादद्येति सप्तम्यर्थवाचिना पञ्चम्यर्थो लक्ष्यते। तव तपोभिः क्रीतः। दासृ दाने। दासते आत्मानं ददातीति दासः अस्मि इति वादिनि वदति सति। सा देवी अह्नाय सपदि "झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुतम्" इत्यमरः। नियमजं तपोजन्यं क्लमं क्लेशम्। उत्ससर्ज, फलप्राप्त्या क्लेशं विसस्मार इत्यर्थः। तथाहि क्लेशः फलेन फलसिद्ध्या पुनर्नवतां विधत्ते पूर्ववदेव अक्लिष्टताम् आपादयति इत्यर्थः। सफलः क्लेशो न क्लेश इति भावः॥ ८६

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां तपः-
फलोदयो नाम पञ्चमः सर्गः॥ ५

८६। तपोभिः अनुक्ते कर्त्तरि तृतीया। चन्द्रमौलौ भावे सप्तमी। फलेन तृतीया इतौ। सा पिनाकपाणेरभिप्रायेण आत्मानं सफलकामं ज्ञात्वा तपःकष्टं विसस्मारेति भावः।

---

## षष्ठः सर्गः।

**अथ विश्वात्मने गौरी सन्दिदेश मिथः सखीम्।**
**दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति॥ १**

अन्वयः। अथ गौरी विश्वात्मने "भूभृतां नाथः मे दाता प्रमाणीक्रियताम्" इति मिथः सखीं सन्दिदेश॥ १

अथेति। देवदेवानुग्रहानन्तरं गौरी पार्वती विश्वम् आत्मा स्वरूपं यस्येति। विश्वस्य आत्मेति वा। विश्वात्मने शिवाय मिथः रहसि। "मिथोऽन्योन्यं रहस्यपि" इत्यमरः। सखीं सन्दिदेश अतिससर्ज। क्रियामात्रप्रयोगेऽपि सम्प्रदानत्वाच्चतुर्थी। किमिति? भूभृतां नाथः हिमवान् मे मम दाता सन् प्रमाणीक्रियतामिति,

दातृत्वेन प्रमाणीक्रियतामित्यर्थः । प्रार्थनायां लोट् । पित्रा दीयमानायाः परिग्रहो मम महान् अनुग्रह इति भावः ॥ १

१ । चेत् सा पितरं न ज्ञापयित्वा रहसि पतिमुपैति तर्हि स्वयमेव दुष्यतीति मिथः तयोर्विवाहं सम्पादयितुं पितरं ज्ञापयितुमुपदिशति ।

**तया व्याहृतसन्देशा सा बभौ निभृता प्रिये ।**
**चूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी ॥ २**

अन्वयः । तया व्याहृतसन्देशा प्रिये निभृता सा मधौ निभृता । परभृतोन्मुखी ( यद्वा परभृता उन्मुखी ) चूतयष्टिरिव अभ्यासे बभौ ॥ २

तयेति । तया सख्या सखीमुखेन इत्यर्थः । व्याहृतसन्देशा उक्तवाचिका प्रिये हरविषये निभृता निश्चला परमासक्ता इत्यर्थः, सा गौरी मधौ वसन्ते निभृता स्थिरा परभृतया कोकिलया उन्मुखी मुखरा परभृतोन्मुखी । मुखशब्देन अभिभाषणव्यापारो लक्ष्यते । तथा च परभृतामुखेन व्याहरन्ति इत्यर्थः । परभृतेति क्रियाशब्दविवक्षायां "जातेरस्त्री"ति ( ४, १, ६३ पा० ) ङीप्प्रत्ययो न भवति । तयेत्युपमेयस्य व्यस्तत्वात् उपमानवाचिपरभृताशब्दस्य समासः सोढव्यः । अथवा भृञ्भरणे ( ३, ३ १०८ पा० वा० ) सम्पदादित्वात् क्विप् । परैर्भृत् यस्याः तया परभृता इति व्यासेन व्याख्येयम् । पदमञ्जरीकारस्तु परैर्भ्रियत इति कर्मणि क्विपमाह । चूतयष्टिः चूतशाखेव अभ्यासे अन्तिके बभौ । "सदेशाभ्याससविधसमर्य्यादसवेशवत् । उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्" इत्यमरः ॥ २

२ । तया अनुक्ते कर्त्तरि तृतीया । व्याहृतसन्देशा व्याहृतः सन्देशः यया सा बहुव्रीहिः ।

**स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।**
**ऋषीन् ज्योतिर्मयान् सप्त सस्मार स्मरशासनः ॥३**

अन्वयः । सः स्मरशासनः तथेति प्रतिज्ञाय उमां कथमपि विसृज्य ज्योतिर्मयान् सप्त ऋषीन् सस्मार ॥ ३

स इति। स प्रकृतः। शास्तीति शासनः। बहुलग्रहणात् कर्त्तरि ल्युट्। स्मरस्य शासनः ईश्वरः तथेति प्रतिज्ञाय तथा करिष्यामीत्युक्त्वा इत्यर्थः। उमां कथमपि कृच्छ्रेण विसृज्य तत्र गाढ़ानुरागत्वादिति भावः। ज्योतिर्मयान् तेजोरूपान् सप्तर्षीन् अङ्गिरःप्रभृतीन् सस्मार स्मृतवान्॥ ३

३। स्मरस्य शासनः षष्ठीतत्पुरुषः। पार्वतीप्रार्थनया स हरः विवाहकार्य्यसम्पादनार्थं सप्तर्षीन् सस्मार। ते सप्तर्षयः हिमालयं पार्वतीं याचिष्यन्ते।

**ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः।**
**सारुन्धतीकाः सपदि प्रादुरासन् पुरः प्रभोः॥ ४**

अन्वयः। ते तपोधनाः प्रभामण्डलैः व्योम द्योतयन्तः सारुन्धतीकाः सपदि प्रभोः पुरः प्रादुरासन्॥ ४

त इति। ते तप एव धनं येषां ते तपोधनाः सप्तर्षयः प्रभामण्डलैः तेजःपुञ्जैः व्योम आकाशं द्योतयन्तः प्रकाशयन्तः। अरुन्धत्या सह वर्त्तन्त इति सारुन्धतीकाः सन्तः। "नद्यृतश्चे"ति (५, ४, १५३ पा०) कप्। सपदि प्रभोः ईश्वरस्य पुरः पुरोभागे प्रादुरासन् प्रत्यक्षा बभूवुः॥ ४

४। विवाहेषु योषितां मनोनयनस्य प्राधान्यात् सारुन्धतीका ते सप्तर्षयः आकाशमार्गेण शिवस्य पुरतः आविर्बभूवुः।

**आप्लुतास्तीरमन्दारकुसुमोत्किरवीचिषु।**
**व्योमगङ्गाप्रवाहेषु दिङ्नागमदगन्धिषु॥ ५**

अन्वयः। तीरमन्दारकुसुमोत्किरवीचिषु दिङ्नागमदगन्धिषु व्योमगङ्गाप्रवाहेषु आप्लुताः॥ ५

इतः परं षड्भिः श्लोकैः तान् एव मुनीन् वर्णयति,—आप्लुता इति। उत्किरन्ति विक्षिपन्ति इति उत्किराः। "इगुपधे"त्यादिना (३, १, १३५ पा०) कप्रत्ययः। तीरे ये मन्दाराः कल्पवृक्षाः तेषां कुसुमानाम् उत्किराः वीचयः तरङ्गाः येषां तेषु दिङ्नागानां दिग्गजानां मदगन्धः अस्ति येषु इति तथोक्तेषु व्योमगङ्गाप्रवाहेषु आकाशगङ्गास्रोतःसु आप्लुताः स्नाताः॥ ५

५। मन्दारकुसुमसुगन्धिषु मन्दाकिन्याः प्रवाहेषु स्नाता, एतेन अलकानन्दायाः तस्याः पातिव्रत्यं सूच्यते ।

मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः ।
रत्नाक्षसूत्राः प्रव्रज्यां कल्पवृक्षा इवाश्रिताः ॥ ६

अन्वयः । (पुमांसः कथम्भूताः ?) मुक्तायज्ञोपवीतानि बिभ्रतः (पुनः) हैमवल्कलाः (पुनः) रत्नाक्षसूत्राः अत एव प्रव्रज्याम् आश्रिताः कल्पवृक्षा इव स्थिताः ॥ ६

मुक्तेति। मुक्तानां मौक्तिकानां यज्ञोपवीतानि, मुक्तामयानि तानि इत्यर्थः । बिभ्रतः दधानाः हैममयानि वल्कलानि येषां ते हैमवल्कलाः । रत्नमयानि अक्षसूत्राणि येषां ते रत्नाक्षसूत्राः । प्रव्रज्यां प्रव्रजनम् । "व्रजयजोर्भावे क्यप्" इति (३, ३, ९८ पा०) क्यप् । आश्रिताः कल्पवृक्षा इव स्थिताः । अत्र चतुर्थाश्रमवाचिना प्रव्रज्याशब्देन वानप्रस्थाश्रमो लक्ष्यते "जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विन" इति (६ स० ३४ श्लोके) सपत्नीकत्वाभिधानात् "सुतविन्यस्तपत्नीकस्तया वानुगतोऽपि सन्" इति वानप्रस्थस्य उभयथा स्मरणात् ॥ ६

६। अभिनवसम्बन्धसम्पादनार्थं वरस्य धनवत्तां प्रदर्शयितुं वरकर्त्तारस्ते सप्तर्षयः ऋषीणामुपयोग्यान् मणिरत्नसुवर्णमयान् परिच्छदान् परिदधुः ।

अधःप्रस्थापिताश्वेन समावर्जितकेतुना ।
सहस्ररश्मिना साक्षात् सप्रणाममुदीक्षिताः ॥ ७

अन्वयः । (पुनः ?) अधःप्रस्थापिताश्वेन समावर्जितकेतुना साक्षात् सहस्ररश्मिना सप्रणामम उदीक्षिताः ॥ ७

अध इति। अधःप्रस्थापिताश्वेन सूर्य्यमण्डलोपरिवर्त्तित्वात् सप्तर्षिमण्डलस्येति भावः । समावर्जितकेतुना तन्मण्डलाघातशङ्कया नामितध्वजेन सहस्ररश्मिना सूर्य्येण साक्षात् स्वयमेव सप्रणामम् उदीक्षिता गमनाभ्यनुज्ञादानपर्य्यन्तमित्यर्थः । भगवतः सूर्य्यस्याप्युपास्या इति भावः ॥ ७

७। अधःप्रस्थापिता अश्वाः येन बहुव्रीहिः । समावर्जितः केतुः येन स तेन सहस्ररश्मिना अनुक्ते कर्त्तरि तृतीया । सूर्य्यमण्डलस्य उपरि सप्तर्षीणामवस्थानम् ।

आसक्तबाहुलतया सार्द्धमुद्धृतया भुवा ।
महावराहदंष्ट्रायां विश्रान्ताः प्रलयापदि ॥ ८

अन्वयः । प्रलयापदि आसक्तबाहुलतया उद्धृतया भुवा सार्द्धम् महावराहदंष्ट्रायां विश्रान्ताः ॥ ८

आसक्तेति । पुनः किंविधाः । प्रलयापदि कल्पान्तसङ्कटे आसक्तबाहुलतया, दंष्ट्रायामिति शेषः । उद्धृतया दंष्ट्रया इति शेषः । भुवा सार्द्धं धरण्या सह महावराहदंष्ट्रायां विश्रान्ताः । महाप्रलयेऽपि अविनाशिनः इत्यर्थः ॥ ८

८ । आसक्ता बाहुलता यस्याः सा तया बहुव्रीहिः । भुवा तृतीया सहार्थशब्दयोगे । प्रलयकालेऽपि एतेषां प्रलयो नास्तीति भावः ।

सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम् ।
पुरातनाः पुराविद्भिर्धातार इति कीर्त्तिताः ॥ ९

अन्वयः । विश्वयोनेः अनन्तरं सर्गशेषप्रणयनात् पुराविद्भिः पुरातना धातार इति कीर्त्तिता ॥ ९

सर्गशेषेति । विश्वयोनेः ब्रह्मणः अनन्तरं सर्गशेषस्य प्रणयनात् ब्रह्मसृष्टावशिष्टसृष्टेः करणाद्धेतोरित्यर्थः । पुराविद्भिः पुराणवेदिभिः व्यासादिभिः पुरातनाः धातार इति कीर्त्तिताः । विश्वयोनेरिति सम्बन्धमात्रे षष्ठी, तस्यानन्तरमिति भाष्ये दर्शनात् । अपादानत्वविवक्षायां तु पञ्चमी । अयमदःशब्दो यथाशब्दावृत्तादनन्तरस्येति शाबरभाष्ये दर्शनात् । तथा "अथातो धर्मजिज्ञासा वेदाध्ययनादनन्तरं" इत्याचार्य्याः । क्वचिच्च पुराणपत्रापगमादनन्तरम्" इति । एवम् अन्यत्रापि द्रष्टव्यम् ॥ ९

९ । पुराविद्भिः तृतीया अनुक्ते कर्त्तरि । सर्गस्य शेषः तस्य प्रणयनं तस्मात् सृष्टिस्थितिप्रलयकर्तृत्वांशेन व्यवहर्त्तारः अत एव ते धातार उच्यन्ते ।

प्राक्तनानां विशुद्धानां परिपाकमुपेयुषाम् ।
तपसामुपभुञ्जानाः फलान्यपि तपस्विनः ॥ १०

अन्वयः । प्राक्तनानां विशुद्धानां परिपाकम् उपेयुषां तपसां फलानि उपभुञ्जानाः अपि तपस्विनः ॥ १०

प्राक्तनानामिति । प्राक्तनानां जन्मान्तरभवानां विशुद्धानां निर्म्मलानां परिपाकं फलदानोन्मुखत्वम् उपेयुषां गतानां तपसां फलानि उपभुञ्जाना अपि तपस्विनः तपोनिष्ठाः । प्रारब्धभोगिनो निस्पृहाश्चेति भावः । कुलकम् ॥ १०

१० । पूर्व्वजन्मार्जितानां तपसां फलेन धातृत्वं लब्ध्वापि ते तपश्चरणात् न विरेमुः, धातारोऽपि भोगवासनारहिता आसन् ।

कुलकम् ॥

तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा ।
साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती ॥ ११

अन्वयः । तेषां मध्यगता साध्वी अत एव पत्युः पादार्पितेक्षणा अरुन्धती साक्षात् तपःसिद्धिरिव बहु बभासे ॥ ११

तेषामिति । तेषाम् ऋषीणां मध्यगता साध्वी पतिव्रता, अत एव पत्युः वशिष्ठस्य पादयोः अर्पितेक्षणा निविष्टदृष्टिः अरुन्धती साक्षात् प्रत्यक्षा तपःसिद्धिरिव तेषामेव इति शेषः । तेषां मध्यगतेति लिङ्गवचनादिसाम्यादियमुपमा । बहु भूयिष्ठं बभासे भाति स्म ॥ ११

११ । साध्वीनां पुरुषान्तरसम्पर्कात् चरित्रस्खलनाशङ्का नास्ति स्वामिचरणार्पितदर्शनात् पुरुषान्तरदर्शनाभावेन पातिव्रत्यभङ्गो नासीदिति ।

तामगौरवभेदेन मुनींश्चापश्यदीश्वरः ।
स्त्री पुमानित्यनास्थैषा वृत्तं हि महितं सताम् ॥ १२

अन्वयः । ईश्वरः तां मुनींश्च अगौरवभेदेन अपश्यत्, स्त्री पुमांश्च इत्येषा अनास्था हि (किन्तु) वृत्तं सताम् महितम् ॥ १२

तामिति । ईश्वरो भगवान् ताम् अरुन्धतीं मुनींश्च अगौरवभेदेन समानप्रतिपत्त्या अपश्यत् दृष्टवान् । न च अयमविवेक इत्याह,—हि यस्मात् स्त्री पुमांश्चेत्येषा अनास्था स्त्रीपुंसभेदो न

त्रिविद्यतः। किन्तु सतां साधूनां वृत्तं चरित्रमेव महितं पूज्यम्। "गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः" इति भावः॥१२

१२। स हरः तान् स्त्रीपुरुषाभेदेन अपश्यत्, एतेन तस्य अविवेकिता न सूचिता। सा अरुन्धती योषिदपि गुणवत्तया तेषां साम्या, गुणः न लिङ्गं न वा वयः च विचारयतीति भावः।

तद्दर्शनादभूत् शम्भोर्भूयान् दारार्थमादरः।
क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम्॥१३

अन्वयः। तद्दर्शनात् शम्भोः दारार्थम् आदरः भूयान् अभूत, सत्पत्न्यः धर्म्याणां क्रियाणां मूलकारणं खलु॥ १३

तदिति। तद्दर्शनात् अरुन्धतीदर्शनात् शम्भोः दारार्थं दारपरिग्रहार्थम् आदरो भूयान् बहुतरः अभूत्, ननु दाराः कुत्र उपयुज्यन्त इत्यत्र आह,—धर्म्याणां धर्मादनपेतानाम्। "धर्मपथ्यर्थन्यायादनपेते" (४, ४, ९२ पा०) इति यत्प्रत्ययः। क्रियाणां इज्यादीनां सत्यः पतिव्रताः पत्न्यः सत्पत्न्यः। "पत्युर्नो यज्ञसंयोगे" (४, १, ३३ पा०) इति ङीप् नकारश्च। मूलकारणं खलु॥ १३

१३। खलु अवधारणे। अरुन्धतीदर्शनेन तस्य दारपरिग्रहार्थं महानौत्सुक्यम् आसीत्। न तु कामवृत्तिसाधनाय। पतिव्रताः नार्य्यः धर्म्मसाधनस्य मूलकारणं भवन्ति।

धर्म्मेणापि पदं शर्व्वे कारिते पार्व्वतीं प्रति।
पूर्व्वापराधभीतस्य कामस्योच्छ्वसितं मनः॥ १४

अन्वयः। धर्म्मेणापि शर्वे पार्वतीं प्रति पदं कारिते पूर्वापराधभीतस्य कामस्य मन उच्छ्वसितम्॥ १४

धर्म्मेणेति। धर्म्मेण दारसंजिघृक्षालक्षणेनापि कर्त्रा शर्वे ईश्वरे पार्वतीं प्रति पदं कारिते सति। "हृक्रोरन्यतरस्या"मिति (१, ४, ५३ पा०) शर्वस्याणिकर्त्तुः कर्मत्वम्। पूर्वापराधभीतस्य कामस्य मनः उच्छ्वसितं पुनरुज्जीवनावकाशो भवतीति समाश्वासम् अभूदित्यर्थः॥ १४

१४। धर्मेण तृतीया अनुक्ते कर्तरि।

अथ ते मुनयः सर्वे मानयित्वा जगद्गुरुम्।
इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः॥ १५

अन्वयः। अथ अनूचानाः प्रीतिकण्टकितत्वचः ते सर्वे मुनयः जगद्गुरुं मानयित्वा इदम् ऊचुः॥ १५

अथेति। अथ अनूचानाः साङ्गवेदप्रवक्तारः। "अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः" इत्यमरः। "उपेयिवाननाश्वाननूचानश्च"ति ( ३, २, १०९ पा० ) निपातः। प्रीत्या कण्टकिताः पुलकिताः त्वचः येषां ते तथोक्ताः ते सर्वे मुनयः जगद्गुरुं हरं मानयित्वा पूजयित्वा इदं वक्ष्यमाणम् ऊचुः॥१५

१५। ईश्वरसन्दर्शनेन प्रीतिप्रफुल्लमनसः ते मुनयः साम्प्रतं भगवन्तं वक्ष्यमाणं वचनं बभाषिरे।

यद् ब्रह्म सम्यगाम्नातं यदग्नौ विधिना हुतम्।
यच्च तप्तं तपस्तस्य विपक्वं फलमद्य नः॥ १६

अन्वयः। ब्रह्म सम्यक् आम्नातम् ( इति ) यत्, अग्नौ विधिना हुतम् ( इति ) यत् तपः तप्तम् ( इति ) यत् तस्य फलम् अद्य नः विपक्वम्॥ १६

यदिति। ब्रह्म वेदः। "वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः। सम्यक् नियमपूर्वकम् आम्नातम् अधीतमिति यत्। अग्नौ विधिना हुतम् इति यत्। तपः चान्द्रायणादिकं तप्तम् इति च यत् तस्य अध्ययनेज्यातपोरूपस्य आश्रमत्रयसाध्यस्य कृत्स्नस्यापि कर्मण इत्यर्थः। समुदायाभिप्रायकमेकवचनम्, अन्यथा आवृत्त्यान्वय-प्रसङ्गात्। न च नपुंसकैकवद्भावः अनपुंसकेनेति नियमात्। फलं कार्यम् अद्य नः अस्माकं विपक्वं सुनिष्पन्नमित्यर्थः। कर्मणि क्तः। "पचो वः" ( ८, २, ५२ पा० ) इति निष्ठा तस्य वत्वम्॥१६

१६। सम्यग्वेदाध्ययनस्य अग्न्याहुतिप्रदानस्य तपसश्च तव साक्षात्काररूपं फलम् अस्माभिरद्य लब्धम्। विधिना तृतीया प्रकृत्यादिभ्यः।

यदध्यक्षेण जगतां वयमारोपितास्त्वया।
मनोरथस्याविषयं मनोविषयमात्मनः॥ १७

अन्वयः। यत् जगताम् अध्यक्षेण त्वया वयं मनोरथस्य अविषयम् आत्मनः मनोविषयम् आरोपिताः॥ १७

तदेव फलमाह,—यदिति। यत् यस्मात्कारणात् जगताम्‌अध्यक्षेण अधिपेन त्वया वयं मनोरथस्य अभिलाषस्य अविषयम् अगोचरम् आत्मनः स्वस्य मनोविषयं मनोदेशम् आरोपिताः प्रापिताः, तस्मात् विपक्कं फलमिति पूर्वेण सम्बन्धः। सकलजगदन्वेष्टव्यस्य भगवतोऽपि वयमन्वेष्या भवाम इति परमोत्कृष्टा वयमिति भावः॥ १७

१७। वयम् अन्येषाम् अभिलाषस्यागोचरं शिवमनोदेशं स्थापिताः सर्वे कठोरेण तपसा यमुपास्य कदाचित् लब्धुं शक्नुवन्ति, स एव अस्मान् आद्रियते इदमस्माकमभावनीयं गौरवमिति।

यस्य चेतसि वर्त्तेथाः स तावत् कृतिनां वरः।
किं पुनर्ब्रह्मयोनेर्यस्तव चेतसि वर्त्तते॥ १८

अन्वयः। (त्वम्) यस्य चेतसि वर्तेथाः स तावत् कृतिनां वरः, ब्रह्मयोनेः तव चेतसि यः वर्तते (सः) किं पुनः ?॥ १८

तदेव उपपादयति,—यस्येति। यस्य जनस्य चेतसि वर्त्तेथाः येन स्मर्य्यसे इत्यर्थः। स तावत् स एव कृतिनां वरः कृतकृत्यानां श्रेष्ठः। ब्रह्मणः वेदस्य वेधसो वा योनिः कारणस्य, यद्वा वेदप्रमाणकस्य तव चेतसि यो वर्त्तते त्वया स्मर्य्यते इत्यर्थः। किं पुनः? स कृतिनां वर इति किमु वक्तव्यमित्यर्थः॥ १८

१८। त्वं यस्य चेतसि वर्तसे स सर्वैरेव पूज्यते, तव चेतसि ये वर्तन्ते ते पुनः पूजनीयानां पूज्याः, इदमेव अस्माकं महत् श्लाघ्यम्।

सत्यमर्काच्च सोमाच्च परमध्यास्महे पदम्।
अद्य तूच्चैस्तरं ताभ्यां स्मरणानुग्रहात्तव॥ १९

अन्वयः। अर्कात् सोमाच्च परं पदम् अध्यास्महे सत्यम्, अद्य तु तव स्मरणानुग्रहात् ताभ्याम् उच्चैस्तरम् (पदम् अध्यास्महे)॥ १९

सत्यमिति। अर्कात् सूर्य्यात् सोमात् चन्द्राच्च परम् उच्चैः पदं स्थानम् अध्यास्महे तिष्ठामः, वयमिति शेषः, सत्यम्। अधि-

शीङ्स्थासां कर्मे"ति (१, ४, ४६ पा०) कर्मत्वम्। अद्य तु तव कर्त्तुः स्मरणम् एव अनुग्रहः प्रसादः तस्माद्धेतोः। ताभ्याम् अर्केन्दुभ्याम् उच्चैस्तरम् अत्युच्चं पदम् अध्यास्महे इति सम्बन्धः। उच्चैस्तरमिति द्रव्यप्रकर्षत्वात् न अमुप्रत्ययः॥ १९

१९। अर्कात् सोमात् अपेक्षार्थे अपादाने वा पञ्चमी। ताभ्याम् अपेक्षार्थे पञ्चमी। अनुग्रहात् हेतौ पञ्चमी।

**त्वत्सम्भावितमात्मानं बहु मन्यामहे वयम्।**
**प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः॥ २०**

अन्वयः। वयं त्वत्सम्भावितम् आत्मानम् बहु मन्यामहे, (तथाहि) उत्तमादरः प्रायः स्वगुणेषु प्रत्ययम् आधत्ते॥ २०

त्वदिति। वयं त्वया सम्भावितं सत्कृतं त्वत्सम्भावितम् आत्मानम् आत्मस्वरूपं बहु अधिकं यथा तथा मन्यामहे। तथाहि उत्तमादरः सत्पुरुषकर्तृकः सत्कारः स्वगुणेषु विषये प्रायेण भूम्ना प्रत्ययं विश्वासम् आधत्ते जनयति। सर्वस्यापि महाजनपरिग्रह एव पूज्यताहेतुरित्यर्थः॥ २०

२०। भवत्सम्भाविताः वयम् अद्य अन्येषां पूज्यान् अस्मान् मन्यामहे, इतः पूर्वं किं वयम् अन्येषां पूजनीयाः उत न! इति संशयामहे।

**या नः प्रीतिर्विरूपाक्ष! त्वदनुध्यानसम्भवा।**
**सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम्॥ २१**

अन्वयः। हे विरूपाक्ष! त्वदनुध्यानसम्भवा नः या प्रीतिः, सा तुभ्यं किम् आवेद्यते? (त्वम्) देहिनाम् अन्तरात्मा असि॥ २१

येति। हे विरूपाक्ष! त्वदनुध्यानसम्भवा त्वत्कर्तृकस्मरणजन्या नः अस्माकं या प्रीतिः सा प्रीतिः तुभ्यं किम् आवेद्यते? किमर्थं निवेद्यते? तथाहि, देहिनां प्राणिनाम् अन्तरात्मा अन्तर्यामी असि। सर्वसाक्षिणा त्वया अस्मत्प्रीतिः अनावेदितापि ज्ञायत एव, यतः, ततो न बुद्धबोधनं सम्भवतीति भावः॥२१

२१। तव स्मरणजन्या अस्माकं या प्रीति सर्वभूतान्तर्यामितया सा भवतः किमपि आवेदयितुं न उपयुज्यत इति भावः।

साक्षाद्दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा ।
प्रसीद कथयात्मानं न धियां पथि वर्त्तसे ॥ २२

अन्वयः । (हे देव)! साक्षात् दृष्टः असि, अञ्जसा पुनः त्वां वयं न विद्मः (अतः) प्रसीद, आत्मानं कथय, धियां पथि न वर्त्तसे ॥ २२

साक्षादिति । 'हे देव ! साक्षात् प्रत्यक्षेण दृष्टोऽसि । अञ्जसा पुनः तत्त्वतस्तु त्वां वयं न विद्मः । दृश्यमानस्य रूपस्य अतात्त्विकत्वादिति भावः । अतः प्रसीद अनुगृहाण । आत्मानं निजस्वरूपं कथय । न च अकथितं तत्सुबोधम् इत्याह, धियां बुद्धीनां पथि न वर्त्तसे, अतः त्वयैव त्वद्रूपं कथनीयमित्यर्थः ॥ २२

२२ । हे भगवन् ! त्वां दृष्टापि बुद्धेरगम्यत्वात् ज्ञातुं न शक्नुमः । अतो वयं प्रार्थयामहे अस्माननुगृह्य आत्मानं कथयेति सरलार्थः ।

किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।
अथ विश्वस्य संहर्त्ता भागः कतमः एष ते ॥ २३

अन्वयः । (हे देव !) किं येन व्यक्तं सृजसि (स वा ?) उत येन तत् बिभर्षि (स वा ?) अथ (यः) तस्य संहर्त्ता (स वा ?) एष ते भागः कतमः ॥२३

तात्त्विकं रूपं तावदास्तां न दृश्यमानमपि रूपं तत्त्वतो रूपयितुं शक्यमित्याह,—किमिति । हे देव ! एषः दृश्यमानः ते भागः मूर्त्तिः किम् ? येन भागेन व्यक्तम् प्रपञ्चं सृजसि ? यत्तदोर्नित्यसम्बन्धात् सर्वत्र तच्छब्दोऽध्याहार्य्यः । उत येन भागेन तत् व्यक्तं बिभर्षि पालयसि स वा ? अथ यः भागः तस्य विश्वस्य संहर्त्ता स वा ? किमादयः सन्देहे । कतमः ? ब्रह्मविष्णुमहेश्वरेषु अयं कतमः भागः ? तत् उच्यतामित्यर्थः ॥ २३

२३ । विश्वस्य कर्म्मणि षष्ठी । हे देव ! स्रष्टृपालयितृसंहर्त्तृणाम् एष अस्माकं दृष्टिपथवर्त्ती कतमो भागः उच्यतां ज्ञानस्य अविषयत्वात् ज्ञातुं न शक्नुमः ।

अथवा सुमहत्येषा प्रार्थना देव ! तिष्ठतु ।
चिन्तितोपस्थितांस्तावत् शाधि नः करवाम किम् २४

अन्वयः । अथवा हे देव ! सुमहती एषा प्रार्थना तिष्ठतु, (किन्तु) चिन्तितोपस्थितान् नः शाधि, किं करवाम ? ॥ २४

ननु हर इत्येवं निश्चयात् कथमयं संशयस्तत्राह.—अथवेति। अथवा हे देव! सुमहतो गुह्यतमत्वात् अतिदुर्लभेत्यर्थः। एषा प्रार्थना निजरूपनिरूपणप्रार्थना तिष्ठतु। किन्तु चिन्तितेन चिन्तिता वा उपस्थिताः चिन्तितोपस्थिताः तान् नः अस्मान् तावत् शाधि आज्ञापय किं करवाम? प्रार्थनायां लोट्। अलम् अप्रस्तुतेन, प्रस्तुते तावत् नियुङ्क्ष्वेत्यर्थः॥ २४

२४। शिवरूपनिरूपणविषयाकर्णनेच्छाविरतान् अस्मान् साम्प्रतं कर्तव्यार्थम् आदिश्य अनुगृहाण। तावदत्र साकल्यार्थे व्यवहृतः।

**अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः।**
**उपचिन्वन् प्रभां तन्वीं प्रत्याह परमेश्वरः॥ २५**

अन्वयः। अथ परमेश्वरः मौलिगतस्य इन्दोः तन्वीं प्रभां विशदैः दशनांशुभिः उपचिन्वन् प्रत्याह॥ २५

अथेति। अथ परमेश्वरः मौलिगतस्य इन्दोः तन्वीम् अल्पां कलामात्रत्वादिति भावः। प्रभां कान्तिं विशदैः शुभ्रैः दशनांशुभिः उपचिन्वन् वर्द्धयन् प्रत्याह प्रत्युवाच इत्यर्थः॥२५

२५। स कर्त्तव्यार्थसाधनोत्सुकानां सप्तर्षीणां वाक्येन प्रीतः सन् हासविकाशेन भालेन्दुकिरणकान्तिमुपचिन्वन् मुनीन् प्रत्यवदत्।

**विदितं वो यथा स्वार्था न मे काश्चित् प्रवृत्तयः।**
**ननु मूर्त्तिभिरष्टाभिरित्थम्भूतोऽस्मि सूचितः॥२६**

अन्वयः। ननु (मुनयः!) काश्चिदपि मे प्रवृत्तयः यथा स्वार्था न, तथा वः विदितम्, अष्टाभिः मूर्तिभिः (अहम्) इत्थम्भूतः सूचितः अस्मि॥ २६

विदितमिति। हे मुनयः! काश्चित् अपि मे प्रवृत्तयः व्यापाराः स्वार्था न भवन्ति यथा तथा वः युष्माकं विदितम्। वाक्यार्थः कर्म बुद्ध्यर्थत्वात् वर्त्तमाने क्तः, तद्योगात् षष्ठी। प्रवृत्तिपारार्थ्ये प्रमाणमाह, अष्टाभिः मूर्त्तिभिः इत्थम्भूतः इमं प्रकारं परार्थप्रवृत्तिरूपं प्राप्तः। भू प्राप्तौ इति धातोः कर्तरि क्तः। सूचितः ज्ञापितः अस्मि। मत्स्वमूर्त्तिचेष्टया स्वपारार्थ्यम् अनुमेयमित्यर्थः॥ २६

२६। हे ऋषयः! मे सर्वाः मूर्त्तयः परार्थपराः युष्माभिः ज्ञाताः जगन्मङ्गलसाधनाय ता मे मूर्त्तयः सदैव तिष्ठन्तीति सरलार्थः।

**सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः।**
**अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः॥ २७**

अन्वयः। सोऽहं तृष्णातुरैः चातकैः वृष्टिं विद्युत्वान् इव अरिविप्रकृतैः देवैः प्रसूतिं प्रति याचितः॥ २७

स इति। स परार्थप्रवृत्तिः अहं तृष्णातुरैः चातकैः वृष्टिं विद्युत्वान् मेघः इव अरिविप्रकृतैः शत्रुपीड़ितैः देवैः प्रसूतिं पुत्रोत्पादनं प्रति याचितः। याचतेर्दुह्यादित्वात् अप्रधाने कर्मणि क्तः॥ २७

२७। यथा मेघः वर्षणेन तृष्णातुरान् चातकान् प्रीणयति, तथाहम् अरिविप्रकृतान् देवान् पुत्रोत्पादनेन तोषयिष्यामोत्यनेन विवाहप्रयोजनं ज्ञापयतीति सरलार्थः। चातकैः देवैश्च तृतीयानुक्ते कर्तरि।

**अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने।**
**उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम्॥ २८**

अन्वयः। अतः आत्मजन्मने पार्वतीं यजमानः हविर्भोक्तुः उत्पत्तये अरणिमिव आहर्तुम् इच्छामि॥ २८

अत इति। अतः सुरप्रार्थितत्वाद्धेतोः आत्मजन्मने पुत्राय पुत्रम् उत्पादयितुम् इत्यर्थः। "क्रियार्थोपपदस्य" इत्यादिना (२, ३, १४ पा०) चतुर्थी। पार्वतीं यजमानः यष्टा। "पूङ्यजोः शानन्" (३, २, १२८) इति शानन् प्रत्ययः। हविर्भोक्तुः अग्नेः उत्पत्तये अरणिम् अग्निमन्थनदारुविशेषम् इव। "निर्मन्थ्यदारुणि त्वरणि-र्द्वयोः" इत्यमरः। आहर्तुं संग्रहीतुम् इच्छामि॥ २८

२८। यथा यष्टा अग्निमुत्पादयितुम् अरणिम् आहरति, तथाहं पुत्रोत्पादनाय पार्वती-माहर्तुमिच्छामीति सरलार्थः। उत्पत्तये क्रियायोगे चतुर्थी।

**तामस्मदर्थं युष्माभिर्याचितव्यो हिमालयः।**
**विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः॥ २९**

अन्वयः । अस्मदर्थे युष्माभिः तां हिमालयः याचितव्यः, सदनुष्ठिताः सम्बन्धा विक्रियायै न कल्पन्ते ॥ २९

तामिति । अस्मदर्थे अस्मत्प्रयोजने निमित्ते सति युष्माभिः तां पार्वतीं हिमालयः हिमवान् याचितव्यः । याचेर्दुहादित्वात् अप्रधाने कर्मणि तव्यप्रत्ययः । आवश्यकञ्च एतदित्याह, सद्भिः सत्पुरुषैः अनुष्ठिताः सङ्घटिताः सम्बन्धाः यौनादयः विक्रियायै वैकल्योत्पादनाय न कल्पन्ते न पर्य्याप्नुवन्ति न समर्था इत्यर्थः । (२, २, १६ पा०) अलमर्थयोगाच्चतुर्थी ॥ २९

२९ । मदर्थं यूयं हिमालयं पार्वतीं याचध्वम्, ननु त्वमेव सर्वलोकेश्वरः तर्हि पार्वतीग्रहणाय अस्माभिः किं प्रयोजनं, सत्यं सज्जनमाध्यस्थ्येन सङ्घटिताः सम्बन्धा न जातु वैकल्यमाप्नुयुरिति भावः । अस्मदर्थे निमित्तार्थे सप्तमी चतुर्थी 'वा', अर्थे इत्यव्ययम् ।

उन्नतेन स्थितिमता धुरमुद्वहता भुवः ।
तेन योजितसम्बन्धं वित्त मामप्यवञ्चितम् ॥ ३०

अन्वयः । उन्नतेन स्थितिमता भुवः धुरम् उद्वहता तेन योजितसम्बन्धं मामपि अवञ्चितं वित्त ॥ ३०

न च अहं लौल्यात् स्त्रियमिच्छामि किन्तु देवोपकाराय । यदि एवं निखिलदेवेषु विद्यमानेषु हिमगिरेः शिलाभूतस्य कन्यापरिणयेच्छा कथमित्युक्ते स एव मे श्लाघ्यसम्बन्धोऽत्रभवान् हिमवानित्याह, -उन्नतेनेति । उन्नतेन प्रांशुना प्रसिद्धेन च स्थितिमता प्रतिष्ठावता भुवः धुरं भारम् उद्वहता निर्वाहकेण इत्यर्थः । तेन हिमवता योजितः सङ्घटितः सम्बन्धो यौनसम्बन्धो यस्य तं मामप्यवञ्चितम् अव्यामोहितं वित्त जानीत । विद ज्ञाने इति धातोर्लोट् ॥ ३०

३० । न तु कामवशात् मेऽयं दारपरिग्रह इति ज्ञातव्यः । मद्वीर्य्यधारणे अन्यासां नारीणां शक्त्यभावात् शिलामयेन सर्वगुणसम्पत्तिमता हिमवता सार्द्धं सम्बन्धः अवश्यं कर्त्तव्यः इति भावः । तेन अनुक्ते कर्त्तरि तृतीया ।

एवं वाच्यः स कन्यार्थमिति वो नोपदिश्यते ।
भवत्प्रणीतमाचारमामनन्ति हि साधवः ॥ ३१

अन्वयः। कन्यार्थं स एवं वाच्य इति वः न उपदिश्यते, हि (यस्मात्) साधवः भवत्-प्रणीतम् आचारम् आमनन्ति ॥ ३१

तर्हि स किं वाच्य इत्याशङ्क्याह,—एवमिति। कन्यार्थं कन्याप्रदानाय स हिमवान् एवं वाच्य इति वः युष्मभ्यं नोपदिश्यते। कुतः? हि यस्मात् साधवः विद्वांसः भवद्भिः प्रणीतं स्मृतिरूपेण निबद्धम् आचारम् आमनन्ति उपदिशन्ति। न हि स्वयम् उपदेष्टारः परोपदेशम् अपेक्षन्ते इत्यर्थः ॥ ३१

३१। अस्मिन् विषये कर्तव्यमवधारयितुं मदुपदेशः न युज्यते। यतः यूयं सर्वेषामुपदेष्टारः, किमहं युष्मानुपदेक्ष्यामीति भावः।

आर्य्याप्यरुन्धती तत्र व्यापारं कर्तुमर्हति।
प्रायेणैवंविधे कार्य्ये पुरन्ध्रीणां प्रगल्भता ॥ ३२

अन्वयः। आर्य्या अरुन्धती अपि तत्र व्यापारं कर्त्तुम् अर्हति, (तथाहि) प्रायेण एवंविधे कार्य्ये पुरन्ध्रीणां प्रगल्भता (अस्ति) ॥ ३२

आर्य्येति। आर्य्या पूज्या अरुन्धत्यपि तत्र विवाहकृत्ये व्यापारं साहाय्यं कर्त्तुम् अर्हति। तथाहि प्रायेण प्राचुर्य्येण एवंविधे कार्य्ये विवाहादिकार्य्ये दुर्घटे इत्यर्थः, पुरन्ध्रीणां कुटुम्बिनीनाम्। "स्यात्तु कुटुम्बिनी पुरन्ध्रः" इत्यमरः। प्रगल्भता चातुर्य्यम्। स्त्रीप्रधानेषु कृत्येषु स्त्रीणामेव घटनापाटवमिति भावः ॥ ३२

३२। स्त्रीप्रधाने सुदुर्घटे विवाहादिकार्य्ये प्रायेण नारीणां घटनापाटवं दृश्यते, अतः आर्य्यारुन्धती अपि युष्माननुकूलयिष्यतीत्यहमाशंसे इति तात्पर्य्यार्थः। प्रायेण तृतीया प्रकृत्यादित्वात्।

तत् प्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम्।
महाकोशीप्रपातेऽस्मिन् सङ्गमः पुनरेव नः ॥ ३३

अन्वयः। तत् ओषधिप्रस्थं नाम हिमवत्पुरं सिद्धये प्रयात; अस्मिन् महाकोशीप्रपाते एव नः पुनः सङ्गमः (अस्तु) ॥ ३३

तदिति। तत् तस्मात् कारणात् ओषधिप्रस्थं नाम हिमवत्पुरम् हिमवन्नगरं सिद्धये कार्य्यसिद्ध्यर्थं प्रयात गच्छत। अस्मिन् पुरोवर्त्तिनि महाकोशी नाम तत्रत्या काचिन्नदी तस्याः प्रपाते

भृगौ एव, सा नदी यत्र पतति तस्मिन्नित्यर्थः । "प्रपातस्त्वतटो भृगुः" इत्यमरः । नः अस्माकं पुनः सङ्गमः अस्त्विति शेषः । भवत्समागमं प्रतिपालयन्नहमिहैव निवत्स्यामीत्यर्थः ॥ ३३

३३ । सिद्धये निमित्तार्थे चतुर्थी । पार्वतीलाभार्थं यूयं गच्छत महाकोशीप्रपाते युष्मानहमपेक्षिष्ये इति ।

**तस्मिन् संयमिनामाद्ये जाते परिणयोन्मुखे ।**
**जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः ॥ ३४**

अन्वयः । संयमिनाम् आद्ये तस्मिन् परिणयोन्मुखे जाते ( सति ) प्राजापत्याः तपस्विनः परिग्रहव्रीडां जहुः ॥ ३४

तस्मिन्निति संयमिनां योगिनाम् आद्ये तस्मिन् ईश्वरे परिणयोन्मुखे विवाहोत्सुके जाते सति प्रजापतेरिमे प्राजापत्याः ब्रह्मपुत्रा इत्यर्थः । तपस्विनः मुनयः परिग्रहैः पत्नीभिः व्रीडां गार्हस्थ्यनिमित्तमित्यर्थः । "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः । जहुः तत्यजुः । जहातेर्लिटि रूपम् । न हि समानगुणदोषेषु व्रीडागमोऽस्तीति भावः ॥ ३४

३४ । संयमिनां श्रेष्ठस्य शिवस्य परिणयोत्सुकत्वेन दारपरिग्रहजनिता व्रीडा अन्यान् स्पृष्टं न शक्ता समानगुणदोषेषु तेषु व्रीडा का ? ।

**ततः परममित्युक्त्वा प्रतस्थे मुनिमण्डलम् ।**
**भगवानपि सम्प्राप्तः प्रथमोद्दिष्टमास्पदम् ॥ ३५**

अन्वयः । ततः मुनिमण्डलं परममित्युक्त्वा प्रतस्थे, भगवानपि प्रथमोद्दिष्टम् आस्पदं सम्प्राप्तः ॥ ३५

तत इति । ततः अनन्तरं मुनिमण्डलं मुनिसमूहः परमम् इत्युक्त्वा ओमित्युक्त्वा अनुमन्येत्यर्थः अव्ययमेतत् । "ओमेवं परमं मतम्" इत्यमरः । प्रतस्थे । भगवान् ईश्वरः अपि प्रथमोद्दिष्टं पूर्वसङ्केतितम् आस्पदं स्थानं महाकोशीप्रपातं सम्प्राप्तः ॥ ३५

३५ । प्रतस्थे "प्रोपाभ्यामारम्भे" इत्यात्मनेपदम् । ओषधिप्रस्थं गतेषु मुनिमण्डलेषु स भगवान् महाकोशीप्रपातं प्राप्तवानिति ।

ते चाकाशमसिश्यामसुत्पत्य परमर्षयः ।
आसेदुरोषधिप्रस्थं मनसा समरंहसः ॥ ३६

अन्वयः । मनसा समरंहसः ते परमर्षयश्च असिश्यामम् आकाशम् उत्पत्य ओषधि-प्रस्थम् आसेदुः ॥ ३६

त इति । मनसा समरंहसः मनस्तुल्यवेगाः ते परमर्षयश्च पूर्वश्लोकोक्तेश्वरसमुच्चयार्थश्चकारः । असिवच्छ्यामं नीलम् आकाशं खं प्रति उत्पत्य ओषधिप्रस्थं हिमवत्पुरम् आसेदुः सद्यः प्रापुः इत्यर्थः ॥ ३६

३६ । मनसा तुल्यार्थे तृतीया । मनसा समं रंहो वेगः येषां बहुव्रीहिः ।

अलकामतिवाह्यैव वसतिं वसुसम्पदाम् ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम् ॥ ३७

अन्वयः । वसुसम्पदां वसतिम् अलकाम् अतिवाह्यैव स्वर्गाभिष्यन्दवमनं कृत्वेव उप-निवेशितम् ॥ ३७

इतः परं दशभिः श्लोकैः ओषधिप्रस्थमेव वर्णयति,—अलका-मिति । वसुसम्पदां धनसमृद्धीनां वसतिं स्थानम् अलकां कुवेर-नगरीम् अतिवाह्य परिच्छिद्य इति यावत् । उपनिवेशितम् इव स्थितम् । तथा स्वर्गस्य अभिष्यन्दः अतिरेकः अतिरिक्तजन इति यावत्, तस्य वमनं निःसारणं कृत्वा उपनिवेशितम् इव स्थितम् । उभयत्रापि कौटिल्यः, "भूतपूर्वम् अभूतपूर्वं वा जनपदं परदेशाप-वाहेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्" इति । अलकामरा-वत्यतिशयितसमृद्धिकामित्यर्थः ॥ ३७

३७ । धनशालिनां निवासभूमिमलकामतिक्रम्य अपरामसरावतीमिव हिमवद्राजधानी मासेदुरित्यर्थः ।

गङ्गास्रोतःपरिक्षिप्तं वप्रान्तर्ज्वलितौषधि ।
बृहन्मणिशिलासालं गुप्तावपि मनोहरम् ॥ ३८

अन्वयः । (पुनः ?) गङ्गास्रोतःपरिक्षिप्तं वप्रान्तर्ज्वलितौषधि बृहन्मणिशिलासालम् अत एव गुप्तौ अपि मनोहरम् ॥ ३८

गङ्गेति। गङ्गायाः स्रोतोभिः प्रवाहैः परिच्छिन्नं परिवेष्टितं तैरेव सपरिखमित्यर्थः। वप्रः चयः प्राकारचेत्यम् इति यावत्। "स्याच्चयो वप्रमस्त्रियाम् इत्यमरः। तस्य अन्तः मध्ये ज्वलिताः प्रकाशमानाः ओषधयः यस्य तत् तथोक्तम्। ज्वलितौषधित्वात् रात्रिषु सञ्चारिणां दीपान्तरपेक्षामित्यर्थः। बृहन् विपुलः मणिशिलानां माणिक्यानां सालः प्राकारो यस्य तत् तथोक्तम्। "प्राकारो वरणः सालः" इत्यमरः। अत एव गुप्तावपि संवरणेऽपि मनोहरम् अक्लिष्टदुर्गसंवरणमिति भावः॥ ३८

३८। यत्र गङ्गाप्रवाहाः परिखाः इव वर्त्तन्ते मणिमयप्राकारवेष्टितां ततः सुगुप्तामपि रत्नदीप्तिभिः प्रकाशितां राजधानीमासेदुः।

**जितसिंहभया नागा यत्राश्वा विलयोनयः।**
**यक्षाः किम्पुरुषाः पौरा योषितो वनदेवताः॥३९**

अन्वयः। यत्र नागाः जितसिंहभयाः, अश्वा विलयोनयः, यक्षाः किंपुरुषाश्च पौरा, वनदेवता एव योषितः॥ ३९

जितेति। यत्र पुरे नागाः गजाः जितं सिंहेभ्यो भयं यैः ते तथोक्ताः, सिंहाधिकबला इत्यर्थः। नाथस्तु "पदं तुषारस्रुतिधौतरक्तं (१ स० ६ श्लो०)" इति एतद्विरोधभयात् "वीतवातभया" इति पपाठ। तथा न भेतव्यं तत्र वनगजानां सिंहहतत्वाभिधानात्। अत्र तु ओषधिप्रस्थगजानां हिमवन्महिम्ना सिंहातिरेकसम्भवेन अविरोधादिति। "वीतवीतभया" इति पाठे वीतं विगतं वीतात् पादाङ्गुशकर्मभ्यां भयं येषां ते तथोक्ताः, स्वभावविनीता इत्यर्थः। "पादकर्मयुतं प्रोक्तं यातमङ्कुशवारणम्। उभयं वीतमाख्यातम्" इति यादवः। अश्वाः विलयोनयः विलसम्भवाः। अन्यत्र तु न तथेति वैचित्र्यम्। उक्तञ्च—"अमृताद्वाष्पतो वह्नेर्वेदेभ्योऽण्डाच्च गर्भतः। साम्नो हयानामुत्पत्तिः सप्तधा परिकीर्त्तिता" इति। यक्षाः प्रसिद्धाः किम्पुरुषाः किन्नराश्च पौराः पुरजनाः। वनदेवता एव योषितः, न तु मानुष्य इत्यर्थः॥ ३९

३९। यत्र स्थूलतमशरीराः सिंहाधिकबला गजाः विलजाः अश्वाः यक्षा किन्नराः वनदेवता एव योषितः विचरन्ति।

शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम् ।
अनुगर्जितसन्दिग्धाः करणैर्मुरजस्वनाः ॥ ४०

अन्वयः। यत्र शिखरासक्तमेघानां वेश्मनाम् अनुगर्जितसन्दिग्धाः मुरजस्वनाः करणैः व्यज्यन्ते ॥ ४०

शिखरेति। यत्र पुरे शिखरेषु आसक्ताः मेघाः येषां तेषां वेश्मनां सम्बन्धिनः। अनुगर्जितानि प्रतिगर्जितानि तैः सन्दिग्धाः मुरजस्वनाः करणैः तालव्यवस्थापकैः ताड़नविशेषैः। तदुक्तं राजकन्दर्पेण—"नृत्यवादित्रगीतानां प्रयोगवशभेदिनाम्। संस्थानं ताड़नं रोधः करणानि प्रचक्षते" इति। व्यज्यन्ते स्फुटीक्रियन्ते ॥ ४०

४०। यत्र अभ्रङ्कषेषु गृहेषु मेघस्वनानुमेयाः मुरजस्वनाः ताड़नावरोधनैः श्रूयन्ते।

यत्र कल्पद्रुमैरेव विलोलविटपांशुकैः।
गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता ॥ ४१

अन्वयः। यत्र विलोलविटपांशुकैः कल्पद्रुमैरेव अपौरादरनिर्मिता गृहयन्त्रपताकाश्रीः (सम्भवति) ॥ ४१

यत्रेति। यत्र नगरे विलोलानि चञ्चलानि विटपेषु अंशुकानि येषां तैः कल्पद्रुमैरेव अपौरादरेण पौरादरं विनैव निर्मिता अयत्नसिद्धेत्यर्थः। गृहेषु यानि यन्त्राणि आधारदारूणि तेषु पताकाः तासां श्रीः सम्भवतीति शेषः। तत्र लम्बाम्बराः कल्पतरव एव वैजयन्तीति सम्भाव्यन्त इत्यर्थः ॥ ४१

४१। यत्र कल्पतरुषु आतपशोषणार्थं वस्त्राणि वर्त्तन्ते, तैः कल्पतरवः गृहपताकाकार्य्यं सम्पादयन्तीव इति ते मन्यन्ते स्म।

यत्र स्फटिकहर्म्येषु नक्तमापानभूमिषु।
ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम् ॥ ४२

अन्वयः। यत्र नक्तं स्फटिकहर्म्येषु आपानभूमिषु ज्योतिषां प्रतिबिम्बानि उपहारतां प्राप्नुवन्ति ॥ ४२

यत्रेति। यत्र पुरे नक्तं रात्रौ स्फटिकहर्म्येषु आपानभूमिषु पानगोष्ठीप्रदेशेषु ज्योतिषां नक्षत्राणां प्रतिबिम्बानि उपहारतां पुष्पोपहारत्वं मौक्तिकोपहारत्वं वा प्राप्नुवन्ति ॥ ४२

४२। यत्र स्फटिकहर्म्येषु पानगोष्ठीप्रदेशेषु प्रतिबिम्बप्रतिफलितानि नक्षत्राणि पुष्पोपहारा इव शोभन्ते।

**यत्रौषधिप्रकाशेन नक्तं दर्शितसञ्चराः ।**
**अनभिज्ञास्तमिस्राणां दुर्दिनेष्वभिसारिकाः ॥४३**

अन्वयः। यत्र दुर्दिनेषु नक्तम् ओषधिप्रकाशेन दर्शितसञ्चराः अभिसारिकाः तमिस्राणाम् अनभिज्ञाः (भवन्ति) ॥ ४३

यत्रेति। यत्र पुरे दुर्दिनेषु मेघाच्छन्नदिवसेषु नक्तमोषधीनां तृणज्योतिषां प्रकाशेन सञ्चरन्ते एभिरिति सञ्चराः पन्थानः। "गोचरसञ्चरे"त्यादिना (३, ३,११९ पा०) घप्रत्ययान्तो निपातः। दर्शितसञ्चराः प्रकाशितमार्गाः अभिसारिकाः कान्तार्थिन्यः। "कान्तार्थिनी तु या याति सङ्केतं साभिसारिका" इत्यमरः। तमिस्राणां तमसाम्। ज्ञद्योगात् कर्म्मणि षष्ठी। अनभिज्ञाः तमांसि न अभिजानन्तीत्यर्थः ॥ ४३

४३। यत्र नक्तं तृणज्योतिषां प्रभाभिः अभिसारिकाणां योषिताम् अभिसारकर्म्मणि अन्धकारः प्रतिबन्धकीभूतो भवितुं नाशक्नोत्।

**यौवनान्तं वयो यस्मिन्नान्तकः कुसुमायुधात् ।**
**रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्य्ययः ॥ ४४**

अन्वयः। यस्मिन् वयः यौवनान्तम्, कुसुमायुधात् (अन्यः) अन्तकः न, रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्य्ययः ॥ ४४

यौवनेति। यस्मिन् पुरे वयः यौवनान्तं यौवनावधिकं, सर्वेऽपि अजरा इत्यर्थः। तथा कुसुमायुधात् कामात् अन्यः इति शेषः। अन्तकः मृत्युः न अस्तीति शेषः। विरहिणां तादृग्दुःखोत्पादकत्वात् अन्तकत्वोपचारः। कामं विना मृत्युर्नास्ति इत्यर्थः। अत एव तत्कार्य्यभूतमरणाभाव इत्याशयेनाह रतीति। रतिखेद-

समुत्पन्ना निद्रा सुप्तिरिव संज्ञाविपर्य्ययः चेतनापगमः, न तु दीर्घनिद्रारूप इत्यर्थः। अनत्ययाः सर्वे अजरामरा इति श्लोकतात्-पर्य्यार्थः। अन्तयति अन्तं करोतीत्यन्तकः। अन्तयतेस्तत्करोतीति ण्यन्तात् यत्प्रत्ययः ॥ ४४

४४। यत्र सर्वे युवानः कदापि वृद्धत्वं न पश्यन्ति। रतिखेदजनितालस्येन चैतन्य-वैपरीत्यं घटते न तु निद्रया।

**भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्जनैः।**
**यत्र कोपैः कृताः स्त्रीणामाप्रसादार्थिनः प्रियाः॥४५**

अन्वयः। यत्र प्रियाः भ्रूभेदिभिः सकम्पोष्ठैः ललिताङ्गुलितर्ज्जनैः स्त्रीणां कोपैः आप्रसा-दार्थिनः कृताः॥ ४५

भ्रूभेदिभिरिति। यत्र पुरे प्रियाः युवानः भ्रूभेदिभिः भ्रूभङ्ग-वद्भिः सकम्पा ओष्ठाः येषु तैः ललितानि अङ्गुलितर्ज्जनानि येषु तैः स्त्रीणां कोपैः मानाख्यैः आप्रसादार्थिनः आप्रसादं प्रसाद-पर्य्यन्तम् अर्थिनः याचकाः कृताः, न तु शत्रुकोपैरिति भावः ॥४५

४५। यत्र परस्पर वैरिभावः न वर्त्तते, नायकाः तु नायिकानां कोपं सान्त्वयितुं ताः प्रार्थयन्ते, महानन्दाः सर्वे निवसन्ति, अतः सर्वे स्थानमिदं लब्धुं तपस्यन्तीति भावः।

**सन्तानकतरुच्छायासुप्तविद्याधराध्वगम्।**
**यस्य चोपवनं वाह्यं गन्धवद्गन्धमादनम्॥ ४६**

**कुलकम्।**

अन्वयः। सन्तानकतरुच्छायासुप्तविद्याधराध्वगं गन्धवत् गन्धमादनं यस्य वाह्यम् उप-वनं च॥ ४६

सन्तानकेति किञ्चेति चार्थः। सन्तानकतरोः छायासु सुप्ता विद्याधरा देवताविशेषाः त एव अध्वगाः यस्मिन् तत् यथोक्तं गन्धवत् गन्धाढ्यं गन्धमादनं नाम गिरिः यस्य पुरस्य वहिर्भवं वाह्यम्, उपवनम् आरामः। अत्र गन्धवद्गन्धमादनम् इति आगन्तुकः पाठः। प्राचीनपाठस्तु सुगन्धिर्गन्धमादन इति पुंलिङ्गान्तः। अत एव क्षीरस्वामिना "गन्धमादनमन्ये च" त्यत्र गन्धेन मादयतीति गन्ध-मादन इति व्याख्याय प्रयोगे च पुंलिङ्गता दृश्यत इत्याशयेनोक्तं

"सुगन्धिर्गन्धमादनः" इति कालिदास इति । "सन्तानकतरुच्छाये"त्यत्र पूर्वपदार्थबाहुल्यसम्भवेऽपि 'शलभच्छायम्" "इक्षुच्छाय"मितिवत् समर्थच्छायानिष्पत्तेः तदपेक्षाभावात् "छाया-बाहुल्ये" ( १, ४, २२ पा० ) इति नपुंसकत्वं नास्ति इत्यनुसन्धेयम् ॥ ४६

४६। गन्धमादनं हिमालयस्योपवनमिवास्ति, यत्र अध्वगाः विद्याधराः सन्तानकतरुच्छायामुपेत्य सुखेन स्वपन्ति । एतेन हिमवतः महती सौभाग्यवत्ता सूचिता।

**अथ ते मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरम् ।**
**स्वर्गाभिसन्धिसुकृतं वञ्चनामिव मेनिरे ॥ ४७**

अन्वयः। अथ ते दिव्याः मुनयः हैमवतं पुरं प्रेक्ष्य स्वर्गाभिसन्धिसुकृतं वञ्चनामिव मेनिरे ॥ ४७

अथेति । अथ ते दिवि भवाः दिव्याः मुनयः हिमवत इदं हैमवतं पुरं प्रेक्ष्य स्वर्गाभिसन्धिना स्वर्गोद्देशेन यत् सुकृतं ज्योतिष्टोमाद्यनुष्ठानं तत् स्वर्गाभिसन्धिसुकृतं वञ्चनां प्रतारणाम् इव मेनिरे। हिमवन्नगरम् अवेक्ष्य स्वर्गस्य पुण्यफलत्वं वदता वेदेन वयं विप्रलब्धा इत्यर्थः । स्वर्गात् अतिरमणीयमिति भावः ॥ ४७

४७। ते ऋषयः हिमवत्पुरसौन्दर्य्यमवेक्ष्य स्वर्गादधिकमेतत् इति मेनिरे।

**ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः ।**
**अवतेरुर्जटाभारैर्लिखितानलनिश्चलैः ॥ ४८**

अन्वयः। लिखितानलनिश्चलैः जटाभारैः [ उपलक्षिताः ] ते उन्मुखद्वाःस्थवीक्षिताः सन्तः गिरेः सद्मनि वेगात् अवतेरुः ॥ ४८

त इति । लिखितानलनिश्चलैः चित्रगतज्वलननिष्पन्दैः इति वेगप्रकर्षोक्तिः । जटाभारैः उपलक्षिताः ते मुनयः । द्वारि तिष्ठन्तीति द्वाःस्थाः द्वारपालकाः । "प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः" इत्यमरः । उन्मुखैः ऊर्द्ध्वमुखैः द्वाःस्थैः वीक्षिताः सन्तः । न तु विनिवारिता इत्यर्थः । गिरेः हिमवतः सद्मनि वेगादवतेरुः अवतीर्णवन्तः ॥ ४८

४८। वेगात् ल्यब्लोपे पञ्चमी। जटाभारैः उपलक्षणे तृतीया।

**गगनादवतीर्णा सा यथावृद्धपुरःसरा ।**
**तोयान्तर्भास्करालीव रेजे मुनिपरम्परा ॥ ४९**

अन्वयः। गगनात् अवतीर्णा यथावृद्धपुरःसरा सा मुनिपरम्परा तोयान्तर्भास्करालीव रेजे ॥ ४९

गगनादिति। गगनात् अवतीर्णा अवरूढ़ा यथावृद्धम् वृद्धानुक्रमेण स्थिताः पुरःसराः अग्रेसराः यस्यां सा तथोक्ता। अनुपसर्जनाधिकारात् न ङीप्। सा मुनिपरम्परा मुनिपङ्क्तिः तोयान्तः तोयाभ्यन्तरे भास्करालो प्रतिविम्बितार्कपङ्क्तिः इव रेजे। एतेन मुनीनां तेजस्वित्वेऽपि सुखसन्दर्शनं सूचयति। भास्कराणां भूयिष्ठसम्भावनार्थं तोयान्तः इत्युक्तम् अत एव बहुत्वसिद्धिश्च ॥ ४९

४९। गगनात् पञ्चमी अपादाने। तोयग्रहणात् भास्करस्य बहुत्वं सङ्गतम्। पुरःसराः इत्यत्र स्वार्थाथभावात् न ङीप्।

**तानर्घ्यानर्घ्यमादाय दूरात् प्रत्युद्ययौ गिरिः ।**
**नमयन् सारगुरुभिः पादन्यासैर्वसुन्धराम् ॥ ५०**

अन्वयः। गिरिः अर्घ्यम् आदाय सारगुरुभिः पादन्यासैः वसुन्धरां नमयन् अर्घ्यान् तान् दूरात् प्रत्युद्ययौ ॥ ५०

तानिति। गिरिः हिमवान् अर्घम् अर्घार्थं जलम् आदाय सारगुरुभिः अन्तःसारदुर्भरैः पादन्यासैः वसुन्धरां नमयन् अधः प्रापयन्, अर्घमर्हन्ति इति अर्घ्यान् (५, १, ६६ पा०) दण्डादित्वाद्यप्रत्ययः। तान् मुनीन् दूरात् प्रत्युद्ययौ ॥ ५०

५०। दूरात् ल्यब्लोपे पञ्चमी। पादन्यासैः तृतीया हेतौ। भारेण गुरवः तैः।

**धातुताम्राधरः प्रांशुर्देवदारुबृहद्भुजः ।**
**प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति ॥ ५१**

अन्वयः। धातुताम्राधरः प्रांशुः, देवदारुबृहद्भुजः प्रकृत्यैव शिलोरस्कः इति (अतः) हिमवान् सुव्यक्तः (बभूव) ॥ ५१

सम्प्रति हिमवन्तमेव जङ्गमस्थावररूपद्वयसाधारणैः विशेषणैः विशिनष्टि,—धात्विति। धातुवत्ताम्रोऽधरः यस्य स तथोक्तः। अन्यत्र धातुरेव ताम्रोऽधरो यस्य। प्रांशुः उन्नतः उभयत्रापि समानम्। देवदारुवद् वृहन्तौ भुजौ यस्य तथोक्तः देवदारव एव वृहन्तौ भुजौ यस्य इति अन्यत्र। प्रकृत्या स्वभावेन एव शिलावदुरो यस्य स शिलोरस्कः शिलैव इति अन्यत्र। "उरःप्रभृतिभ्यः कप्" (५, ४, १५१ पा०) इति कप्। अतः हिमवानिति सुव्यक्तः वर्त्तमाने क्तः। सत्यं स एवायं हिमवानिति तद्धर्म्मप्रत्यभिज्ञानात् अवधारित इत्यर्थः॥ ५१

५१। धातुताम्रेण अधरकल्पनात् देवदारुषु विशालभुजारोपणात् पाषाणफलकेन वक्षःकल्पनात् तस्य हिमवतः स्थावरजङ्गमात्मिका प्रकृतिः दर्श्यते।

विधिप्रयुक्तसत्कारैः स्वयं मार्गस्य दर्शकः।
स तैराक्रामयामास शुद्धान्तं शुद्धकर्म्मभिः॥ ५२

अन्वयः। सः विधिप्रयुक्तसत्कारैः शुद्धकर्म्मभिः तैः स्वयं मार्गस्य दर्शकः (सन्) शुद्धान्तम् आक्रमयामास॥ ५२

विधीति। स हिमवान् विधिना शास्त्रेण प्रयुक्तसत्कारैः कृतार्च्चनैः शुद्धकर्म्मभिः अदुष्टचरितैः शुद्धान्तःप्रवेशार्हैरित्यर्थः। तैः मुनिभिः स्वयं मार्गस्य दर्शयतीति दर्शकः दर्शयिता सन्। पश्यतेर्ण्यन्तात्ण्वुल्प्रत्ययः। शुद्धान्तः अन्तःपुरम् आक्रमयामास प्रवेशयामास इत्यर्थः। अत क्रमेः अगत्यर्थत्वात् "गतिबुद्धी"त्यादीना तैः इत्यस्य न कर्म्मत्वम्॥ ५२

५२। मार्गस्य कर्म्मणि षष्ठी। तैः आक्रमयामासेति णिजन्तक्रियायोगे करणे तृतीया शुद्धानि कर्म्माणि येषां तैः।

तत्र वेत्रासनासीनान् कृतासनपरिग्रहः।
इत्युवाचेश्वरान् वाचं प्राञ्जलिर्भूधरेश्वरः॥ ५३

अन्वयः। तत्र वेत्रासनासीनान् ईश्वरान् भूधरेश्वरः कृतासनपरिग्रहः तथा प्राञ्जलिः (सन्) इति वाचम् उवाच॥ ५३

तत्रेति। तत्र शुद्धान्ते वेत्रं लताविशेषः। वेत्रासनासीनान्

वेत्रमयविष्टरोपविष्टान् ईश्वरान् प्रभून् मुनीन् भूधरेश्वरः हिमवान् कृतासनपरिग्रहः उपविष्टः सन् इत्यर्थः। प्राञ्जलिः कृताञ्जलिः सन् इति एवं वाचम् उवाच॥ ५३

५३। विशिष्टसाधुजनोचितशिष्टाचारेण तान् वेत्रासनेषु उपवेश्य साम्प्रतं हिमवान् विनीतः सन् आगमनकारणं पप्रच्छ।

अपमेघोदयं वर्षमदृष्टकुसुमं फलम्।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे॥ ५४

अन्वयः। अतर्कितोपपन्नं वो दर्शनम् अपमेघोदयं वर्षं (सत्) तथा अदृष्टकुसुमं फलञ्च (सत्) मे प्रतिभाति॥ ५४

अपेति। अतर्कितोपपन्नम् अविचारितमेवोपगतम्। अत्यन्तासम्भावितमित्यर्थः। वः युष्माकं दर्शनम् अपमेघोदयं वर्षम् अनभ्रा वृष्टिः तथा अदृष्टं कुसुमं यस्य तत् तथोक्तं फलञ्च तत् मे प्रतिभाति अतिदुर्लभं संवृत्तम् इत्यर्थः। अत्र मेघोदयकुसुमरूपकारणयोः अभावेऽपि वर्षफलरूपकार्य्ययोः उदयाभिधानात् विभावना। मुनिदर्शनस्य विशिष्टवृत्तित्वेन च रूपणात् रूपकालङ्कारश्च, इत्युभयोः संसृष्टिः॥ ५४

५४। वो युष्माकं कर्त्तरि षष्ठी। यथा मेघं विना वृष्टिरसम्भवा, कुसुमं विना फलं यथासम्भवं तथा भवताम् असम्भावितं दर्शनं मां विस्मापयतीति भावः।

मूढं बुद्धमिवात्मानं हैमीभूतमिवायसम्।
भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात्॥ ५५

अन्वयः। (अहम्) भवदनुग्रहात् आत्मानं मूढं बुद्धमिव, आयसं हैमीभूतमिव, भूमेः दिवम् आरूढमिव मन्ये॥ ५५

मूढमिति। भवदनुग्रहादात्मानं मां मूढं बुद्धं विनाज्ञातं बुद्धम् इव मूढो भूत्वा यो बुद्धवान् तम् इव। कर्त्तरि क्तः। आयसम् अयोविकारं हैमीभूतम् आयसत्वं विहाय सौवर्णत्वं प्राप्तमिव इत्यर्थः। भूमेः भूर्लोकात् दिवं स्वर्गम् आरूढमिव मन्ये। ज्ञानरूपस्थानानि अद्य मे परमुत्कृष्यन्त इति भावः॥ ५५

५५। अनुग्रहात् पञ्चमी हेतौ भवदनुग्रहेण अहमात्मानं भूतलस्थमपि स्वर्गाद्दं पाषाणमयमपि सौवर्णं किमुत परमोत्कर्षं प्राप्तमिव मन्ये। यूयं धातारः, भवताम् अनुग्रहेण सर्वं सम्भवतीति भावः।

**अद्यप्रभृति भूतानामधिगम्योऽस्मि शुद्धये।**
**यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते॥ ५६**

अन्वयः। अद्यप्रभृति (अहं भवदागमनात्) भूतानां शुद्धये अधिगम्यः अस्मि, हि (यस्मात्) यत् अर्हद्भिः अध्यासितम् तत् तीर्थं प्रचक्षते॥ ५६

<u>अद्येति।</u> अद्यप्रभृति इत आरभ्य भूतानां प्राणिनां शुद्धये अधिगम्योऽस्मि शुद्ध्यर्थिनां तीर्थभूतोऽस्मि इत्यर्थः, भवदागमनात् इति शेषः। हि यस्मात् यत् अर्हद्भिः सद्भिः अध्यासितम् अधिष्ठितं जुष्टमिति यावत्। तत्तीर्थं प्रचक्षते। "निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ" इत्यमरः॥ ५६

५६। भवदधिष्ठितं स्थानमेतत् अद्यारभ्य पुण्यं तीर्थं जातम्। सर्वे शुद्ध्यर्थिनोऽत्रागत्य एतत्स्थानस्य स्पर्शेन आत्मानं पुनन्तीति भावः।

**अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः।**
**मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः॥ ५७**

अन्वयः। (हे) द्विजोत्तमाः (अहम्) आत्मानं मूर्ध्नि गङ्गाप्रपातेन वः धौतपादाम्भसा च (एतेन) द्वयेनैव पूतम् अवैमि॥ ५७

<u>अवैमीति।</u> हे द्विजोत्तमाः! आत्मानं मां द्वयेनैव पूतं शुद्धम् अवैमि अवगच्छामि। केन द्वयेन? मूर्ध्नि गङ्गाप्रपातेन मन्दाकिनीपातेन, वः युष्माकं धौतयोः क्षालितयोः पादयोरम्भसा च। अत्र गङ्गाजलवत् पादाम्भसः पावनत्वमिति औपम्यं गम्यते, तच्च प्रस्तुताप्रस्तुतयोरिति दीपकालङ्कारः। "प्रियः प्रियतराख्यानम्" इति लक्षणात् प्रियोऽलङ्कार इति केचित्॥ ५७

५७। विष्णुपदीप्रभवेन गङ्गाम्भसा भवतामङ्घ्रिक्षालनजलेन च अहमात्मानं पूतं मन्ये। भवत्पादक्षालितजलं गङ्गाम्भसा तुल्यमिति। द्वयेन प्रपातेन च तृतीया करणे।

**जङ्गमं प्रैष्यभावे वः स्थावरं चरणाङ्कितम्।**
**विभक्तानुग्रहं मन्ये द्विरूपमपि मे वपुः॥ ५८**

अन्वयः। ( हे मुनयः! ) ( अहं ) द्विरूपमपि मे वपुः विभक्तानुग्रहं मन्ये ( तथाहि ) जङ्गमं वः प्रैष्यभावे ( स्थितं ) स्थावरं वः चरणाङ्कितम् ॥ ५८

जङ्गममिति। हे मुनयः! द्विरूपं जङ्गमस्थावरात्मकत्वात् द्विप्रकारकम् अपि मे वपुः विभक्तानुग्रहं विभज्य कृतप्रसादं मन्ये। कुतः, जङ्गमं वपुः वः युष्माकं प्रैष्यभावे कैङ्कर्य्ये स्थितमिति शेषः। प्रादूढोढ्येषैष्येषु वृद्धिर्वक्तव्ये"ति, ६, १, ८९ पा० वा० वृद्धिः। "नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः" इत्यमरः। स्थावरं वपुः चरणाङ्कितम् अयमेव हि महान् अनुग्रहो दासजनस्य यत् कर्म्मसु नियोजनं मूर्द्धनि पादन्यासश्चेति तात्पर्य्यार्थः॥ ५८

५८। अहं भवतां पदाङ्कधारणेन स्थावरात्मकम् आदेशपालनेन च आत्मानं जङ्गमात्मकं मन्ये।

भवत्सम्भावनोत्थाय परितोषाय मूर्च्छते।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे॥ ५९

अन्वयः। व्याप्तदिगन्तान्यपि मे अङ्गानि भवत्सम्भावनोत्थाय मूर्च्छते परितोषाय न प्रभवन्ति॥ ५९

भवदिति। व्याप्ता दिगन्ता यैः तानि व्याप्तदिगन्तानि। महान्त्यपीत्यर्थः। मे मम अङ्गानि भवत्सम्भावनोत्थाय युष्मदनुग्रहजन्याय मूर्च्छते व्याप्नुवते परितोषाय न प्रभवन्ति न पर्य्याप्नुवन्ति। ( २, ३, १६ पा० ) अलमर्थयोगात् चतुर्थी। यथा महत्सु अपि महात्वेषु न माति तथा मे हर्षो वर्द्धत इत्यर्थः॥ ५९

५९। भवतामागमनेन मे एतावान् हर्षोऽजायत यत् मे तावता विशालशरीरेण तं हर्षं परिमातुं न शक्नोमि इति तात्पर्य्यार्थः।

न केवलं दरीसंस्थं भास्वतां दर्शनेन वः।
अन्तर्गतमपास्तं मे रजसोऽपि परं तमः॥ ६०

अन्वयः। भास्वतां वः दर्शनेन केवलं दरीसंस्थं तमः न, अपि तु अन्तर्गतं रजसोऽपि परं मे तमः अपास्तम्॥ ६०

नेति। भास्वतां तेजस्विनां विवस्वताञ्च वः युष्माकं दर्शनेन केवलं दरीसंस्थं गुहागतं तमः ध्वान्तरूपमेव न अपास्तम्। किन्तु

मे अन्तर्गतम् अन्तरात्मगतं रजसः रजोगुणात् परम् अनन्तरं तमः अज्ञानरूपमपि अपास्तम् । रजस्तु पादन्यासैरेव अपास्तमिति भावः । प्रसिद्धः भास्वद्भिः बाह्यं तमोऽपास्यते एभिस्तु आन्तरमपि इति व्यतिरेको व्यज्यते ॥ ६०

६० । पुण्यवतां तेजस्विनां भवतामागमनेन न केवलं बाह्यं गह्वरस्थं ध्वान्तमपि तु मे आन्तरम् अज्ञानरूपं ध्वान्तमपि अपास्तमिति भावः ।

**कर्त्तव्यं वो न पश्यामि स्याच्चेत् किं नोपपद्यते ।**
**मन्ये मत्पावनायैव प्रस्थानं भवतामिह ॥ ६१**

अन्वयः । कर्त्तव्यं वः न पश्यामि, स्यात् चेत्, किं न उपपद्यते ? मत्पावनाय एव इह भवतां प्रस्थानं मन्ये ॥ ६१

कर्त्तव्यमिति । कर्त्तव्यं कार्य्यं वः युष्माकं न पश्यामि, निस्पृहत्वादिति भावः । अथ स्याच्चेत् विद्येत यदि ? किं नोपपद्यते किं नाम न सम्भवति, सर्वं सुलभमेव इत्यर्थः । अथवा किमत्र प्रयोजनचिन्तया इत्याह,—मत्पावनाय मच्छोधनाय एव भवतामिह विषये प्रस्थानम् । इमं देशमुद्दिश्य इदं प्रयाणम् इत्यर्थः । मन्ये तर्कयामि ॥ ६१

६१ । मत्पावनाय चतुर्थी निमित्तार्थे । भवतां षष्ठी कर्त्तरि । मां पावयितुं यूयमत्र आगच्छत अन्यथा संसारासक्तिशून्यत्वात् भवतामन्यप्रयोजनं न सम्भवेदिति ।

**तथापि तावत् कस्मिंश्चिदाज्ञां मे दातुमर्हथ ।**
**विनियोगप्रसादा हि किङ्कराः प्रभविष्णुषु ॥ ६२**

अन्वयः । तथापि कस्मिंश्चित् ( कर्म्मणि ) तावत् मे आज्ञां दातुम् अर्हथ, हि (यस्मात्) किङ्कराः प्रभविष्णुषु विनियोगप्रसादाः ( भवन्ति ) ॥ ६२

तथापीति । तथापि भवतां निस्पृहत्वेऽपि कस्मिंश्चित् कर्म्मणि इति शेषः । आज्ञाम् इदं कुर्वितति आदेशं तावत् इदानीं मे मह्यं दातुम् अर्हथ, मदनुग्रहबुद्धेरिति भावः । हि यस्मात् किङ्कराः भृत्याः, प्रभवन्तीति प्रभविष्णुषु प्रभुषु विषये । "भुवश्च" ( ३, २, १३८ पा० ) इति इष्णुच्प्रत्ययः । विशेषेण नियोगः विनियोगः प्रेषणमेव

प्रसादः अनुग्रहः येषां ते तथोक्ताः । अन्यथा स्वस्वामिभावो निष्फल इति भावः ॥ ६२

६२। तावद्दत्र निरनुबन्धः । निस्पृहा भवन्तः कयापि आज्ञया मयि प्रसीदन्तु, अन्यथा स्वामिभृत्ययोः सम्बन्धः निष्फलः स्यात् ।

**एते वयममी दाराः कन्येयं कुलजीवितम् ।**
**ब्रूत येनात्र वः कार्य्यमनास्था बाह्यवस्तुषु ॥ ६३**

अन्वयः । एते वयम्, अमी दाराः, कुलजीवितम् इयं कन्या, अत्र येन वः कार्य्यम् ( तं ) ब्रूत, बाह्यवस्तुषु अनास्था ॥ ६३

एत इति । किं बहुना एते वयम्, अमी दाराः, इयं कुलस्य जीवितं प्राणभूता परमप्रेमास्पदमित्यर्थः । कन्या अत एषां मध्ये येन जनेन वः कार्य्यं प्रयोजनं ब्रूत तमिति शेषः । येन सोऽपि दीयत इति भावः । रत्नहिरण्यादिकन्तु न मे गण्यमित्याह— बाह्यवस्तुषु कनकरत्नादिषु अनास्था अनादरः । प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते । अदेयं न किञ्चित् अस्तीति भावः ॥ ६३

६३। कुलजीवितमिति विधेयत्वान्नपुंसकम् । एते इत्यादिषु क्रियाराहित्ये प्रथमा । वः कर्त्तरि षष्ठी । रत्नहिरण्यादीनां का कथा, एषां मध्ये येन भवतां प्रयोजनं तं युष्मभ्यं दातुं शक्नोमि किमन्यदिति । अत्र निर्द्धारणे सप्तमी ।

**इत्यूचिवांस्तमेवार्थं गुहामुखविसर्पिणा ।**
**द्विरिव प्रतिशब्देन व्याजहार हिमालयः ॥ ६४**

अन्वयः । इति ऊचिवान् हिमालयः गुहामुखविसर्पिणा प्रतिशब्देन तमेव अर्थं द्विरिव व्याजहार ॥ ६४

इतीति । इत्यूचिवान् उक्तवान् । वचेः क्वसुप्रत्ययः । हिमालयः हिमवान् गुहानां मुखेषु विवरेषु विसर्पतीति तथोक्तेन प्रतिशब्देन तमेव पूर्वोक्तमेव अर्थं द्विः द्विवारम् । "द्वित्रिचतुर्भ्यः सुजि"ति ( ५, ४, १८ पा० ) सुच्प्रत्ययः । व्याजहार बभाषे ॥ ६४

६४। हिमवतोऽद्य वाक्यं प्रति तेषां चेतसोऽनभिनिवेशः सम्भवति तर्हि—तद्वाक्यं करणाय प्रतिध्वनिना तदेव वाक्यं पुनः कथयति एतेन हिमवद्वाक्यानां सत्यतां द्रढयतीति भावः ।

अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु ।
ऋषयो नोदयामासुः प्रत्युवाच स भूधरम् ॥ ६५

अन्वयः। अथ ऋषयः उदाहरणवस्तुषु अग्रण्यम् अङ्गिरसं नोदयामासुः, सः भूधरं प्रत्युवाच ॥ ६५

अथेति। अथ अनन्तरम् ऋषयः उदाहरणानि कथाप्रसङ्गाः त एव वस्तूनि अर्थाः तेषु अग्रं नयतीति अग्रणीः तम् अग्रण्यम् प्रगल्भम्। "सत्सूद्विषे"त्यादिना (३, १, ६१ पा०) क्विप्। "अग्रग्रामाभ्यां नयतेरिति वक्तव्य"मिति णत्वम्। अङ्गिरसं नाम ऋषिं नोदयामासुः प्रतिवक्तुं प्रेरयामासुः। सः अङ्गिराः भूधरं हिमवन्तं प्रत्युवाच ॥ ६५

६५। कथाप्रसङ्गावसरमालोक्य—सर्वैरन्यैः ऋषिभिः प्रेरितः अङ्गिराः तं हिमवन्तं वक्तुमुपचक्रमे।

उपपन्नमिदं सर्वमतः परमपि त्वयि ।
मनसः शिखराणाञ्च सदृशी ते समुन्नतिः ॥ ६६

अन्वयः। इदं सर्वम् अतः परमपि त्वयि उपपन्नम्, (तथाहि) ते मनसः शिखराणाञ्च समुन्नतिः सदृशी ॥ ६६

उपपन्नमिति। इदम् एते, वयम् अमी दारा इत्याद्युक्तं सर्वम् अतः परम् अतोऽधिकमपि त्वयि उपपन्नं युज्यते। तथाहि ते मनसः शिखराणाञ्च समुन्नतिः सदृशी शिखराणीव मनो महोन्नतमित्यर्थः। किन्नाम दुष्करमुन्नतचित्तानामिति भावः। प्रस्तुताप्रस्तुतयोर्मनःशिखरयोः औपम्यस्य गम्यत्वाद्दीपकालङ्कारः ॥ ६६

६६। शिखरवदत्युन्नतचित्तस्य ते अतः यत् कथितं तस्मात् परम् अधिकम् उपपन्नं प्रतिपन्नम्। अत्युदारचित्तस्य ते दारादीनां परोपकाराय दानमपि सम्भवेदिति वयं मन्यामहे।

स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथाहि ते ।
चराचराणां भूतानां कुक्षिराधारतां गतः ॥ ६७

अन्वयः। त्वां स्थावरात्मानं विष्णुम् आहुः स्थाने, तथाहि ते कुक्षिः चराचराणां भूतानाम् आधारतां गतः ॥ ६७

स्थान इति। त्वां स्थावरात्मानं स्थावररूपिणं विष्णुमाहुः। "स्थावराणां हिमालय"इति (१० अ० २५ श्लो०) गीतावचनात्। स्थाने युक्तम्। युक्तार्थे अव्ययमेतत्। "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः। तथाहि ते तव कुक्षिः चराचराणां जङ्गमस्थावररूपिणां भूतानां पृथिव्यादीनाम् आधारतां गतः। तव इव विष्णोः कुक्षि-रेवम्भूत इति भावः॥ ६७

६७। स्थावरजङ्गमात्मकानां भूतानाम् आधारत्वं ते कुक्षिः प्राप्तवान्, अतः त्वां विष्णुं कथयन्तीति युक्तम्।

**गामधास्यत् कथं नागो मृणालमृदुभिः फणैः।**
**आ रसातलमूलात् त्वमवालम्बिष्यथा न चेत् ६८**

अन्वयः। नागः मृणालमृदुभिः फणैः गां कथम् अधास्यत् त्वम् आरसातलमूलात् नः अवालम्बिष्यथाः चेत्?॥ ६८

गामिति। नागः शेषाहिः मृणालमृदुभिः विसकोमलैः फणैः गां भुवं कथम् अधास्यत् धारयेत्, त्वम् आ रसातलमूलात् पाताल-पर्य्यन्तम्। विकल्पादसमासः। नावालम्बिष्यथाश्चेत् पादैर्नालम्बेथा यदि। त्वदवलम्बनात् एव भुजगराजोऽपि भुवं बिभर्त्तीत्यर्थः। अत्र क्रियातिपत्त्यभावात् लृङ्प्रयोगश्चिन्त्यः॥ ६८

६८। शेषः एतावत्याः पृथिव्याः भारं वोढुं न शक्नुयात् चेत्, त्वं तां नावलम्बेथाः। एतेन ते सुमहती सारवत्ता सूच्यते। फणैस्तृतीया करणे।

**अच्छिन्नामलसन्तानाः समुद्रोर्म्म्यनिवारिताः।**
**पुनन्ति लोकान् पुण्यत्वात् कीर्त्तयः सरितश्च ते ६९**

अन्वयः। अच्छिन्नामलसन्तानाः समुद्रोर्म्म्यनिवारिताः ते कीर्त्तयः सरितश्च पुण्यत्वात् लोकान् पुनन्ति॥ ६९

अच्छिन्नेति। अच्छिन्नाः अविच्छिन्नाः अमलाश्च सन्तानाः प्रबन्धाः प्रवाहाश्च यासां ताः तथोक्ताः समुद्रोर्म्मिभिः अनिवारिताः पारगमनादन्तःप्रवेशाच्चेति भावः। ते तव कीर्त्तयः सरितश्च गङ्गादयः पुण्यत्वात् पवित्रत्वात् लोकान् पुनन्ति पावयन्ति।

लोकपावनाः खलु पुण्यश्लोका इति भावः। केवलप्रकृतविषयस्तुल्ययोगितालङ्कारः॥ ६९

६९। पुण्यत्वात् हेतौ पञ्चमी। देवानां गङ्गायाञ्च अवस्थानात् ते पावयितुं शक्तिरस्ति। यः अन्यान् पावयितुं शक्नोति स एव महानित्यर्थः।

यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिनः।
प्रभवेण द्वितीयेन तथैवोच्छिरसा त्वया॥ ७०

अन्वयः। गङ्गा प्रभवेण परमेष्ठिनः पादेन यथैव श्लाघ्यते, तथैव द्वितीयेन प्रभवेण उच्छिरसा त्वया श्लाघ्यते॥ ७०

यथेति। गङ्गा भागीरथी प्रभवत्यस्मादिति प्रभवः तेन कारणेन परमे तिष्ठतीति परमेष्ठिनः विष्णोः। परमे कित् (४ १० उ०) प्रत्ययः। "तत्पुरुषे कृति बहुल"मिति (६, ३, १४ पा०) अलुक्। "परमे वहिर्दिव्यग्निभ्यः स्थः"इति (८, ३, ९७ पा०) षत्वम्। पादेन चरणेन यथैव श्लाघ्यते प्रशस्यते तथैव द्वितीयेन प्रभवेन उच्छिरसा त्वया श्लाघ्यते हरिचरणवत् तीर्थस्यापि तीर्थभूतस्त्वमिति भावः॥ ७०

७०। पादेन त्वया च तृतीया कर्त्तरि। विष्णुपदोद्भवत्वात् गङ्गाया महिमा भुवनेषु यथा विख्यातः, तथा उच्चैः शीर्षत्वात् ते महिमा ख्यात इति भावः। विचारः। ननु श्लाघधातोः कर्म्मणि न कथं सम्प्रदानं स्यात्, यथा नृपाय श्लाघते बन्दी। सत्यमेव गङ्गाया कर्म्मणि प्रशंसागुणवचनाभावेन विष्णुपदे तदवस्थानादिति भावः।

तिर्य्यगूर्द्ध्वमधस्ताच्च व्यापको महिमा हरेः।
त्रिविक्रमोद्यतस्यासीत् स तु स्वाभाविकस्तव॥ ७१

अन्वयः। हरेः तिर्य्यक् ऊर्द्ध्वम् अधस्ताच्च व्यापको महिमा त्रिविक्रमोद्यतस्य आसीत्, तव तु सः स्वाभाविकः॥ ७१

तिर्य्यगिति। तिर्य्यगूर्द्ध्वमधस्ताच्च व्यापकः सर्वव्यापीत्यर्थः। महिमा महत्त्वं हरेः विष्णोः त्रिषु विक्रमेषु उद्यतस्य सतः आसीत्। त्रिविक्रमोद्यतस्यापि कदाचिदेव न तु सर्वदा इत्यर्थः। तव तु व्यापको महिमा स्वाभाविकः नित्यसिद्ध इत्यर्थः॥ ७१

७१। त्रिविक्रमस्य विष्णोः महिम्नः तव महिमा अधिकः। स कदाचित् त्रिविक्रमः आसीत्, त्वन्तु सर्व्वदैव व्यापकः।

यज्ञभागभुजां मध्ये पदमातस्थुषा त्वया ।
उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम् ॥ ७२

अन्वयः । यज्ञभागभुजां मध्ये पदम् आतस्थुषा त्वया उच्चैः हिरण्मयं सुमेरोः शृङ्गं वितथीकृतम् ॥ ७२

यज्ञेति । यज्ञभागभुजाम् इन्द्रादीनां मध्ये पदम् आतस्थुषा निहितवता त्वया उच्चैः उन्नतं हिरण्यस्य विकारः हिरण्मयं "दाण्डिनायनहास्तिनायने"त्यादिना (६, ४, १७४ पा०) निपातनात् साधुः । सुमेरोः शृङ्गं शिखरं प्राधान्यञ्च ध्वन्यते । "शृङ्गं प्राधान्यसान्वोश्च" इत्यमरः । वितथीकृतं व्यर्थीकृतं, तस्य यज्ञभागाभावादिति भावः । अस्य तु तत्सद्भावे प्रमाणं "हिमवतो हस्ती" इति श्रुतिः ॥ ७२

७२ । ते यज्ञभागोऽस्ति सुमेरोस्तु यज्ञभागः नास्ति, अवयवेन सम्पदा च स त्वदधिकोऽपि यज्ञभागलाभस्य अभावात् स नाधिक इति भावः ।

काठिन्यं स्थावरे काये भवता सर्वमर्पितम् ।
इदन्तु ते भक्तिनम्रं सतामाराधनं वपुः ॥ ७३

अन्वयः । भवता सर्वं काठिन्यं स्थावरे काये अर्पितम्, सताम् आराधनम् इदं ते वपुस्तु भक्तिनम्रम् ॥ ७३

काठिन्यमिति । भवता सर्वं काठिन्यम् अनम्रत्वमित्यर्थः । स्थावरे स्थिरे काये, शिलामये इत्यर्थः । अर्पितं न्यस्तम् । सताम् अर्हताम् आराधनं पूजासाधनं ते इदं वपुस्तु जङ्गममित्यर्थः, भक्तिनम्रं काठिन्यलेशोऽपि अत्र नास्ति, अन्यथा नम्रत्वासम्भवादित्यर्थः । तथाच असाधारण्यं ध्वन्यते ॥ ७३

७३ । स्थावरशरीरस्त्वं सर्वेषामनमनीयः, जङ्गमदेहस्त्वं भक्तिनम्रात्ममूर्त्तिः । अतस्त्वं सर्वेभ्यो सर्वगुणेभ्यश्चाधिकः इति सरलार्थः ।

तदागमनकार्य्यं नः शृणु कार्य्यं तवैव तत् ।
श्रेयसामुपदेशात्तु वयमत्रांशभागिनः ॥ ७४

अन्वयः । तत् नः आगमनकार्य्यं शृणु तत् कार्य्यं तवैव, वयन्तु श्रेयसाम् उपदेशात् अत्र अंशभागिनः ॥ ७४

तदिति । तत् तस्मात् नः अस्माकम् आगमनस्य कार्य्यं प्रयोजनं शृणु, तत्कार्य्यञ्च तवैव. न तु अस्माकमित्यवधारणार्थं एवकारः । वयन्तु श्रेयसाम् उपदेशात् अत्र कार्य्ये अंशभागिनः । त्वमेव अत्र फलभाक्, वयम् उपदेष्टार इति भावः ॥ ७४

७४ । नः कर्त्तरि षष्ठी । तवेति षष्ठी कर्त्तरि । श्रेयसां कर्म्मणि षष्ठी । अस्मदागमनप्रयोजनं तव कर्त्तव्यम् च आकर्णय । केवलं मङ्गलोपदेशकर्त्तारोऽयम्, अस्माकं त्वन्तु फलभाग् भविष्यतीति भावः ।

अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरम् ।
शब्दमीश्वर इत्युच्चैः सार्द्धचन्द्रं बिभर्त्ति यः ॥ ७५

अन्वयः । यः अणिमादिगुणोपेतम् अस्पृष्टपुरुषान्तरम् उच्चैः ईश्वर इति शब्दं सार्द्धचन्द्रं बिभर्त्ति ॥ ७५

कार्य्यमेवाह अणिमेत्यादिना,—अणिमेति । यः शम्भुः अणिमादिगुणोपेतम् अणिमादिभिः अष्टभिः गुणैः वाच्यभूतैः उपेतम् अष्टैश्वर्य्यवाचकम् इत्यर्थः । अत एव अस्पृष्टं पुरुषान्तरं येन तं तथोक्तं पुरुषान्तरस्यानभिधायकं तस्यैव एवंगुणत्वादित्यर्थः । उच्चैः परमम् ईश्वर इति शब्दं सार्द्धचन्द्रं अर्द्धचन्द्रयुक्तम् अर्द्धचन्द्रस्य इत्यर्थः, बिभर्त्ति ॥ ७५ ।

७५ । साम्प्रतं जामातुः अणिमादिभिः ऐश्वर्य्यवत्ताम्, ईश्वर इत्यनेन शक्तिमत्ताम् अर्द्धचन्द्रेण गुणवत्तां च उक्त्वा आगमनकारणं कथयन्तीति भावः ।

कलितान्योन्यसामर्थ्यैः पृथिव्यादिभिरात्मभिः ।
येनेदं ध्रियते विश्वं धुर्य्यैर्यानमिवाध्वनि ॥ ७६

अन्वयः । येन कलितान्योन्यसामर्थ्यैः पृथिव्यादिभिः आत्मभिः इदं विश्वम् अध्वनि धुर्य्यैः यानमिव ध्रियते ॥ ७६

कलितेति । येन शम्भुना कलितं धृतिसंग्रहादिस्वस्वगुणसम्पादितम् अन्योन्यसामर्थ्यं परस्परसहकाररूपं यैः तथोक्तैः । स्वस्वरूपसामर्थ्यम् अन्योन्याधेयमेवेति भावः । पृथिव्यादिभिः आत्मभिः मूर्त्तिभिरित्यर्थः । इदं व्यक्तं विश्वं धुरं वहन्तीति धुर्य्यैः

अश्वैः। "धुरो यड्ढकौ"विति ( ४, ४, ७७ पा० ) यत्प्रत्ययः। अश्वान यानं रथ एव ध्रियते ॥ ७६

७६। धुर्य्याः यथा पथि यानं वहन्ति तथा अयम् अष्टमूर्त्तिः शिवः अष्टविधाभिः शक्तिभिः विश्वमिदं धरति इत्यत एव भूभारधारणक्षमा शक्तिरस्यास्तीति भावः।

योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्त्तिनम्।
अनावृत्तिभयं यस्य पदमाहुर्म्मनीषिणः॥ ७७

अन्वयः। योगिनः क्षेत्राभ्यन्तरवर्त्तिनं यं विचिन्वन्ति, मनीषिणः यस्य पदम् अनावृत्ति-भयम् आहुः ॥ ७७

योगिन इति। योगिनः अध्यात्मवेदिनः क्षेत्राभ्यन्तरवर्त्तिनं शरीरान्तश्चरं सर्वभूतान्तर्यामिनं परमात्मस्वरूपिणम् इत्यर्थः। "क्षेत्रं पत्नीशरीरयोः" इत्यमरः। यं शम्भुं विचिन्वन्ति मृगयन्ते। मनीषिणः विद्वांसः यस्य शम्भोः पदं स्थानम् अविद्यमानम् आवृत्तेः पुनः संसारापत्तेः भयं यत्र तत् तथाभूतम् आहुः॥ ७७

७७। योगिनामुपासनीयस्य यस्य पदमेव मुक्तिरिति मनीषिणः कथयन्तीति तस्य गुरु-त्तां दर्शयन्तीति भावः।

स ते दुहितरं साक्षात् साक्षी विश्वस्य कर्म्मणाम्।
वृणुते वरदः शम्भुरस्मत्संक्रामितैः पदैः॥ ७८

अन्वयः। विश्वस्य कर्म्मणां साक्षी, वरदः स शम्भुः अस्मत्संक्रामितैः पदैः ते दुहितरं साक्षात् वृणुते ॥ ७८

स इति। विश्वस्य जगतः कर्मणां साक्षी द्रष्टा। "साक्षाद् द्रष्टरि संज्ञाया"मिति ( ५, २, ६१ पा० ) इनिप्रत्ययः। वरान् इष्टान् ददातीति वरदः। "आतोऽनुपसर्गे कः" ( ३, २, ३ पा० ) इति कप्रत्ययः। सः पूर्वोक्तः शम्भुः अस्मत्सङ्क्रामितैः पदैः अस्मासु निवेशितैर्वाक्यैः ते दुहितरं साक्षात् वृणुते अस्मन्मुखेन स्वयमेव याचत इत्यर्थः॥ ७८

७८। पदैः करणे तृतीया। ते दुहितुरभिलाषं पूरयितुं शक्तः, सः अस्मान् माध्य-स्थेन ते जगत्प्रसविनीं दुहितरं वृणुते इत्येतत् आगमनप्रयोजनं जानीहि।

तमर्थमिव भारत्या सुतया योक्तुमर्हसि ।
अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता ॥ ७९

अन्वयः । तं भारत्या अर्थमिव सुतया योक्तुम् अर्हसि ( तथाहि ) सद्भर्तृप्रतिपादिता कन्या पितुः अशोच्या हि ॥ ७९

तमिति । तं शम्भुं भारत्या वाचा अर्थम् अभिधेयम् इव सुतया दुहित्रा योक्तुं सङ्घटयितुम् अर्हसि । अत्र वागर्थयोः उपमानत्वसामर्थ्याच्छिवयोर्नित्ययोगो विवक्षित इत्युक्तम् । "वागर्थाविव सम्पृक्तौ"इत्यत्रापि । तथाहि सद्भर्त्रे प्रतिपादिता दत्ता कन्या पितुः अशोच्या ॥ ७९

७९ । शिवेन सह ते दुहितुः विवाहः चेत् सम्पत्स्यते, तर्हि कन्यार्थे त्वं कदापि न शोचेः सद्भर्तृप्रतिपादनादिति भावः ।

यावन्त्येतानि भूतानि स्थावराणि चराणि च ।
मातरं कल्पयन्त्वेनामीशो हि जगतः पिता ॥ ८०

अन्वयः । स्थावराणि चराणि च यावन्ति एतानि भूतानि एनां मातरं कल्पयन्तु, हि ( यस्मात् ) ईशः जगतः पिता ॥ ८०

गुणान्तरमप्याह,—यावन्तीति । स्थावराणि चराणि च यावन्त्येतानि भूतानि सन्तीति शेषः । सर्वाणि भूतानि इत्यर्थः, एनां ते दुहितरं मातरं कल्पयन्तु । हि यस्मात् ईशः जगतः पिता । पितृदारेषु मातृभावो न्याय्य इति भावः ॥ ८०

८० । शिवः जगतां पितृत्वेन प्रतिपादितः, इयं च जगतां मातृत्वेन विदिता, अतः अनयोर्विवाहः अस्माभिर्भवद्भिः च योजनीयः इति ।

प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् ।
चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिः ॥ ८१

अन्वयः । विबुधाः शितिकण्ठाय प्रणम्य तदनन्तरम् अस्याः चरणौ चूडामणिमरीचिभिः रञ्जयन्तु ॥ ८१

प्रणम्येति । विबुधाः देवाः शितिकण्ठाय शिवाय प्रणम्य तदनन्तरं नीलकण्ठप्रणामानन्तरम् अस्याश्चरणौ चूडामणि-

मरीचिभिः रञ्जयन्तु, ईश्वरपरिग्रहात् अखिलदेवतावन्द्या भवतु इत्यर्थः ॥ ८१

८१। सर्वे देवाः अस्य आज्ञावहा भवन्ति, तव दुहिता चेत् भवपत्नी भवेत् तर्हि सर्वे देवाः इमां प्रणमन्ति, इतः परं पिता दुहितुः किं सुखम् आशंसते एतेन गुणशक्तिमत्तामस्य प्रकटयन्तीति भावः ।

**उमा वधूर्भवान् दाता याचितार इमे वयम् ।**
**वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः ॥ ८२**

अन्वयः । उमा वधूः भवान् दाता, इमे वयं याचितारः, शम्भुः वरः, एष विधिः त्वत्कुलोदभूतये अलं हि ॥ ८२

उमेति । उमा वधूः, भवान् दाता, इमे वयं याचितारः प्रार्थकाः शम्भुः वरः वोढ़ा, एषः विधिः, एषा सामग्री त्वत्कुलस्य उद्भूतये उत्कर्षाय अलं पर्याप्तं हि। "नमःस्वस्तिस्वाहास्वधे"त्यादिना (२, ३, १६ पा० ) चतुर्थी ॥ ८२

८२। जगज्जननी ते दुहिता वधूः, धातृत्वमापन्ना वयं वैवाहिकमाध्यस्थेन त्वत्सकाशे समागताः जगत्कर्त्ता स्वयं शिव एव वरः, त्वं दाता अस्मात् परं ते भाग्यवत्ता कीदृशी स्यात् ?

**अस्तोतुः स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः ।**
**सुतासम्बन्धविधिना भव विश्वगुरोर्गुरुः ॥ ८३**

अन्वयः । अस्तोतुः स्तूयमानस्य वन्द्यस्य अनन्यवन्दिनः विश्वगुरोः सुतासम्बन्धविधिना गुरुः भव ॥ ८३

अस्तोतुरिति । स्वयमन्यस्तोता न भवतीति अस्तोतुः किन्तु स्तूयमानस्य सर्वस्तुत्यस्य वन्द्यस्य जगद्वन्द्यस्य स्वयमन्यं न वन्दत इति अनन्यवन्दिनः विश्वगुरोः देवस्य सुतासम्बन्धविधिना यौवनसम्बन्धाचरणेन गुरुर्भव । यो नान्यं स्तौति न वन्दते तस्यापि त्वं स्तुत्यो वन्द्यश्चेत्यहो तव भाग्यवत्ता इत्यर्थः ॥ ८३

८३। शिवाय कन्यादानेन जगद्वन्द्यस्य तस्य वन्दनीयो भविष्यसीतीयमेव ते योगिजनदुर्लभा भाग्यवत्ता अनायासेनैव सम्पत्स्यते । किं तपस्यया किं वा सम्पदेति भावः ।

**एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।**
**लीलाकमलपत्राणि गणयामास पार्वती ॥ ८४**

अन्वयः। देवर्षौ एवंवादिनि ( सति ) पार्व्वती पितुः पार्श्वे अधोमुखी ( सती ) लीलाकमलपत्राणि गणयामास ॥ ८४

एवमिति। देवर्षौ अङ्गिरसि एवंवादिनि सति पार्वती पितुः पार्श्वे अधोमुखी सती लज्जयेति शेषः। लीलाकमलपत्राणि गणयामास सञ्चख्यौ। लज्जावशात् कमलदलगणनाव्याजेन हर्षं जुगोप इत्यर्थः। अनेन अवहित्थाख्यः सञ्चारी भावः उक्तः। तदुक्तम्, "अवहित्था तु लज्जादेर्हर्षाद्याकारगोपनम्" इति ॥ ८४

८४। शैवचापल्येन स्वामिगुणग्रामश्रवणोत्सुका पार्वती तस्मिन् अवसरे कमलदलगणनाव्याजेन तत्रैव स्थित्वा सर्वं शुश्राव।

शैलः सम्पूर्णकामोऽपि मेनामुखमुदैक्षत।
प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः॥ ८५

अन्वयः। शैलः सम्पूर्णकामोऽपि मेनामुखम् उदैक्षत, तथाहि कुटुम्बिनः कन्यार्थेषु प्रायेण गृहिणीनेत्राः ( भवन्ति ) ॥ ८५

शैल इति। शैलः हिमवान् सम्पूर्णकामोऽपि दातुं कृतनिश्चयोऽपि इत्यर्थः, मेनामुखम् उदैक्षत, उचितोत्तरजिज्ञासया इति भावः। तथाहि प्रायेण कुटुम्बिनः गृहस्थाः कन्यार्थेषु कन्याप्रयोजनेषु गृहिण्येव नेत्रं कार्य्यज्ञानकारणं येषां ते तथाक्ताः, कलत्रप्रधानवृत्तय इत्यर्थः॥ ८५

८५। हिमवान् ऋषीणां वाक्येन शिवाय कन्यां दातुमिच्छन् मेनाया अभिप्रायं ज्ञातुं तामैक्षत, कन्यापुत्रयोः विवाहेषु कुटुम्बिनीनां प्राधान्यं चिरमस्तीति भावः।

मेने मेनापि तत्सर्वं पत्युः कार्य्यमभीप्सितम्।
भवन्त्यव्यभिचारिण्यो भर्त्तुरिष्टे पतिव्रताः॥ ८६

अन्वयः। मेनापि पत्युः तत् सर्व्वम् अभीप्सित कार्य्यं मेने ( तथाहि ) पतिव्रताः भर्त्तुः इष्टे अव्यभिचारिण्यः भवन्ति ॥ ८६

मेने इति। मेनापि पत्युः हिमालयस्य तत्सर्वम् अभीप्सितं कार्य्यं मेने अङ्गीचकार तथाहि पतिः एव व्रतं यासां ताः भर्त्तुः इष्टेऽभीप्सिते न विद्यते व्यभिचारो यासां ता अव्यभिचारिण्यो भवन्ति, भर्त्तृचित्ताभिज्ञा भवन्तीति भावः॥ ८६

८६। मेनापि स्वामिनः अभीप्सितं पातिव्रत्येन अनुमन्यते, न तु केवलं सर्वगुणसम्पन्नत्वात् जामातृत्वेन शिवग्रहणमुचितमिति धिया सा पतिमनुसरतीति भावः।

**इदमत्रोत्तरं न्याय्यमिति बुद्ध्या विमृष्य सः।**
**आददे वचसामन्ते मङ्गलालङ्कृतां सुताम्॥ ८७**

अन्वयः। सः वचसाम् अन्ते अत्र इदं न्याय्यम् उत्तरम् इति बुद्ध्या विमृष्य मङ्गलालङ्कृतां सुताम् आददे॥ ८७

इदमिति। सः हिमवान् वचसामन्ते मुनिवाक्यावसाने अत्र मुनिवाक्ये इदम् उत्तरश्लोके वक्ष्यमाणं दानमेव न्याय्यं न्यायात् अनपेतम् उत्तरमिति बुद्ध्या चित्तेन विमृष्य विचिन्त्य मङ्गलं यथा तथा अलङ्कृतां मङ्गलालङ्कृतां सुताम् आददे हस्ताभ्यां जग्राह॥ ८७

८७। साम्प्रतं वाग्दानेन तान् ऋषीन् विश्वसयितुं कन्यां लौकिकरीत्या माङ्गलिकाभरणभूषितां गृहीत्वा ऋषीणां पुरतः आनीय वक्ष्यमाणं वचः उवाच।

**एहि विश्वात्मने वत्से! भिक्षासि परिकल्पिता।**
**अर्थिनो मुनयः प्राप्तं गृहमेधिफलं मया॥ ८८**

अन्वयः। हे वत्से! एहि, विश्वात्मने भिक्षा परिकल्पितासि, मुनयः अर्थिनः, मया गृहमेधिफलम् प्राप्तम्॥ ८८

एह्येति। हे वत्से! पुत्रि! एहि आगच्छ, त्वम् विश्वात्मने शिवाय भिक्षा परिकल्पितासि निश्चितासि। "रत्नादिस्तस्वपर्य्यन्तं सर्वं भिक्षा तपस्विनः" इति वचनादिति भावः। अर्थिनः याचतारः मुनयः। मया गृहमेधिनः गृहस्थस्य फलं प्राप्तम्। इह परत्र च तारकत्वात् पात्रे कन्यादानं गार्हस्थ्यस्य फलमित्यर्थः॥ ८८

८८। हे वत्से! आगच्छ, एषाम् ऋषीणां वाक्येन त्वं योगिने शिवाय भिक्षा निश्चितासि एतत् प्रति ते का मतिः?। तादृशे सत्पात्रे कन्यादानेन गार्हस्थ्यं फलम् अहं लप्स्ये अस्ति ते काप्यापत्तिः किम्?।

**एतावदुक्त्वा तनयामृषीनाह महीधरः।**
**इयं नमति वः सर्वान् त्रिलोचनवधूरिति॥ ८९**

अन्वयः। महीधरः तनयाम् एतावत् उक्त्वा ऋषीन् आह, इयं त्रिलोचनवधूः सर्वान् वः नमति इति॥ ८९

एतावदिति । महीधरः हिमवान् तनयाम् एतावत् पूर्वोक्तम् उक्त्वा ऋषीनाह, किमिति ? इयं त्रिलोचनवधूः त्र्यम्बकपत्नी वः सर्वान् नमतीति । त्रिलोचनवधूः इति सिद्धवदभिधानेन अविप्रतिपन्नं दानमिति सूचयति ॥ ८९

८९ । इयं शिववधूः भवतः प्रणमतीति स्पष्टीभूतया गिरा तेषां सन्देहं दूरीकृत्य तान् तोषयतीति भावः ।

**ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः ।**
**आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम् ॥ ९०**

अन्वयः । ते ईप्सितार्थक्रियोदारं गिरेः वचः अभिनन्द्य पुरःपाकाभिः आशीर्भिः अम्बिकाम् एधयामासुः ॥ ९०

ईप्सितेति । ते मुनयः ईप्सितार्थक्रियया इष्टार्थक्रियया उदारं महत् । "उदारो दातृमहतोः" इत्यमरः । गिरेः हिमवतः वचः वचनम् अभिनन्द्य साध्विति संस्तुत्य अम्बिकाम् अम्बाम् । पच्यत इति पाकः फलम् । पुरःपाकाभिः पुरस्कृतफलाभिः आशीर्भिः आशीर्वादैः एधयामासुः संवर्द्धयामासुः ॥ ९०

९० । ते ऋषयः अभीष्टसाधनेन तुष्टाः सन्तः हिमवतः वाक्यं वाग्दानरूपम् आदरेण गृहीत्वा शिष्टाचारक्रमेण उमाम् आशीर्व्वादेन वर्द्धयामासुः इति भावः ।

**तां प्रणामादरस्रस्तजाम्बूनदवतंसकाम् ।**
**अङ्कमारोपयामास लज्जमानामरुन्धती ॥ ९१**

अन्वयः । प्रणामादरस्रस्तजाम्बूनदवतंसकां लज्जमानां ताम् अरुन्धती अङ्कम् आरोपयामास ॥ ९१

तामिति । प्रणामादरेण नमस्कारसत्त्वरया स्रस्ते जाम्बूनदे सुवर्णविकारौ वतंसके कनककुण्डले यस्याः ताम् लज्जमानां ताम् अम्बिकाम् अरुन्धती अङ्कम् आरोपयामास । "रुहः पोऽन्यतरस्या"मिति ( ७, ३, ४३ पा० ) पकारः ॥ ९१

९१ । तान् सर्व्वान् प्रणमन्तीं तामम्बिकामरुन्धती अङ्के स्थापितवती, यौवनभारावनतां तां स्प्रष्टुमृषयः नेपुरिति गूढार्थः ।

**तन्मातरञ्चाश्रुमुखीं दुहितृस्नेहविक्लवाम् ।**
**वरस्यानन्यपूर्वस्य विशोकामकरोद्गुणैः ॥ ९२**

अन्वयः। दुहितृस्नेहविक्लवाम् अश्रुमुखीं तन्मातरञ्च अनन्यपूर्व्वस्य वरस्य गुणैः विशोकाम् अकरोत् ॥ ९२

तदिति। दुहितृस्नेहेन पुत्त्रिकाप्रेम्णा विक्लवां वियोक्ष्यत इति भीताम्। अत एव अश्रूणि मुखे यस्याः ताम् अश्रुमुखीं तस्याः अम्बिकायाः मातरं तन्मातरं मेनाञ्च अन्या पूर्वं यस्यास्ति सोऽन्य-पूर्वः। सर्वनाम्नो वृत्तिविषये पुंवद्भाव इति पूर्वपदस्य पुंवद्भावः। स न भवतीति अनन्यपूर्वः तस्य अनन्यपूर्वस्य सापत्न्यदुःखम् अकुर्वत इत्यर्थः। वरस्य वाढुः गुणैः मृत्युञ्जयत्वादिभिः विशोकां निर्दुः-खाम् अकरोत् ॥ ९२

९२। मेनाधुना कन्याया भाविवियोगदुःखेन अश्रुमुखी सती जामातुः मृत्युञ्जयत्वादि-गुणेन, कन्या चिरमेव सभर्तृका स्थास्यतीति धिया आत्मानं पर्य्यवास्थापयत्।

वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना।
ते त्र्यहादूर्द्ध्वमाख्याय चेरुश्चीरपरिग्रहाः ॥ ९३

अन्वयः। चीरपरिग्रहाः ते तत्क्षणं हरबन्धुना वैवाहिकीं तिथिं पृष्टाः (सन्तः) त्र्यहात् ऊर्द्ध्वम् आख्याय चेरुः ॥ ९३

वैवाहिकीमिति। चीरपरिग्रहाः वल्कलमात्रवसनाः ते तप-स्विनः तत्क्षणं तस्मिन्नेव क्षणे हरबन्धुना हिमवता वैवाहिकीं विवाहयोग्यां तिथिं पृष्टाः केत्यनुयुक्ताः सन्तः त्रयाणाम् अह्नां समाहारस्त्र्यहः। "तद्धितार्थोत्तरपदसमाहारे चे"ति (२, १, ५१ पा०) समासः। "राजाहस्सखिभ्यष्टजि"ति (२, ४, ९१ पा०)। टच्प्रत्ययः, द्विगुत्वादेकवचनम्। "रात्राह्नाहाः पुंसी"ति (२, ४, २९ पा०) पुंलिङ्गता। तस्मात् त्र्यहादूर्द्ध्वम् उपरि आख्याय चतुर्थे-ऽहनि विवाह इत्युक्त्वा चेरुः चलिताः ॥ ९३

९३। ऋषयः हिमवांश्च ततः वैवाहिकं लग्नं स्थिरीकृत्य स्वस्थानमुद्दिश्य प्रतस्थिरे।

ते हिमालयमामन्त्र्य पुनः प्राप्य च शूलिनम्।
सिद्धञ्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ ९४

अन्वयः। ते हिमालयम् आमन्त्र्य पुनः शूलिनं प्राप्य सिद्धम् अर्थम् अस्मै निवेद्य च तद्विसृष्टाः खम् उदययुः ॥ ९४

त इति। ते मुनयः हिमालयम् आमन्त्र्य साधु याम इत्याषृच्छ्य पुनः शूलिनं हरं सङ्केतस्थानस्थं प्राप्य सिद्धं निष्पन्नम् अर्थं प्रयोजनम् अस्मै निवेद्य च ज्ञापयित्वा च तद्विसृष्टाः तेन शूलिना विसृष्टाः खम् आकाशं प्रति उद्ययुः उत्पेतुः । अत्र सङ्क्षिप्तार्थाभिधानात् सङ्क्षेपो नाम गुण उक्तः। तदुक्तं "सङ्क्षिप्तार्थाभिधानं यत् सङ्क्षेपः परिकीर्त्तितः" इति ॥

९४। तस्मै क्रियार्थेति चतुर्थी। ततः ते ऋषयः शिवाय सर्वं प्रयोजनं सिद्धं निवेद्य तञ्च विहाय स्वस्थानं जग्मुरिति।

पशुपतिरपि तान्यहानि कृच्छ्रात्
अगमयदद्रिसुतासमागमोत्कः।
कमपरमवशं न विप्रकुर्य्युः
विभुमपि तं यदमी स्पृशन्ति भावाः ॥ ९५

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
उमाप्रदानो नाम षष्ठः सर्गः ॥ ६

अन्वयः। अद्रिसुतासमागमोत्कः पशुपतिरपि तानि अहानि कृच्छ्रात् अगमयत, अमी भावाः अवशं कम् अपरं न विप्रकुर्य्युः, यस्मात् विभुमपि स्पृशन्ति ॥ ९५

भगवान् पशुपतिः त्र्यहमात्रावलम्बमपि सोढुं न शशाक तदौत्सुक्यादित्याह,—पशुपतिरिति। उत्कं मनो यस्य सः उत्कः। "उत्क उन्मनाः" इति (५, २, ८० पा०) निपातः। अद्रिसुतासमागमोत्कः पार्वतीपरिणयोत्सुकः पशुपतिरपि तानि त्रीणीति शेषः। अहानि कृच्छ्रादगमयत् अयापयत्। कविराह—अमी भावाः औत्सुक्यादयः सञ्चारिणः अवशम् इन्द्रियपरतन्त्रम् अपरं पृथग्जनं कं न विप्रकुर्य्युः न विकारं नयेयुः। यत् यस्मात् विभुं समर्थं जितेन्द्रियम् इति यावत्। तं स्मरहरम् अपि स्पृशन्ति विकुर्वन्ति इत्यर्थः। अत्र विभुविकारसमर्थनात् अर्थात् इतरजनविकारः कैमुतिकन्यायादापततीति इत्यर्थापत्तिरलङ्कारः। तथा च सूत्रम् "दण्डापूपिकयार्थान्तरपतनमर्थापत्तिः" इति। अर्थान्तर-

न्यास इति केचित्, तदुपेक्षणीयम् । युक्तिस्तु विस्तरभयान्नोच्यते । पुष्पिताग्रा वृत्तम्—"अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥ ९५

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायाम्
उमाप्रदानो नाम षष्ठः सर्गः ॥

९५ । विवाहोत्सुकः स शिवः कथमपि कष्टेन तानि त्रीणि अहानि अयापयत् । यतः परिणयोत्सुकस्य स्मरहरस्यापि एतादृशी उत्कण्ठा, तदा मादृशां दुर्बलचित्तानां का कथेति भावः ।

---

## सप्तमः सर्गः ।

अथौषधीनामधिपस्य वृद्धौ
तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान् सुताया
विवाहदीक्षाविधिमन्वतिष्ठत् ॥ १

अन्वयः । अथ हिमवान् ओषधीनाम् अधिपस्य वृद्धौ तिथौ च जामित्रगुणान्वितायां (सत्याम्) समेतबन्धुः (सन्) सुतायाः विवाहदीक्षाविधिम् अन्वतिष्ठत् ॥ १

अर्थात । अथ त्र्यहानन्तरं हिमवान् ओषधीनामधिपस्य चन्द्रस्य वृद्धौ शुक्लपक्ष इत्यर्थः । शुभकर्मस्वापूर्य्यमाणपक्षस्य प्राशस्त्यात् । तिथौ च जामित्रं लग्नात्सप्तमं स्थानं तस्य गुणः शुद्धिः, सा च ग्रहराहित्यं तेन अन्वितायां सत्याम् । यद्यपि जामित्रशुद्धिः लग्नधर्म्मः तथापि तद्द्वारा तिथेरपि तथा व्यपदेशे न दोषः । समेतबन्धुः युक्तबन्धुः सन् सुतायाः दुहितुः विवाहदीक्षा विवाहसंस्कारः सैव विधिः कर्म्म तम् अन्वतिष्ठत् कृतवान् ॥ १

१ । "पापात् सप्तमगः शशी यदि पुनः पापेन युक्तोऽथवा" पापराशेः सप्तमराशौ शशिनोऽवस्थानात् शुद्धौ, शुभे जामित्रयोगे स सुतायाः विवाहकार्य्यं सम्पादितवानिति भावः ।

वैवाहिकैः कौतुकसंविधानैः
गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् ।

आसीत् पुरं सानुमतोऽनुरागाद्
अन्तःपुरञ्चैककुलोपमेयम् ॥ २

अन्वयः। अनुरागात् गृहे गृहे वैवाहिकैः कौतुकसंविधानैः व्यग्रपुरन्ध्रिवर्गं सानुमतः पुरम् अन्तःपुरञ्च एककुलोपमेयम् आसीत् ॥ २

वैवाहिकैरिति। अनुरागात् प्रीतिवशात् गृहे गृहे प्रतिगृहम्। ( ८, १, ४ पा० ) वीप्सायां द्विर्भावः। विवाहः प्रयोजनमेषामिति वैवाहिकानि तैः। "तदस्य प्रयोजन"मिति ( ५, १, १०९ पा० ) ठक्। कौतुकसंविधानैः मङ्गलार्थसम्पादैः व्यग्रः व्याकुलः पुरन्ध्रिवर्गः कुटुम्बिनीसङ्घो यस्मिन् तत् तथोक्तं सानुमतः अद्रेः पुरं बाह्यम् ओषधिप्रस्थम् अन्तःपुरम् अवरोधनञ्च एककुलेन एकगृहेण वा उपमेयम् आसीत्। "सजातीयगणे गोत्रे गृहेऽपि कथितं कुलम्" इति विश्वः। सर्वेषामपि स्वगृह एव इदं शोभनं वर्त्तत इत्यभिमानोऽभूत् इत्यर्थः। एतेन हिमाद्रेः प्रजारागः उक्तः। अत्र सर्वं सम्पन्नमेव इत्यर्थः ॥ २

२। अनुरागात् पञ्चमी हेतौ। विवाहकौतुकप्रियाणां बहुसंख्यकानां नारीणां समागमेन बाह्यम् अवरोधनञ्च एकगृहमिवासीदित्यर्थः। एतेन हिमवतो महान् प्रजानुरागो लक्षितः।

सन्तानकाकीर्णमहापथं तत्
चीनांशुकैः कल्पितकेतुमालम्।
भासोज्ज्वलत्काञ्चनतोरणानां
स्थानान्तरं स्वर्ग इवावभासे ॥ ३

अन्वयः। सन्तानकाकीर्णमहापथं, चीनांशुकैः कल्पितकेतुमालं काञ्चनतोरणानां भासा उज्ज्वलत् तत् ( पुरं ) स्थानान्तरं स्वर्ग इव आवभासे ॥ ३

सन्तानेति। सन्तानकैः मन्दारकुसुमैः आकीर्णाः आस्तृताः महापथाः राजकीयपथा यस्मिन् तत् तथोक्तम्। चीणांशुकैः पट्टवस्त्रैः कल्पिताः विरचिताः केतुमालाः ध्वजपङ्क्तयः यस्य तत् तथोक्तम्। काञ्चनतोरणानां भासा प्रभया उज्ज्वलत् दीप्यमानं तत् पुरं स्थानान्तरं मेरोरन्यत्र स्थितः स्वर्ग इव आवभासे। उत्प्रेक्षालङ्कारः ॥ ३

३। चीनांशुकैः करणी तृतीया। पारिजातपुष्पशोभितैः राजमार्गैः पद्मभनिर्मितैः केतुभिः सुवर्णखचितैस्तोरणैश्च तस्य नगरी द्वितीयामरावतीव लक्ष्यते इति सरलार्थः ।

एकैव सत्यामपि पुत्त्रपङ्क्तौ
चिरस्य दृष्टेव मृतोत्थितेव ।
आसन्नपाणिग्रहणेति पित्रोः
उमा विशेषोच्छ्वसितं बभूव ॥ ४

अन्वयः। पुत्त्रपङ्क्तौ सत्यामपि उमा आसन्नपाणिग्रहणा इति एकैव, चिरस्य दृष्टेव, मृतोत्थितेव पित्रोः विशेषोच्छ्वसितं बभूव ॥ ४

एकैवेति। पुत्राश्च दुहितरश्च पुत्राः। "भ्रातृपुत्रौ स्वसृदुहितृभ्याम्" (१, २, ६८ पा०) इत्येकशेषः। "पुत्रौ पुत्रश्च दुहिता च" इत्यमरः। तेषां पङ्क्तौ सङ्घे सत्यामपि उमा एकैव चिरस्य दृष्टेव चिरात् नष्टलब्धेव मृतोत्थितेव मृत्वा पुनरुत्पन्नेव आसन्नपाणिग्रहणा आसन्नविवाहेति। भर्तृगृहं गमिष्यतीति हेतोरित्यर्थः। पित्रोः मातापित्रोः। "पिता मात्रा" (१, २, ७० पा०) इत्येकशेषः। विशेषेण उच्छ्वसितं प्राणभूता बभूव, पुमपत्यादपि अधिकप्रेमास्पदम् अभूत् इत्यर्थः ॥ ४

४। उमाविवाहोत्सवेन मेनाहिमवतोरानन्दः उमायाः भाविवियोगदुःखं नाशयितुं नाशकत्, आनन्दितावपि तौ वियोगचिन्तया व्याकुलौ अभवतामिति ।

अङ्काद्ययावङ्कमुदीरिताशीः
सा मण्डनान्मण्डनमन्वभुङ्क्त ।
सम्बन्धिभिन्नोऽपि गिरेः कुलस्य
स्नेहस्तदेकायतनं जगाम ॥ ५

अन्वयः। सा उदीरिताशीः अङ्कात् अङ्कं ययौ, मण्डनात् मण्डनम् अन्वभुङ्क्त, सम्बन्धिभिन्नोऽपि गिरेः कुलस्य स्नेहः तदेकायतनं जगाम ( यद्वा तत् एकायतनम् ) ॥ ५

अङ्कादिति। सा पार्वती उदीरिताशीः प्रयुक्ताशीर्वादा सती अङ्कात् अङ्कम् उत्सङ्गं ययौ। मण्डनात् मण्डनान्तरम् अन्यन्मण्डनम् अन्वभुङ्क्त, तदा सर्वे बान्धवः प्रत्येकमेव ताम् अङ्कम् आरोप्य

मण्डनं प्रायच्छत् इत्यर्थः। तच्च स्नेहनिबन्धनमेवेत्याह, सम्बन्धिभिन्नः स्वपुत्रादिभिः भिन्नो विभक्तोऽपि गिरेः कुलस्य वंशस्य स्नेहः तदेकायतनं स एव एकम् आयतनं स्थानं तत् जगाम। तदिति च्छेदेऽपि अयमेवार्थः। विधेयप्राधान्यात् नपुंसकत्वमिति। सर्वे बान्धवः स्वापत्येभ्योऽपि तस्यामधिकं स्निह्यन्तीति तात्पर्य्यार्थः ५

५। सा पार्वती तदा स्नेहेन सर्वासामङ्केभ्यो शीघ्रं नावातरत्, सा एतावन्ति हरणभूतानि मण्डनानि अलभत यत् तानि सर्वाणि परिधातुं तैरात्मानं भूषयितुं वा न शशाक, हिमवद्वंशगतानां स्नेहं च आचकर्षेत्यर्थः।

मैत्रे मुहूर्त्ते शशलाञ्छनेन
योगं गतासूत्तरफल्गुनीषु।
तस्याः शरीरे प्रतिकर्म्म चक्रुः
बन्धुस्त्रियो याः पतिपुत्रवत्यः॥ ६

अन्वयः। मैत्रे मुहूर्त्ते उत्तरफल्गुनीषु शशलाञ्छनेन योगं गतासु (सतीषु) तस्याः शरीरे याः पतिपुत्रवत्यः बन्धुस्त्रियः (ताः) प्रतिकर्म्म चक्रुः॥ ६

मैत्र इति। अथ मैत्रे मित्रदेवत्ये मुहूर्त्ते, उदयमुहूर्त्तात् तृतीयमुहूर्त्ते इत्यर्थः। "आर्द्रः सार्द्रस्तथा मैत्रः शुभो वासव एव च" इति बृहस्पतिस्मरणात्। "उत्तरफल्गुनीषु" फल्गुनीनक्षत्रे। "फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे" (१, २, ६०) इत्येकस्मिन्नपि बहुवचनम्। शशलाञ्छनेन चन्द्रेण योगं गतासु सतीषु तस्याः पार्वत्याः शरीरे बन्धुस्त्रियः प्रतिकर्म्म प्रसाधनम्। "प्रतिकर्म्म प्रसाधनम्" इत्यमरः। चक्रुः, कीदृश्यः? पतिपुत्रवत्यः जीवद्भर्तृका जीवदपत्याश्चेत्यर्थः॥ ६

६। शशलाञ्छनेन सहयोगे तृतीया। शुभे लग्ने सधवाः पुत्रवत्यश्च नार्यः तां विवाहार्थं प्रसाधयितुमारेभिरे, विधवानाम् एतत्कर्म्मसम्पादनाधिकाराभावादिति।

सा गौरसिद्धार्थनिवेशवद्भिः
दूर्वाप्रवालैः प्रतिभिन्नशोभम्।
निर्नाभि कौशेयमुपात्तबाणम्
अभ्यङ्गनेपथ्यमलञ्चकार॥ ७

अन्वयः । सा गौरसिद्धार्थनिवेशवद्भिः दूर्व्वाप्रवालैः प्रतिभिन्नशोभं निर्नाभि कौशेयम् उपात्तवाणम् अभ्यङ्गनेपथ्यम् अलञ्चकार ॥ ७

प्रतिकर्म्मप्रकारमेव प्रपञ्चयति । सेति । सा गौरी गौरसिद्धार्थनिवेशवद्भिः श्वेतसर्षपप्रक्षेपवद्भिः दूर्वाप्रवालैः दूर्वाङ्कुरैः प्रतिभिन्नशोभं निर्नाभि अतिक्रान्तनाभि कौशेयं वस्त्रविशेषो यस्मिन् तत् तथोक्तम् । "कौशेयं कृमिकोशोत्थम्" इत्यमरः । उपात्तवाणं गृहीतशरम् । "शरः क्षत्रियया ग्राह्यः" इति ( ३ अ० ४४ श्लो० ) मनुस्मरणात्, अभ्यङ्गनेपथ्यम् अभ्यङ्गवेशम् अलञ्चकार । अलङ्कारमपि अलञ्चकार इत्यर्थः ॥ ७

७ । दूर्वाप्रवालैः तृतीया अनुक्ते कर्त्तरि । "शरः क्षत्रियया ग्राह्यो प्रतोदः वैश्यकन्यया । वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने" इति ।

बभौ च सम्पर्कमुपेत्य बाला
नवेन दीक्षाविधिसायकेन ।
करेण भानोर्बहुलावसाने
सन्धुक्ष्यमाणेव शशाङ्करेखा ॥ ८

अन्वयः । बाला नवेन दीक्षाविधिसायकेन सम्पर्कम् उपेत्य बहुलावसाने भानोः करेण सन्धुक्ष्यमाणा शशाङ्करेखा इव बभौ च ॥ ८

बभाविति । किञ्चेति चार्थः । बाला नवेन दीक्षाविधौ विवाहकृत्ये यः सायकः तेन सम्पर्कमुपेत्य बहुलावसाने कृष्णपक्षात्यये शुक्लपक्षादौ इत्यर्थः । भानोः करेण किरणेन सन्धुक्ष्यमाणा उपचीयमाना । "सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् क्षपयन्ति" इत्यादिवचनात् । शशाङ्करेखेव बभौ ॥ ८

८ । दीक्षाविधिसायकेन, करेण च तृतीया अनुक्ते कर्त्तरि । यथा सूर्य्यकिरणेन शशाङ्करेखा शोभमाना, तथा सायकेन सा शोभमाना आसीदिति भावः ।

तां लोध्रकल्केन हृताङ्गतैला-
माश्यानकालेयकृताङ्गरागाम् ।
वासो वसानामभिषेकयोग्यं
नार्य्यश्चतुष्काभिमुखं व्यनैषुः ॥ ९

अन्वयः। लोध्रकल्केन हृताङ्गतैलाम् आश्यानकालेयकृताङ्गरागाम् अभिषेकयोग्यं वासः वसानां तां नार्य्यः चतुष्काभिमुखं व्यनैषुः ॥ ९

तामिति। लोध्रकल्केन लोध्रचूर्णेन हृतमङ्गतैलं यस्यास्तां कृतोद्वर्त्तनामित्यर्थः। आश्यानम् ईषच्छुष्कं तेन कालेयेन गन्धद्रव्येन कृताङ्गरागां कृतसौगन्ध्यामित्यर्थः। "अथ जायकं। कालेयकञ्च कालानुसार्य्यञ्च" इत्यमरः। अभिषेकयोग्यं वासः वस्त्रं वसानां स्नानशाटीम् आच्छादयन्तीं तां पार्वतीं नार्य्यः। चतुष्कं चतुस्तम्भगृहं तदभिमुखं व्यनैषुः स्नानगृहं निन्युः इत्यर्थः ॥ ९

९। नार्य्यः सम्प्रति तां कृतोद्वर्त्तनां गन्धानुलिप्तां स्नानार्थं चतुर्भिः स्थानं निन्युरित्यर्थः।

विन्यस्तवैदूर्य्यशिलातलेऽस्मिन्
आबद्धमुक्ताफलभक्तिचित्रे।
आवर्जिताष्टापदकुम्भतोयैः
सतूर्य्यमेनां स्नपयाम्बभूवुः ॥ १०

अन्वयः। विन्यस्तवैदूर्य्यशिलातले आबद्धमुक्ताफलभक्तिचित्रे अस्मिन् एनाम् आवर्जिताष्टापदकुम्भतोयैः सतूर्य्यं स्नपयाम्बभूवुः ॥ १०

विन्यस्तेति। विन्यस्तं वैदूर्य्यशिलातलं मरकतशिलाप्रदेशो यस्मिन् तस्मिन् आबद्धानां मुक्ताफलानां भक्तिभिः रचनाभिः चित्रे अस्मिन् चतुष्के एनां पार्वतीम् आवर्जितानाम् आनमितानाम् अष्टापदकुम्भानां कनककलशानां तोयैः सतूर्य्यं मङ्गलवाद्ययुक्तं यथा तथा स्नपयाम्बभूवुः। अष्टसु लोहेषु पदं प्रतिष्ठा यस्येति अष्टापदम्। "अष्टनः संज्ञाया"मिति (६, ३, १२५ पा०) दीर्घं। "अष्टापदं स्यात् कनकम्" इति विश्वः ॥ १०

१०। आवर्जिताष्टापदकुम्भतोयैः तृतीया करणे। ताः नार्य्यः तां सुवर्णकलसनिःसृतैरुदकैः सतूर्य्यं माङ्गलिकविधानेन स्नपितवत्यः।

सा मङ्गलस्नानविशुद्धगात्री
गृहीतप्रत्युद्गमनीयवस्त्रा।

निर्वृत्तपर्जन्यजलाभिषेका
प्रफुल्लकाशा वसुधेव रेजे ॥ ११

अन्वयः । मङ्गलस्नानविशुद्धगात्री गृहीतप्रत्युद्गमनीयवस्त्रा सा निर्वृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥ ११

सेति । मङ्गलार्थस्नानेन विशुद्धगात्री निर्मलाङ्गी पत्युः वरस्य उद्गमनीयवस्त्रं धौतवस्त्रम् । "धौतमुद्गमनीयं स्यात्" इति हलायुधः । "तत् स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्" इत्यमरः । युगग्रहणन्तु प्रायिकाभिप्रायम् । अत एव अत्र क्षीरस्वामी "युगं प्रायशः यल्लब्धं तदेव" इति व्याख्याय "गृहीतपत्युद्गमनीयवस्त्रा" इति एतदेव उदाहृतवान् । गृहीतं पतिं प्रति उद्गमनीयवस्त्रं यया सा धौतवस्त्रमाच्छादितवतीत्यर्थः । सा पार्वती निर्वृत्तः निष्पन्नः पर्जन्यस्य जलेनाभिषेकः यस्याः सा तथोक्ता । प्रफुल्लेति प्रफुल्लं काशं काशपुष्पं यस्याः सा तथोक्ता वसुधेव रेजे शुशुभे ॥ ११

११ । वर्षावसानविकसितकाशकुसुमा पृथिवीव सा स्नानावसाने परिहितशुक्लवसना रराजेति भावः ।

तस्मात् प्रदेशाच्च वितानवन्तं
युक्तं मणिस्तम्भचतुष्टयेन ।
पतिव्रताभिः परिगृह्य निन्ये
क्लृप्तासनं कौतुकवेदिमध्यम् ॥ १२

अन्वयः । किञ्च तस्मात् प्रदेशात् वितानवन्तं मणिस्तम्भचतुष्टयेन युक्तं क्लृप्तासनं कौतुकवेदिमध्यं पतिव्रताभिः परिगृह्य निन्ये ॥ १२

तस्मादिति । किञ्चेति चार्थः । तस्मात् प्रदेशात् स्नानप्रदेशात् वितानवन्तम् उल्लोचयुक्तम् । "अस्त्री वितानमुल्लोचः" इत्यमरः । मणिस्तम्भचतुष्टयेन युक्तं क्लृप्तं सज्जमानम् आसनं यस्मिन् तं कौतुकवेदिमध्यं पतिव्रताभिः परिगृह्य दोर्भ्याम् आलिङ्ग्य निन्ये नीता प्रसाधनार्थमित्यर्थः ॥ १२

१२ । प्रदेशात् पञ्चमी अपादाने । पतिव्रताभिः तृतीया अनुक्ते कर्त्तरि । ततस्ताः नार्य्यः तां कौतुकमङ्गलस्थानं निन्युरित्यर्थः ।

तां प्राङ्मुखीं तत्र निवेश्य तन्वीं
क्षणं व्यलम्बन्त पुरो निषण्णाः।
भूतार्थशोभाह्रियमाणनेत्राः
प्रसाधने सन्निहितेऽपि नार्य्यः॥ १३

अन्वयः। नार्य्यः तां तन्वीं तत्र प्राङ्मुखीं निवेश्य पुरो निषण्णाः प्रसाधने सन्निहितेऽपि भूतार्थशोभाह्रियमाणनेत्राः (सत्यः) क्षणं व्यलम्बन्त॥ १३

तामिति। नार्य्यः प्रसाधिकाः तां तन्वीं पार्वतीं तत्र वेदिमध्ये प्राङ्मुखीं निवेश्य उपवेश्य पुरो निषण्णा, अग्ने स्थिताः प्रसाध्यते अनेनेति प्रसाधने अलङ्कारसाधनवर्गे सन्निहितेऽपि भूतार्था सत्यरूपा स्वाभाविकीति यावत्, या शोभा रामणीयकं तया ह्रिय-माणानि आकृष्यमाणानि नेत्राणि यासां ताः तथोक्ताः क्षणं व्यल-म्बन्त। स्वभावसुन्दर्य्याः किमस्याः प्रसाधनेन इति तूष्णीं तस्थुः इत्यर्थः॥ १४

१३। तत्र स्थापितप्रसाधनद्रव्याणां समीपे ताम् उपवेश्य ताः प्रसाधिकाः तस्याः नैसर्गिकसौन्दर्य्येण तिरस्कृतानि भूषणानि दृष्ट्वा अस्या भूषणैः किं प्रयोजनमिति चमत्कृतवत्यः आसन्।

धूपोष्मणा त्याजितमार्द्रभावं
केशान्तमन्तःकुसुमं तदीयम्।
पर्य्याक्षिपत् काचिदुदारबन्धं
दूर्वावता पाण्डुमधूकदाम्ना॥ १४

अन्वयः। काचित् धूपोष्मणा आर्द्रभावं त्याजितम् अन्तःकुसुमं तदीयं केशान्तं दूर्वावता पाण्डुमधूकदाम्ना उदारबन्धं पर्य्याक्षिपत्॥ १४

धूपेति। काचित् प्रसाधिका धूपोष्मणा करणेन आर्द्रभावम् आर्द्रत्वं त्याजितं पचादिषु पाठाद्द्विकर्मत्वम्। त्यजतेर्ण्यन्ताद-प्रधाने कर्मणि क्तः। अन्तःकुसुमं तस्या इमं तदीयं केशान्तं केश-पाशं दूर्वावता मध्ये मध्ये ग्रथितदूर्वेण पाण्डुमधूकदाम्ना हरितमधु-

द्रुमकुसुममाल्येन "मधूके तु गुड़पुष्पमधुद्रुमौ" इत्यमरः। उदारबन्धं रम्यबन्धं यथा तथा पर्य्याक्षिपत् बबन्ध ॥ १५

१४। धूपोष्मणा, दाम्ना च तृतीया करणे। प्रथममेव ताः प्रसाधिकाः तस्याः मस्तकं दूर्व्वाकुसुमग्रथितेन दाम्ना प्रसाधितमिति भावः।

विन्यस्तशुक्लागुरु चकुरङ्गं
गोरोचनापत्त्रविभक्तमस्याः।
सा चक्रवाकाङ्कितसैकताया-
स्त्रिस्रोतसः कान्तिमतीत्य तस्थौ ॥ १५

अन्वयः। (काचित्) तस्याः अङ्गं विन्यस्तशुक्लागुरु गोरोचनापत्त्रविभक्तञ्च चकुः (तथाभूता) सा चक्रवाकाङ्कितसैकतायाः त्रिस्रोतसः कान्तिम् अतीत्य तस्थौ ॥ १५

विन्यस्तेति। अस्याः गौर्य्याः अङ्गं गात्रं विन्यस्तं विरचितं शुक्लागुरु यस्मिन् तत् गोरोचनायाः पत्त्रैः पत्त्ररचनाभिः विभक्तं विशेषितञ्च चकुः। सा तथाभूता गौरी चक्रवाकैरङ्कितं सैकतं यस्यास्तस्याः त्रिस्रोतसः गङ्गायाः कान्तिं शोभाम् अतीत्य अतिक्रम्य तस्थौ। अत्र गोरोचनाचक्रवाकयोः पीतत्वेन साम्यं त्रिस्रोतसो धावल्यन्तु प्रसिद्धत्वात् न स्वपदेन उपात्तम् ॥ १६

१५। तथा तस्याः सर्वाङ्गं शुक्लागुरुचर्च्चितं गोरचनानिर्म्मितपत्त्रलेखं शोभते स्म। यथा चक्रवाकाधिष्ठितं धवलजलप्लावितं गङ्गापुलिनम्।

लग्नद्विरेफं परिभूय पद्मं
समेघरेखं शशिनश्च बिम्बम्।
तदाननश्रीरलकैः प्रसिद्धैः
चिच्छेद सादृश्यकथाप्रसङ्गम् ॥ १६

अन्वयः। प्रसिद्धैः अलकैः (उपलक्षिता) तदाननश्रीः लग्नद्विरेफं पद्मं समेघलेखं शशिनः बिम्बञ्च परिभूय सादृश्यकथाप्रसङ्गं चिच्छेद ॥ १६

लग्नेति। प्रसिद्धैः भूषितैः। "प्रसिद्धौ ख्यातभूषितौ" इत्यमरः। अलकैः उपलक्षिता तस्याः गौर्य्याः आननश्रीः लग्नद्विरेफं

पद्मं समेघलेखं मेघरेखायुक्तं शशिनो बिम्बञ्च परिभूय तिरस्कृत्य सादृश्यम् उपमा तस्य कथोक्तिः तस्याः प्रसङ्गं प्रसक्तिम्, सादृश्यं वाङ्मात्रप्रसक्तिमपि चिच्छेद अभिनत्। प्रसक्तयोः पद्मचन्द्रयोः परिभूतत्वादन्यच्च च अप्रसङ्गादित्यर्थः। अत्र पूर्वार्द्धवाक्यार्थस्य सादृश्यकथाच्छेदं प्रति हेतुत्वेन उपन्यासात्काव्यलिङ्गमलङ्कारः, लक्षणन्तु उक्तम् ( १, स० ४८ श्लो० टी० ) ॥ १६

१६। अत्रकैस्तृतीया उपलक्षणे। लग्नद्विरेफं पद्ममिव, समेघं चन्द्रबिम्बमिव सतिलकं तस्याः वदनमासीदिति।

कर्णार्पितो लोध्रकषायरूक्षे
गोरोचनाक्षेपनितान्तगौरे।
तस्याः कपोले परभागलाभाद्
बबन्ध चक्षूंषि यवप्ररोहः॥ १७

अन्वयः। तस्याः कर्णार्पितः यवप्ररोहः लोध्रकषायरूक्षे गोरोचनाक्षेपनितान्तगौरे कपोले परभागलाभात् चक्षूंषि बबन्ध ॥ १७

कर्णेति। तस्याः गौर्य्याः कर्णे अर्पितः निक्षिप्तः यवप्ररोहः यवाङ्कुरः लोध्रस्य वृक्षविशेषस्य कषायेण विलेपनेन रूक्षे विशदे उद्वर्त्तिते इत्यर्थः। "कषायो रसभेदे स्यात् अङ्गरागे विलेपने" इति विश्वः। गोरोचनायाः क्षेपेण विन्यासेन नितान्तगौरे अत्यन्तारुणे। "गौरः श्वेतेऽरुणे पीते" इति विश्वः। कपोले गण्डस्थले परभागलाभात् वर्णोत्कर्षप्राप्तेः चक्षूंषि द्रष्टॄणामिति शेषः। बबन्ध जहार आचकर्ष इत्यर्थः। गोरोचनारुणे गण्डस्थले यवाङ्कुरो विजातीयवर्णसन्निधानाल्लब्धवर्णोत्कर्षः सन् चक्षुराकर्षकोऽभूत् इति भावः॥ १७

१७। परभागलाभात्—हेतौ पञ्चमी। अधुना पार्व्वती गोरोचनादिभिः उद्वर्त्तिता सर्वेषां दर्शनीया आसीदिति।

रेखाविभक्तः सुविभक्तगात्र्याः
किञ्चिन्मधूच्छिष्टविमृष्टरागः।

कामप्यभिख्यां स्फुरितैरपुष्य-
दासन्नलावण्यफलोऽधरोष्ठः ॥ १८

अन्वयः । सुविभक्तगात्र्याः रेखाविभक्तः किञ्चिन्मधूच्छिष्टविमृष्टरागः आसन्नलावण्य-फलः अधरोष्ठः स्फुरितैः कामपि अभिख्याम् अपुष्यत् ॥ १८

रेखेति। सुविभक्तगात्र्याः सुसंश्लिष्टावयवायाः पार्वत्याः रेखया मध्यगतया विभक्तः सुश्लिष्टः किञ्चित् ईषत् मधूच्छिष्टेन सिक्थकेन विमृष्टः विशेषेण निर्मलीकृतः रागः यस्य सः तथोक्तः। "मधू-च्छिष्टन्तु सिक्थकमिति" "निर्णिक्तं शोधितं मृष्टम्" इति च अमरः। अन्यत्रोक्तं "अलौहित्यापगमायाधरेषु सिक्थकलेपः क्रियते"। आसन्नं सन्निहितं लावण्यफलं सौन्दर्य्यप्रयोजनं मुख-चुम्बनादिरूपं यस्य स तथोक्तः। अधरोष्ठः स्फुरितैः भाविस्रम्भ-शंसिभिः स्पन्दैः काम् अपि अनिर्वाच्याम् अपि अभिख्यां शोभाम् अपु-ष्यत् पुपोष। "अभिख्या नामशोभयः" इत्यमरः ॥ १८

१८। स्फुरितैस्तु नीया करणे। आसन्नलावण्यफलः सन्निहितस्वामिसंसर्गे मुखचुम्बनादिप्रयोजनार्थम् अधरोष्ठस्य प्रसाधनमत्यावश्यकमिति भावः।

पत्युः शिरश्चन्द्रकलामनेन
स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशी-
र्माल्येन तां निर्वचनं जघान ॥ १९

अन्वयः । सख्या चरणौ रञ्जयित्वा अनेन पत्युः शिरश्चन्द्रकलां स्पृश इति परिहास-पूर्वं कृताशीः सा तां माल्येन निर्वचनं जघान ॥ १९

पत्युरिति। सख्या कतर्या। चरणौ रञ्जयित्वा लाक्षारसाक्तौ कृत्वा। कृताशीरिति करोतेः समानकर्तृकत्वम्। अनेन चर-णेन। रञ्जने -द्वयोरपि नियमाच्चरणौ इत्युक्तापि शौचित्यात्ताड़न-विधौ एकतरपरामर्श इत्याहुः। पत्युः ईश्वरस्य शिरश्चन्द्रकलां सुरतविशेषे इति शेषः। स्पृश ताड़येति परिहासपूर्वं कृताशीः प्रयुक्ताशीर्वादा सा पार्वती तां सखीं माल्येन मालया। "माल्यं

मालाण्डजौ” इत्यमरः। निर्वचनं यथा तथा तूष्णीमित्यर्थः। जघान ताड़यामास। निर्वचनमित्यनेन विहृताख्यः शृङ्गारानुभाव उक्तः। तदुक्तम् “प्राप्तकालन्तु यद्ब्रूयात् कुर्य्याद्वा विहृतं हि तत्” इति॥ १९

१९। कृताशीः; कृता आशीर्यस्यै यस्याः वा सा कृताशीरित्यनेन रञ्जयित्वेत्यस्य समानकर्त्तृकत्वं समाहितम्। परस्परं स्त्रीपुंसौ पादाभ्यां मस्तकमालिङ्ग्य यत् रमते तस्मिन् शृङ्गारे पादेन शिवशिरश्चन्द्रकलास्पर्शनं सङ्गतम्। ⁖माल्येन पादेनेत्युभयत्र तृतीया करणे।

तस्याः सुजातोत्पलपत्त्रकान्ते
प्रसाधिकाभिर्नयने निरीक्ष्य।
न चक्षुषोः कान्तिविशेषबुद्ध्या
कालाञ्जनं मङ्गलमित्युपात्तम्॥ २०

अन्वयः। प्रसाधिकाभिः सुजातोत्पलपत्रकान्ते तस्या नयने निरीक्ष्य कालाञ्जनं चक्षुषोः कान्तिविशेषबुद्ध्या न उपात्तम्, अपितु मङ्गलमिति उपात्तम्॥ २०

तस्या इति। प्रसाधिकाभिः अलङ्कर्त्रीभिः सुजाते सम्यगुत्पन्ने उत्पलपत्त्रे इव कान्ते रम्ये तस्याः नयने निरीक्ष्य कालाञ्जनम् अञ्जनविशेषः चक्षुषोः कान्तिविशेषबुद्ध्या शोभातिशयो भविष्यतीति बुद्धेरित्यर्थः। न उपात्तं न गृहीतं किन्तु मङ्गलं शुभमिति हेतोः उपात्तम्। निसर्गसुभगस्य किमाहार्य्यकाड़म्बरेणेति भावः॥ २०

२०। प्रसाधिकाभिस्तृतीया अनुक्ते कर्त्तरि। बुद्ध्या तृतीया हेतौ। अञ्जनदानेन अस्याः चक्षुषोः शोभातिशयो भविष्यतीति धिया तस्याः चक्षुषोः अञ्जनं न ददुः। अञ्जनदानमेव अन्यतमं माङ्गलिकमिति हेतोः ददुरिति।

सा सम्भवद्भिः कुसुमैर्लतेव
ज्योतिर्भिरुद्यद्भिरिव त्रियामा।
सरिद्विहङ्गैरिव लीयमानै-
रामुच्यमानाभरणा चकाशे॥ २१

अन्वयः। आमुच्यमानाभरणा सा सम्भवद्भिः कुसुमैः लतेव, उद्यद्भिः ज्योतिर्भिः त्रियामेव, लीयमानैः विहङ्गैः सरिदिव चकाशे॥ २१

सेति। आमुच्यमानाभरणा निबध्यमानाभरणा सा गौरी सम्भवद्भिः उत्पद्यमानैः कुसुमैर्लतेव। अनेन पद्मरागेन्द्रनीलादीनि आभरणानि सूचितानि, लताकुसुमानां नानावर्णत्वात्। उद्यद्भिः उदयं गच्छद्भिः ज्योतिर्भिः उडुभिः त्रियामा रात्रिः इव, अनेन मौक्तिकानि कथितानि। लीयमानैः आश्रयद्भिःनिषीदद्भिः इत्यर्थः। विहङ्गैः चक्रवाकैः सरिदिव, अनेन सुवर्णाभरणानि सूचितानि। विहङ्गाश्च तत्सूचनाय चक्रवाकाः अभिमताः। चकासे रेजे। अत्र लताकुसुमादीनां सहजसम्बन्धिनामुपमानत्वेन उपादानात् आहार्य्यकर्मापि तस्याः सहजमिव अशोभत इति भावः॥ २१

२१। कुसुमैर्लता—अत्र कुसुमशब्देन इन्द्रनीलादयः मणयः बुध्यन्ते, ज्योतिर्भिस्त्रियामा—अनेन मौक्तिकानि ज्ञायन्ते। विहङ्गैः सरिदित्यनेन सुवर्णाभरणानि अवगम्यन्ते। तथाभरणैः सा रराजेति भावः।

आत्मानमालोक्य च शोभमान-
मादर्शबिम्बे स्तिमितायताक्षी।
हरोपयाने त्वरिता बभूव
स्त्रीणां प्रियालोकफलो हि वेषः॥ २२

अन्वयः। सा गौरी स्तिमितायताक्षी शोभमानम् आत्मानम् आदर्शबिम्बे विलोक्य हरोपयाने त्वरिता बभूव, स्त्रीणां वेषः प्रियालोकफलो हि॥ २२

आत्मानमिति। किञ्चेति चार्थः। गौरी शोभमानम् आत्मानं निजशरीरम् आदर्शबिम्बे दर्पणमण्डले। "दर्पणे मुकुरादर्शौ" इत्यमरः। स्तिमितायताक्षी आदरात् निश्चलायतलोचना सती आलोक्य हरोपयाने हरप्राप्तौ त्वरिता व्यग्रा बभूव स्त्रीणां वेषा नेपथ्यं प्रियस्य भर्त्तुः आलोकः दर्शनं फलं प्रयोजनं यस्य स तथोक्तः हि। अन्यथा अरण्यचन्द्रिका स्यादिति भावः। अनेन कालाक्षमत्वलक्षणमर्थात्सुक्यमुक्तमित्यनुसन्धेयम्॥ २२

२२। सा पार्व्वती विभूषिता सती आदर्शतले आत्मनः भूषितां प्रतिमूर्त्तिं दृष्ट्वा हृष्टा हरप्राप्तौ त्वरमाणाऽभूदिति भावः। दर्शनायोग्यापि योषिद् भूषणैः वसनैश्च पुरुषाणां चेतांसि हर्त्तुं चेष्टते सुन्दरीणां का कथेति।

अथाङ्गुलिभ्यां हरितालमार्द्रं
माङ्गल्यमादाय मनःशिलाञ्च ।
कर्णावसक्तामलदन्तपत्रं
माता तदीयं मुखमुन्नमय्य ॥ २३

अन्वयः । अथ माता ( मेनका ) माङ्गल्यम् आर्द्रं हरितालं मनःशिलाञ्च अङ्गुलिभ्याम् आदाय कर्णावसक्तामलदन्तपत्रं तदीयं मुखम् उन्नमय्य ॥२३

अथेति । अथ प्रसाधनानन्तरं माता मेनका माङ्गल्यं मङ्गलार्थम् आर्द्रं द्रवं हरितालं वर्णद्रव्यविशेषं मनःशिलां धातुविशेषं च अङ्गुलिभ्यां तर्जनीमध्यमाभ्याम् आदाय कर्णयोरवसक्ते लग्ने अमले दन्तपत्रे यस्य तत्तथोक्तं तस्याः पार्वत्याः इदं तदीयं मुखम् उन्नमय्य, 'विवाहदीक्षातिलकं चकार' इति उत्तरश्लोकेन अन्वयः ॥ २३

२३। साम्प्रतं मेना मङ्गलविधानार्थं तस्याः मुखमुन्नमय्यभाले हरितालेन विवाहतिलकं विदधौ। नहि जगन्मङ्गलविधात्र्याः मङ्गलं विधातुं हरितालतिलकं शक्नुयात्, अपत्यत्वे हेन समानीतेयं भ्रान्तबुद्धिरिति भावः ।

उमास्तनोद्भेदमनुप्रवृद्धो
मनोरथो यः प्रथमं बभूव ।
तमेव मेना दुहितुः कथञ्चित्
विवाहदीक्षातिलकञ्चकार ॥ २४
युग्मकम् ।

अन्वयः । उमास्तनोद्भेदम् अनु प्रवृद्धः यः प्रथमं मनोरथः बभूव, (मेना) दुहितुः तमेव विवाहदीक्षातिलकं कथञ्चित् चकार ॥२४

उमेति । उमायाः स्तनोद्भेदम् अनु । स्तनोदयम् आरभ्य इत्यर्थः । प्रवृद्धः वृद्धिं गतः । प्रागेवोत्पन्न इति भावः यो मनोरथः वाञ्छा । "वाञ्छा लिप्सा मनोरथः" इत्यमरः । प्रथमं मनोरथान्तरात् प्राक् अयमेव प्रथमो मनोरथ इत्यर्थः बभूव । मेना दुहितुस्तमेव मनोरथभूतमेव । तद्विषयि तदुपचारः । विवाहदीक्षायां विवाहकृत्ये तिलकं कथञ्चित् कृच्छ्रेण चकार, आनन्दवाष्पान्धतयेति शेषः । विवाहानन्तरभावित्वादन्येषाम् अयमेव प्रथमो मनोरथ इति भावः । युग्मकम् ॥ २४

२४ । उमास्तनोद्भेदमवलोक्य तस्याः मनसि योऽभिलाषः अजायत मेना तमेव तस्याः विवाहदीचातिलकम् अकरोत् इति भावः ।

बबन्ध चास्राकुलदृष्टिरस्याः
स्थानान्तरे कल्पितसन्निवेशम् ।
धात्राङ्गुलीभिः प्रतिसार्य्यमाण-
मूर्णामयं कौतुकहस्तसूत्रम् ॥ २५

अन्वयः । अस्याः अस्राकुलदृष्टिः अत एव स्थानान्तरे कल्पितसन्निवेशं धात्राङ्गुलीभिः प्रतिसार्य्यमाणम् ऊर्णामयं कौतुकहस्तसूत्रं (मेना) बबन्ध च ॥ २५

बबन्धेति । अस्याः पार्वत्याः अस्रैः आनन्दवाष्पैः आकुलदृष्टिः अत एव स्थानान्तरे कल्पितः सन्निवेशः निक्षेपो यस्य तत् । स्वस्था-नादन्यत्र स्थापितमित्यर्थः । अत एव धात्र्याः उपमातुः अङ्गुलीभिः प्रतिसार्य्यमाणं स्वस्थानं प्राप्यमाणम् ऊर्णामयं मेषादिलोमनिर्मि-तम् । "ऊर्णा मेषादिलोम्नि स्यात्" इत्यमरः । कौतुकहस्त-सूत्रं मङ्गलहस्तसूत्रं "कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहलम्" इति शाश्वतः । बबन्ध च मेनेति शेषः । पूर्वोक्ततिलकक्रियासमु-च्चयार्थश्चकारः ॥ २५

२५ । विवाहात् परं पार्वती पितरं मातरं च विहाय चिराय पतिगृहं यास्यतीति दुःखेन अश्रुकलुषितनेत्रत्वात् हस्तसूत्रबन्धने अस्थानयोजनं समभवेत् न तस्या अनभिज्ञत्वा-दिति । अङ्गुलीभिः तृतीया अनुक्ते कर्त्तरि ।

क्षीरोदवेलेव सफेनपुञ्जा
पर्य्याप्तचन्द्रेव शरत्त्रियामा ।
नवं नवक्षौमनिवासिनी सा
भूयो बभौ दर्पणमादधाना ॥ २६

अन्वयः । नवक्षौमनिवासिनी नवं दर्पणम् आदधाना सा सफेनपुञ्जा क्षीरोदवेलेव पर्य्याप्तचन्द्रा शरत्त्रियामेव भूयः बभौ ॥ २६

क्षीरोदेति । नवं नूतनं क्षौमं दुकूलं निवस्ते आच्छादयति इति नवक्षौमनिवासिनी । वस्तेराच्छादनार्थात् णिनिः । तथा

नवं दर्पणमादधाना बिभ्रती सा गौरी सफेनपुञ्जा सद्विफडीरपङ्क्तिः। क्षीरमुदकं यस्य स क्षीरोदः क्षीरसमुद्रः। "उदकस्योदः संज्ञायाम् (६, ३, ५७ पा०) इत्युदादेशः तस्य वेला तीरभूमिः इव। "वेला काले च जलधेस्तीरे तीरविकारयोः" इति विश्वः। पर्य्याप्तचन्द्रा पूर्णचन्द्रा शरत्त्रियामा शरद्रात्रिः इव भूयिष्ठं बभौ चकासे ॥ ॥ २६

२६। कृतप्रसाधना सा सफेनपुञ्जा समुद्रवेला इव पूर्णचन्द्रा शरद्रजनीश्रीरिव च बभूव।

तामर्चिताभ्यः कुलदेवताभ्यः
कुलप्रतिष्ठां प्रणमय्य माता।
अकारयत् कारयितव्यदक्षा
क्रमेण पादग्रहणं सतीनाम् ॥ २७

अन्वयः। कारयितव्यदक्षा माता कुलप्रतिष्ठां ताम् अर्चिताभ्यः कुलदेवताभ्यः प्रणमय्य सतीनां पादग्रहणं क्रमेण अकारयत् ॥ २७

तामिति। कारयितव्येषु दक्षा कारयित्री कर्म्मोपदेशकुशला इत्यर्थः। माता मेना प्रतितिष्ठति अस्यामिति प्रतिष्ठा। "आतश्चोपसर्गे" (३, १, १३६ पा०) इति कः। स्त्रियां टाप्। कुलस्य प्रतिष्ठां कुलालम्बनभूतां स्थितिकारिणीमित्यर्थः, तां गौरीम्। अर्चिताभ्यः पूजिताभ्यः कुलदेवताभ्यः गृहदेवताभ्यः प्रणमय्य प्रणामं कारयित्वा। "ल्यपि लघुपूर्वात्" (६,४,५६ पा०) इति णेरयादेशः। सतीनां पतिव्रतानां पादग्रहणं पादाभिवन्दनं क्रमेण अकारयत् कारयामास। "हृक्रोरन्यतरस्यामि"ति (१, ४, ५३ पा०) अणिकर्त्तुः कर्म्मत्वम्। अन्यत्र च नमेरकर्म्मकत्वात् (गतिबुद्धिः) इत्यादिना ॥ २७

२७। प्रसाधनानन्तरं पूज्येषु पूजा विधानार्थम् आदौ कुलदेवताभ्यः नमस्कारं कारयित्वा पतिव्रतानामाशिषम् आहरणार्थं पादग्रहणेन ताभ्यः नमस्कर्त्तुमादिदेश। कुलदेवताभ्यः क्रियायोगे चतुर्थी, न तु गमधातोर्योगेनेत्यर्थः।

अखण्डितं प्रेम लभस्व पत्यु
रित्युच्यते ताभिरुमा स्म नम्रा।

तया तु तस्यार्द्धशरीरभाजा
पश्चात्कृताः स्निग्धजनाशिषोऽपि ॥ २८

अन्वयः । नम्रा उमा ताभिः पत्युः अखण्डितं प्रेम लभस्व इत्युच्यते स्म, तस्य अर्द्धशरीरभाजा तया तु स्निग्धजनाशिषोऽपि पश्चात्कृताः ॥ २८

अखण्डितमिति । नम्रा प्रणता उमा ताभिः सतीभिः पत्युः शिवस्य अखण्डितम् अक्षतं प्रेम लभस्व प्राप्नुहि इत्युच्यते स्म अभिहिता । "लट् स्मे" ( ३, २, ११८ पा० ) इति भूतार्थे लट् । तस्य हरस्य, अर्द्धं शरीरस्य अर्द्धशरीरम् "अर्द्धं नपुंसकमि"ति ( २, २, २ पा० ) समासः । तद्भजतीति अर्द्धशरीरभाजा तया गौर्य्या तु स्निग्धजनाशिषः बन्धुजनाशीर्वादाः अपि पश्चात्कृताः अधरीकृताः, ततोऽपि अधिकफललाभादिति भावः ॥ २८

२८ । ताभिः चिरमेव पत्युः प्रेमास्पदीभूता भवेति स्त्रीजनोचितेनाशीर्वादेन अभिनन्दिता सा कालेन तासां प्रार्थनाधिकं पत्युः प्रेम लप्स्यते इति भावः ।

इच्छाविभूत्योरनुरूपमद्रि
स्तस्याः कृती कृत्यमशेषयित्वा ।
सभ्यः सभायां सुहृदास्थितायां
तस्थौ वृषाङ्कागमनप्रतीक्षः ॥ २९

अन्वयः । कृती सभ्यः अद्रिः इच्छाविभूत्योः अनुरूपं तस्याः कृत्यम् अशेषयित्वा वृषाङ्कागमनप्रतीक्षः ( सन् ) सुहृदास्थितायां सभायां तस्थौ ॥ २९

इच्छाविभूत्योरिति । कृती कुशलः । सभायां साधुः सभ्यः । "सभायां यः" ( ४, ४, १०४ पा० ) इति यप्रत्ययः । अद्रिः हिमवान् इच्छाविभूत्योः उत्साहैश्वर्य्ययोः अनुरूपं सदृशं यथा तथा तस्याः पार्वत्याः कृत्यं कर्त्तव्यम् अशेषयित्वा अशेषं कृत्वा, समाप्य इत्यर्थः । अशेषशब्दात्तत्करोतीति ( ३, १, २६ पा० वा० ) ण्यन्तात् क्त्वाप्रत्ययः सुहृदास्थितायां बन्धुजनाक्रान्तायां सभायां संसदि वृषाङ्कस्य हरस्य आगमनं प्रतीक्षत इति तथोक्तः सन् । "कर्म्मण्यण्" ( ३, २, १ पा० ) इति अण् । तस्थौ स्थितः ॥ २९

२९। तस्याः कर्त्तरि षष्ठी। तस्य यादृशी विभूतिः यादृशी इच्छा च आसीत्, तदनुरूपं पार्वत्याः प्रसाधनादिकार्य्यं सम्पाद्य साम्प्रतं वरागमनमपेचते स्म।

तावद्भवस्यापि कुवेरशैले
तत्पूर्वपाणिग्रहणानुरूपम्।
प्रसाधनं मातृभिरादृताभिः
न्यस्तं पुरस्तात् पुरशासनस्य॥ ३०

अन्वयः। तावत् कुवेरशैले तत्पूर्वपाणिग्रहणानुरूपं प्रसाधनम् आदृताभिः मातृभिः पुरशासनस्य भवस्यापि पुरस्तात् न्यस्तम्॥ ३०

तावदिति। तावत्, यावद्गौरीप्रसाधनं क्रियते तत्काले एव इत्यर्थः। कुवेरशैले कैलासे तदेव पूर्वं तत्पूर्वं तच्च तत् प्राणिग्रहणं तस्य अनुरूपं प्रसाधनम् अलङ्कारसामग्री आदृताभिः सादराभिः। कर्त्तरि क्तः। मातृभिः ब्राह्मीप्रभृतिभिः सप्तमातृकाभिः पुरं शास्तीति पुरशासनः तस्य पुरशासनस्य कर्त्तरि ल्युट्। भवस्यापि पुरस्तात् अग्रे न्यस्तं निक्षिप्तम्॥ ३०

३०। कैलासे पूर्ववदधुनापि सर्वाः मातरः सर्वभूषणादिकमानीय भवस्य पुरतः पचितवत्यः। "वाराही वैष्णवी चैव कौमारी कौवेरी तथा। ब्राह्मी चैन्द्री तथा रौद्री मातरः सप्त कीर्त्तिताः॥"

तद्गौरवान्मङ्गलमण्डनश्रीः
सा पस्पृशे केवलमीश्वरेण।
स एव वेशः परिणेतुरिष्टं
भावान्तरं तस्य विभोः प्रपेदे॥ ३१

अन्वयः। ईश्वरेण सा मङ्गलमण्डनश्रीः तद्गौरवात् केवलं पस्पृशे, तस्य विभोः स एव वेषः परिणेतुः इष्टं भावान्तरं प्रपेदे॥ ३१

तदिति। ईश्वरेण शिवेन सा मङ्गलमण्डनश्रीः शुभप्रसाधनसम्पत् तद्गौरवात् मातृषु आदरात् केवलं पस्पृशे। स्पृष्टैव न तु दध्रे इत्यवधारणार्थः केवलशब्दः "केवलश्चावधारणे" इति शाश्वतः।

किन्तु तस्य विभोः देवस्य स एव वेषः स्वाभाविको भस्मकपालादि-वेष एव परिणेतुः लोके उद्वोढुः इष्टम् अपेक्षितं भावान्तरं रूपान्तरं प्रपेदे अङ्गरागादिरूपतां प्राप इत्यर्थः ॥ ३१

३१। तद्गौरवात् हेतौ पञ्चमी। ईश्वरेण अनुक्ते कर्त्तरि तृतीया। इष्टं—इष्+क्त भावे। यस्य कटाक्षेण महती शोभा अजायत तं भूषणेन शोभयितुमलमिति मातृगौरवात् प्रसाधनस्पर्शनमस्य युक्तमिति।

बभूव भस्मैव सिताङ्गरागः
कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्को
गजाजिनस्यैव दुकूलभावः ॥ ३२

अन्वयः। भस्मैव सिताङ्गरागः बभूव, कपालमेव अमलशेखरश्रीः (बभूव), गजाजिनस्यैव उपान्तभागेषु रोचनाङ्कः दुकूलभावः (बभूव) ॥ ३२

भावान्तरापत्तिमेवाह,—बभूवेति। भस्मैव सिताङ्गरागः शुभ्रगन्धानुलेपनं बभूव। कपालमेव अमलं शेखरं शिरोभूषणं तस्य श्रीः शोभा बभूव। गजाजिनस्यैव उपान्तभागेषु अञ्चलप्रदेशेषु रोचनैवाङ्कः हंसादिचिह्नं यस्य स तथोक्तः दुकूलभावः पट्टांशुकत्वं बभूव। भस्मादिकमेवाङ्गरागादिभावं प्राप्तमित्यर्थः ॥ ३२

३२। स स्वयमेव भस्मना अङ्गरागं, कपालेन शिरोभूषणं, गजाजिनेन पट्टांशुकत्वं साधयति स्म, स्वभावसुन्दरस्य भूषणं निष्प्रयोजनमिति भावः।

शङ्खान्तरद्योति विलोचनं य-
दन्तर्निविष्टामलपिङ्गतारम् ।
सान्निध्यपक्षे हरितालमय्या-
स्तदेव जातं तिलकक्रियायाः ॥ ३३

अन्वयः। शङ्खान्तरद्योति अन्तर्निविष्टामलपिङ्गतारं यत् विलोचनम्, तदेव हरितालमय्याः तिलकक्रियायाः सान्निध्यपक्षे जातम् ॥ ३३

शङ्खेति। शङ्खान्तरे ललाटास्थिमध्ये द्योतते इति तथोक्तम्। "शङ्खो निधौ ललाटास्थ्नि" इत्यमरः। अन्तर्निविष्टा मध्यगता अमला

पिङ्गा तारा कनीनिका यस्य तत्तथोक्तम् । "तारकाक्ष्णः कनीनिका" इत्यमरः । यत् विलोचनं तत् विलोचनमेव हरितालमय्याः वर्णद्रव्यविशेषविकारस्य तिलकक्रियायाः तिलकरचनायाः सन्निधिरेव सान्निध्यं तदेव पक्षः साध्यम् । "पक्षः पार्श्वगरुत्साध्यसहायवलभित्तिषु" इति यादवः । तस्मिन् सान्निध्यपक्षे जातं प्रविष्टमित्यर्थः । अनेन ललाटलोचनमेव तस्य हरितालतिलकमभूदित्युक्तम् ॥ ३३

३३ । ललाटचक्षुषा तस्य तिलककार्यं बभूव ।

यथाप्रदेशं भुजगेश्वराणां
करिष्यतामाभरणान्तरत्वम् ।
शरीरमात्रं विकृतिं प्रपेदे
तथैव तस्थुः फणरत्नशोभाः ॥ ३४

अन्वयः । यथाप्रदेशम् आभरणान्तरत्वं करिष्यतां भुजगेन्द्राणां शरीरमात्रं विकृतिं प्रपेदे, फणरत्नशोभाः तथैव तस्थुः ॥ ३४

यथेति । यथाप्रदेशं प्रदेशान् प्रकोष्ठादीन् अनतिक्रम्य आभरणान्तरत्वं कङ्कणाद्याभरणविशेषत्वं करिष्यतां सम्पादयिष्यतां भुजगेश्वराणां शरीरमात्रं शरीरमेव विकृतिं रूपान्तरं प्रपेदे । फणरत्नशोभाः तथैव तस्थुः,तासां तथैव उपादेयत्वादिति भावः ॥ ३४

३४ । सर्पेश्वराः तस्य कङ्कणाद्याभरणकार्यं चक्रुः ।

दिवापि निष्ठ्यूतमरीचिभासा
बाल्यादनाविष्कृतलाञ्छनेन ।
चन्द्रेण नित्यं प्रतिभिन्नमौलेः
चूडामणेः किं ग्रहणं हरस्य ॥ ३५

अन्वयः । दिवापि निष्ठ्यूतमरीचिभासा बाल्यात् अनाविष्कृतलाञ्छनेन चन्द्रेण नित्यं प्रतिभिन्नमौलेः हरस्य चूडामणेः ग्रहणं किम् ? ॥ ३५

दिवेति । दिवा दिने अपि निष्ठ्यूताः उद्गीर्णा मरीचिभासः किरणकान्तयो यस्य तेन बाल्यात् अल्पतनुत्वात् अनाविष्कृत-

लाञ्छनेन अदृश्यमानकलङ्केन इत्यर्थः। चन्द्रेण नित्यं सर्वदा प्रतिभिन्नमौलेः सङ्गतमुकुटस्य हरस्य चूड़ामणिग्रहणं स्वीकारः किं ? किमर्थम्। चन्द्रचूड़ामणेर्देवस्य किम् अन्यैश्चूड़ामणिभिः ? इति भावः॥ ३५

३५। चन्द्रेण तृतीया करणे। चन्द्रः चूड़ामणेः कार्य्यम् अकरोत्।

इत्यद्भुतैकप्रभवः प्रभावात्
प्रसिद्धनेपथ्यविधेर्विधाता।
आत्मानमासन्नगणोपनीते
खड्गे निषक्तप्रतिमं ददर्श॥ ३६

अन्वयः। इति प्रभावात् प्रसिद्धनेपथ्यविधेः विधाता अत एव अद्भुतैकप्रभवः (सः) आसन्नगणोपनीते खड्गे निषक्तप्रतिमम् आत्मानं ददर्श॥ ३६

इतीति। इति इत्थं प्रभावात् सामर्थ्यात् प्रसिद्धस्य नेपथ्यविधेः वेशविधानस्य विधाता निर्माता अत एव अद्भुतानाम् आश्चर्य्याणाम् एकप्रभवः मुख्यनिधिः स देवः आसन्नगणेन पार्श्वस्थवर्गेण प्रमथ-गणेन इत्यर्थः। उपनीते आनीते खड्गे निषक्तप्रतिमं संक्रान्त-प्रतिबिम्बम् आत्मानं ददर्श। वीरपुरुषाणाम् एष आचारः॥ ३६

३६। प्रभावात् हेतौ पञ्चमी। नेपथ्यविधेः कर्म्मणि षष्ठी। लौकिकाचारेण वीरधर्मेण वा शाणितखड्गे आत्मप्रतिबिम्बदर्शनं मङ्गलानुष्ठानमिति।

स गोपतिं नन्दिभुजावलम्बी
शार्दूलचर्मान्तरितोरुपृष्ठम्।
तद्भक्तिसंक्षिप्तबृहत्प्रमाण-
मारुह्य कैलासमिव प्रतस्थे॥ ३७

अन्वयः। सः नन्दिभुजावलम्बी (सन्) शार्दूलचर्म्मान्तरितोरुपृष्ठं तद्भक्तिसंक्षिप्तबृहत्प्रमाणं कैलासमिव स्थितं गोपतिम् आरुह्य प्रतस्थे॥ ३७

स इति। सः देवः नन्दिभुजावलम्बी नन्दिकेश्वरभुजावलम्बनः सन् "शार्दूलद्वीपिनौ व्याघ्रे" इत्यमरः। तस्मिन् देवे भक्त्या संक्षिप्तं

सङ्कोचितं वृहत् प्रमाणं यस्य तं कैलासमिव गोपतिं वृषभम् आरुह्य प्रतस्थे चचाल ॥ ३७

३७। भक्तिवशात् कैलासस्य नम्रत्वेन देहाल्पत्वात् वृषेण तुल्यमिति। प्रतस्थे "स्थो विप्रावसमः" इत्यात्मनेपदमिति।

तं मातरो देवमनुव्रजन्त्यः
स्ववाहनक्षोभचलावतंसाः ।
मुखैः प्रभामण्डलरेणुगौरैः
पद्माकरं चक्रुरिवान्तरीक्षम् ॥ ३८

अन्वयः। तं देवम् अनुव्रजन्त्यः स्ववाहनक्षोभचलावतंसाः मातरः प्रभामण्डलरेणुगौरैः मुखैः अन्तरीक्षं पद्माकरं चक्रुरिव ॥ ३८

तमिति। तं देवम् अनुव्रजन्त्यः अनुगच्छन्त्यः स्ववाहनानां क्षोभेण प्रकम्पेण चलावतंसाः चलकुण्डलाः मातरः सप्तमातृकाः प्रभामण्डलानि एव रेणवः परागाः तैः गौरैः। अरुणैः। "गौरोऽरुणे सिते पीते" इति यादवः। मुखैः अन्तरीक्षम् आकाशं पद्माकरमिव चक्रुः ॥ ३८

३८। मुखैस्तृतीया करणे। देशाचारनियमेन स्त्रियोऽपि वरेण सार्द्धं कन्यागृहं जग्मुः। मातरोऽपि विघ्नविनाशाय तेनैव सार्द्धं जग्मुः।

तासाञ्च पश्चात् कनकप्रभाणां
काली कपालाभरणा चकासे
बलाकिनी नीलपयोदराजी
दूरं पुरःक्षिप्तशतह्रदेव ॥ ३९

अन्वयः। कनकप्रभाणां तासां पश्चात् कपालाभरणा काली बलाकिनी दूरं पुरःक्षिप्तशतह्रदा नीलपयोदराजी इव चकासे च ॥ ३९

तासामिति। कनकप्रभाणां सुवर्णवर्णानां तासां मातॄणां पश्चात् कपालाभरणा सितकपालालङ्कारा इत्यर्थः। काली महाकाली देवी वा बलाकिनी (५, २, ११६ पा०) व्रीह्यादित्वादिनिः।

दूरं यथा तथा पुरः अग्रे क्षिप्ता प्रसारिताः शतह्रदाः विद्युतो यस्याः सा तथोक्ता नीलपयोदराजौ कालमेघपङ्क्तिः इव चकासे ॥ ३९

३९ । यथा नीलमेघपङ्क्तेः पुरतः विद्युत् शोभते, तथा कालिकायाः पुरतः मातरः शोभन्ते स्म, महाशक्तेः पार्वत्याः विवाहाय आनुकूल्यं दर्शयितुं शक्तिविशेषायाः कालिकायाः तत्र गमनं युक्तमिति ।

ततो गणैः शूलभृतः पुरोगै-
रुदीरितो मङ्गलतूर्य्यघोषः ।
विमानशृङ्गाण्यवगाहमानः
शशंस सेवावसरं सुरेभ्यः ॥ ४०

अन्वयः । ततः शूलभृतः पुरोगैः गणैः उदीरितः मङ्गलतूर्य्यघोषः विमानशृङ्गाणि अवगाहमानः सुरेभ्यः सेवावसरं शशंसः ॥ ४०

तत इति । ततः अनन्तरं शूलभृतः शिवस्य पुरो गच्छन्तीति पुरोगैः अग्रेसरैः । "अन्यत्रापि दृश्यत इति वक्तव्यमि"ति ( ३, २, ४८ पा० वा० ) गमेर्डप्रत्ययः । गणैः प्रमथैः उदीरितः उत्पादितः मङ्गलतूर्य्यघोषः मङ्गलवाद्यध्वनिः विमानशृङ्गाणि अवगाहमानः सुरेभ्यः विमानस्थेभ्यः सेवावसरं शशंस । सुराः प्रस्थानतूर्य्यध्वनि-माकर्ण्य अयमेव नः सेवावसर इति आजग्मुः इत्यर्थः ॥ ४०

४० । गणैरित्यत्र अनुक्ते कर्त्तरि तृतीया । सुरेभ्यः चतुर्थी क्रियायोगे ।

उपाददे तस्य सहस्ररश्मि-
स्त्वष्ट्रा नवं निर्म्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलि-
र्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥ ४१

अन्वयः । तस्य सहस्ररश्मिः त्वष्ट्रा निर्म्मितं नवम् आतपत्रम् उपाददे सः तद्दुकूलात् अविदूरमौलिः उत्तमाङ्गे पतद्गङ्गः इव बभौ ॥ ४१

सुराणां सेवाप्रकारमेवाह—उपेति । तस्य हरस्य सहस्ररश्मिः सूर्य्यः त्वष्ट्रा विश्वकर्मणा निर्म्मितं नवमातपत्रम् उपाददे, धृतवान्

इत्यर्थः । उत्प्रेक्षते—तद्दुकूलात् तस्यातपत्रस्य प्रान्तलम्बिनः दुकूलादविदूरमौलिः, तद्दुकूलस्यासन्नमौलिरित्यर्थः । सः हरः उत्तमाङ्गे शिरसि । "उत्तमाङ्गं शिरः शीर्षम्" इत्यमरः । पतन्ती गङ्गा यस्य सः पतद्गङ्ग इव बभौ । तद्दुकूलादित्यत्र "दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामि"ति ( २, ३, ३४ पा० ) दूरार्थयोगे विकल्पेन पञ्चमी । नाथेनोक्तम्—"अन्यारादि"त्यत्र (२, ३, २९ पा०) आराच्छब्दस्यार्थग्रहणार्थत्वात् पञ्चमीति तदनाकरम् । किञ्चास्य शास्त्रोक्तविकल्पापवादत्वात् दूरं ग्रामस्येत्यादि षष्ठीप्रयोगः दूरापास्तः स्यादित्युपेक्षणीयमेव ॥ ४१

४१ । त्वष्ट्रा इत्यत्र तृतीया करणे ।

मूर्त्ते च गङ्गा-यमुने तदानीं
सचामरे देवमसेविषाताम् ।
समुद्रगारूपविपर्य्ययेऽपि
सहंसपाते इव लक्ष्यमाणे ॥ ४२

अन्वयः । गङ्गा-यमुने मूर्त्ते सचामरे समुद्रगारूपविपर्य्ययेऽपि सहंसपाते इव लक्ष्यमाणे ( सत्यौ ) तदानीं देवम् असेविषाताम् ॥ ४२

मूर्त्ते इति । गङ्गा च यमुना च गङ्गायमुने मूर्त्ते विग्रहधारिण्यौ सचामरे चामरसहिते सत्यौ, अत एव समुद्रगा नदी तस्याः रूपं स्वरूपं तस्य विपर्य्यये अभावे अपि । सह हंसपातेन हंससञ्चारेण वर्त्तते इति सहंसपाते इव "तेन सहे"ति तुल्ययोगे ( २, २, २८ पा० ) इति बहुव्रीहिः । "वोपसर्ज्जनस्ये"ति ( ६, ३, २८ पा० ) सभावः । लक्ष्यमाणे दृश्यमाने सत्यौ तदानीं विवाहसमये देवम् असेविषाताम् अभजताम् । सेवतेर्लुङ् । गङ्गायमुने चामरग्राहिण्यौ देवमुपतस्थतुः इत्यर्थः ॥ ४२

४२ । गङ्गा च यमुना चेत्यत्र समानलिङ्गत्वादितरेतरः द्वन्द्वः ।

तमभ्यगच्छत् प्रथमो विधाता
श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।

जयेति वाचा महिमानमस्य
संवर्द्धयन्तौ हविषेव वह्निम् ॥ ४३

अन्वयः। प्रथमः विधाता, श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् तम् अभ्यगच्छत् ( किं कुर्वन्तौ ? ) जयेति वाचा अस्य महिमानं हविषा वह्निमिव संवर्द्धयन्तौ ॥ ४३

तमिति। प्रथमः आद्यः विधाता चतुर्मुखः तथा श्रीवत्सलक्ष्मा श्रीवत्साङ्कः पुरुषः विष्णुश्च साक्षात् तं देवम् अभ्यगच्छत् सम्मुखम् आययौ, किं कुर्वन्तौ ? जयेति वाचा जयशब्देन अस्य ईश्वरस्य महिमानं महत्त्वं हविषा वह्निमिव संवर्द्धयन्तौ वृद्धिं गमयन्तौ ॥४३

४३। वाचा हविषा चेति तृतीया करणे।

एकैव मूर्त्तिर्बिभिदे त्रिधा सा
सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचित्
वेधास्तयोस्तावपि धातुराद्यौ ॥ ४४

अन्वयः। सा एकैव मूर्त्तिः त्रिधा बिभिदे, एषां प्रथमावरत्वं सामान्यम्, कदाचित् विष्णोः हरः ( आद्यः ) कदाचित् हरिः तस्य ( आद्यः ) कदाचित् वेधाः तयोः ( आद्यः ) कदाचित् तावपि धातुः आद्यौ ॥ ४४

न चानुचितमेतदुक्तमित्याह,—एकेति। सा एकैव मूर्त्तिस्त्रिधा ब्रह्मविष्णुशिवात्मकत्वेन बिभिदे। औपाधिकोऽयं भेदो न वास्तविक इत्यर्थः। अत एव एषां त्रयाणां प्रथमावरयोर्भावः प्रथमावरत्वं ज्येष्ठकनिष्ठभावः सामान्यं साधारणम्, इच्छया सर्वे ज्येष्ठा भवन्ति कनिष्ठाश्च इत्यर्थः। एतदेव विवृणोति, कदाचित् हरः विष्णोः आद्यः, हरिस्तस्याद्यः, कदाचित् वेधाः तयोः हरिहरयोः आद्यः, कदाचित् तौ हरिहरौ अपि धातुः स्रष्टुः आद्यौ, एवमेतेषां पौर्वापर्य्यमनियतमिति दर्शितम् ॥ ४४

४४। हरिहरयोः विधातुश्च प्रथमावरत्वं तेषामिच्छया न तु प्रकृत्या इति भावः।

तं लोकपालाः पुरुहूतमुख्याः
श्रीलक्षणोत्सर्गविनीतवेशाः ।

दृष्टिप्रदाने कृतनन्दिसंज्ञा-
स्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥ ४५

अन्वयः । पुरुहूतमुख्याः लोकपालाः श्रीलक्षणोत्सर्गविनीतवेशाः दृष्टिप्रदाने कृतनन्दिसंज्ञाः तद्दर्शिताः प्राञ्जलयः तं प्रणेमुः ॥ ४५

तमिति । पुरुहूतमुख्याः इन्द्रादयः लोकपालाः श्रीलक्षणानाम् ऐश्वर्य्यचिह्नानां छत्रचामरवाहनानाम् उत्सर्गेण त्यागेन विनीतवेशाः अनुनीतवेशाः सन्तः । तथा दृष्टिप्रदाने दर्शननिमित्ते दर्शनप्रदानार्थमित्यर्थः । कृता नन्दिनः प्रतीहारस्य संज्ञा सङ्केतो यैस्तादृशाः मम दर्शनं दापयेति नन्दिनं प्रति कृतहस्तादिसूचना इत्यर्थः । "संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना" इत्यमरः । तद्दर्शिताः तेन नन्दिना दर्शिताः अयमिन्द्रः प्रणमति, अयं चन्द्र इत्याद्युक्तिपूर्वकं निवेदिताः प्राञ्जलयः कृताञ्जलयः सन्तः । तं भवं प्रणेमुः प्रणताः ॥४५

४५ । सर्वेभ्यः देवेभ्यः अयमेव महान् इति हेतोः सर्वे प्रणेमुरिति ।

कम्पेन मूर्ध्नः शतपत्त्रयोनिं,
वाचा हरिं, वृत्रहणं स्मितेन ।
आलोकमात्रेण सुरानशेषान्
सम्भावयामास यथाप्रधानम् ॥ ४६

अन्वयः । (सः) शतपत्त्रयोनिं मूर्ध्नः कम्पेन, हरिं वाचा, वृत्रहणं स्मितेन, अशेषान् सुरान् आलोकमात्रेण यथाप्रधानं सम्भावयामास ॥ ४६

कम्पेनेति । सः देवः शतपत्त्रयोनिं मूर्ध्नः कम्पेन, तथा हरिं वाचा सम्भाषणेन, वृत्रं हतवन्तं वृत्रहणम् इन्द्रम्, "ब्रह्मभ्रूणवृत्रेषु क्विप्" (३, २, ८७ पा०) इति क्विप् । स्मितेन मन्दहासेन, अशेषान् सुरान् आलोकमात्रेण दृष्टिमात्रेण, इत्थं यथाप्रधानं यथार्हं सम्भावयामास ॥ ४६

४६ । कम्पेन वाचा, स्मितेन सर्वत्रैव तृतीया करणे ।

तस्मै जयाशीः ससृजे पुरस्तात्
सप्तर्षिभिस्तान् स्मितपूर्वमाह ।

विवाहयज्ञे विततेऽत्र यूय-
मध्वर्य्यवः पूर्ववृता मयेति ॥ ४७

अन्वयः। तस्मै सप्तर्षिभिः पुरस्तात् जयाशीः सस्रृजे (स च) तान् स्मितपूर्वम् आह अत्र वितते विवाहयज्ञे यूयं मया पूर्ववृताः अध्वर्य्यव इति ॥ ४७

तस्मा इति। तस्मै शिवाय सप्तर्षिभिः "दिक्संख्ये संज्ञायाम्" इति (२, १, ५० पा०) समासः। पुरस्तात् अग्रे जयेति आशीः सस्रृजे प्रयुक्ता। तान् सप्तर्षीन् स्मितपूर्वमाह, किमिति? अत्र वितते विस्तृते विवाहः एव यज्ञः तस्मिन् यूयं मया पूर्वम् एव वृताः प्रार्थिताः अध्वर्य्यवः ऋत्विजः इति विशेषवाचिना सामान्यमुक्तम्॥४७

४७। तस्मै क्रियायोगे चतुर्थी। सप्तर्षिभिः अनुक्ते कर्त्तरि तृतीया।

विश्वावसुप्राग्रहरैः प्रवीणैः
सङ्गीयमानत्रिपुरावदानः।
अध्वानमध्वान्तविकारलङ्घ्यः
ततार ताराधिपखण्डधारी ॥ ४८

अन्वयः। प्रवीणैः विश्वावसुप्राग्रहरैः सङ्गीयमानत्रिपुरावदानः अध्वान्तविकारलङ्घ्यः ताराधिपखण्डधारी अध्वानं ततार॥ ४८

विश्वावस्विति। विश्वावसुः नाम कश्चिद् गन्धर्वः देवगायकः तत्प्राग्रहरैः तत्प्रमुखैः प्रवीणैः प्रकृष्टवीणैः निपुणैः वा। "प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिता"इत्यमरः। त्रयाणां पुराणां समाहारस्त्रिपुरम्। "तद्धितार्थोत्तरपदे"त्यादिना (२,१,५१पा०) समाहारसमासः। "पात्रादिभ्यः प्रतिषेधो वक्तव्यः" स नपुंसकमिति (२, ४, १७) सूत्रवृत्तौ (सि० कौ० ३९७ पृ० स्त्रवा०) इति स्त्रीलिङ्गान्ततानिषेधः। त्रिपुरस्य सम्बन्धि अवदानं पूर्ववृत्तं कर्म विजयरूपं त्रिपुरावदानं तत् सङ्गीयमानं स्तूयमानं यस्य स तथोक्तः। "अवदानं कर्म्म वृत्तम्"इत्यमरः। ध्वान्तं तमो मोह इति यावत्, तद्विकारेण रागादिना लङ्घ्योऽभिभवनीयो न भवतीति अध्वान्तविकारलङ्घ्यः। विवाहादिकन्तु यस्य लीला इत्यर्थः। ताराधिपखण्डधारी चन्द्रशेखरः शम्भुः अध्वानं मार्गं ततार अत्यगच्छत् ॥४८

४८। विश्वावसुरित्यत्र "विश्वस्य वसुराटो"रिति विश्वशब्दस्य अकारदीर्घत्वमिति।

खे खेलगामी तमुवाह वाहः
सशब्दचामीकरकिङ्किणीकः।
तटाभिघातादिव लग्नपङ्के
धुन्वन् मुहुः प्रोतघने विषाणे॥ ४९

अन्वयः। खे खेलगामी सशब्दचामीकरकिङ्किणीकः वाहः प्रोतघने अत एव तटाभिघातादिव लग्नपङ्के विषाणे मुहुः धुन्वन् तम् उवाह॥ ४९

खे इति। खे आकाशे खेलं सुन्दरं गच्छतीति खेलगामी। सशब्दाः शब्दायमानाः चामीकरकिङ्किण्यः काञ्चनक्षुद्रघण्टिकाः यस्य स तथोक्तः। "किङ्किणी क्षुद्रघण्टिकाः"इत्यमरः। "नद्यृतश्च" इति कप्। वाह्यतेऽनेनेति वाहो वृषभः। करणे घञ्। प्रोतघने स्यूतमेघे अत एव तटाभिघातात् रोधोभेदात् लग्नपङ्के श्लिष्टकर्दमे इव स्थिते विषाणे मुहुर्धुन्वन् तं हरम् उवाह वहति स्म॥ ४८

४९। तटाभिघातात् इत्यत्र हेतौ पञ्चमी।

स प्रापदप्राप्तपराभियोगं
नगेन्द्रगुप्तं नगरं मुहूर्त्तात्।
पुरोविलग्नैर्हरदृष्टिपातैः
सुवर्णसूत्रैरिव कृष्यमाणः॥ ५०

अन्वयः। सः अप्राप्तपराभियोगं नगेन्द्रगुप्तं नगरं पुरो विलग्नैः हरदृष्टिपातैः सुवर्णसूत्रैः कृष्यमाणः इव मुहूर्त्तात् प्रापत्॥ ५०

स इति। सः वाहः न प्राप्तः पराभियोगः शत्रुसमाक्रान्तिर्यस्य तत्तथोक्तं नगेन्द्रेण हिमवता गुप्तं रचितं नगरम् ओषधिप्रस्थं पुरः अग्रे विलग्नैः संक्रान्तैः हरदृष्टिपातैः सुवर्णसूत्रैः कृष्यमाण इव मुहूर्त्तात् प्रापत्, अन्यथा कथं दूरस्य आशुप्राप्तिः स्यादिति भावः। पुरः प्रसृताः हरदृष्टयः पिङ्गलवर्णत्वात् सौवर्णानि वृषाकर्षणदामानीव अलक्ष्यन्त इत्यर्थः॥ ५०

५०। मुहूर्त्तात् ल्यब्लोपे पञ्चमी, सुवर्णसूत्रैस्तृतीया कर्त्तरि।

तस्योपकण्ठे घननीलकण्ठः
कुतूहलादुन्मुखपौरदृष्टः ।
स्वबाणचिह्नादवतीर्य्य मार्गा-
दासन्नभूपृष्ठमियाय देवः ॥ ५१

अन्वयः । घननीलकण्ठः देवः कुतूहलात् उन्मुखपौरदृष्टः ( सन् ) स्वबाणचिह्नात् मार्गात् अवतीर्य्य तस्य उपकण्ठे आसन्नभूपृष्ठम् इयाय ॥ ५१

तस्येति । तस्य पुरस्य उपकण्ठे अन्तिके घनः मेघः इव नीलः कण्ठो यस्य स घननीलकण्ठः कुतूहलात् देवः दर्शनौत्सुक्यात् उन्मुखैः पौरैर्दृष्टः सन् । स्वबाणचिह्नात् त्रिपुरविजयसमये स्वबाणाङ्कात् मार्गात् कुतश्चिदाकाशदेशात् अवतीर्य्य अवरुह्य आसन्नभूपृष्ठं निकटभूधरम् इयाय प्राप ॥ ५१

५१ । कुतूहलात् हेतौ पञ्चमी । मार्गादपादाने पञ्चमी ।

तमृद्धिमद्बन्धुजनाधिरूढै-
र्वृन्दैर्गजानां गिरिचक्रवर्त्ती ।
प्रत्युज्जगामागमनप्रतीतः
प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ ५२

अन्वयः । आगमनप्रतीतः गिरिचक्रवर्त्ती ऋद्धिमद्बन्धुजनाधिरूढैः गजानां वृन्दैः प्रफुल्लवृक्षैः स्वैः कटकैरिव तं प्रत्युज्जगाम ॥ ५२

तमिति । आगमनेन शिवागमनेन प्रतीतः हृष्टः गिरिचक्रवर्त्ती पर्वताधिराजः हिमवान् ऋद्धिमता वस्त्रालङ्कारादिसम्पदेन बन्धुजनेन अधिरूढैः । अनेन बन्धूनां समस्ताढ्यं सूचितम् । गजानां वृन्दैः प्रफुल्लाः विकसितकुसुमाः वृक्षाः येषु तैः स्वैः स्वकीयैः कटकैः नितम्बैरिव तं हरं प्रत्युज्जगाम अभिययौ । "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः ॥ ५२

५२ । वृन्दैः कटकैश्च तृतीया करणे । गजानां वृन्दैरस्य राजन्वता सूचिता ।

वर्गावुभौ देवमहीधराणां
द्वारे पुरस्योद्घाटितापिधाने ।
समीयतुर्दूरविसर्पिघोषौ
भिन्नैकसेतू पयसामिवौघौ ॥ ५३

अन्वयः । दूरविसर्पिघोषौ देवमहीधराणाम् उभौ वर्गौ उद्घाटितापिधाने पुरस्य द्वारे भिन्नैकसेतू पयसाम् ओघौ इव समीयतुः ॥ ५३

वर्गाविति । दूरविसर्पी दूरगामी घोषः ययोस्तौ देवाश्च महीधराश्च तेषां देवमहीधराणाम् उभौ वर्गौ उद्घाटितापिधाने अपनीतकवाटे पुरस्य द्वारे भिन्नः दीर्णः एकसेतुः ययोः तौ भिन्नैकसेतू पयसामोघौ प्रवाहौ इव समीयतुः सङ्गतौ ॥ ५३

५३ । यथा पयःप्रवाहः सेतुं भित्वा गच्छति आगच्छति च तथेति भावः ।

ह्रीमानभूद्भूमिधरो हरेण
त्रैलोक्यवन्द्येन कृतप्रणामः ।
पूर्वं महिम्ना स हि तस्य दूर-
मावर्जितं नात्मशिरो विवेद ॥ ५४

अन्वयः । भूमिधरः त्रैलोक्यवन्द्येन हरेण कृतप्रणामः (सन्) ह्रीमान् अभूत्, हि (यस्मात्) सः पूर्वं तस्य महिम्ना दूरम् आवर्जितम् आत्मशिरः न विवेद ॥ ५४

ह्रीमानिति । भूमिधरः हिमवान् । त्रयो लोकाः त्रैलोक्यं चातुर्वर्ण्यादित्वात् (५, १, १२४ पा०सू०वा०) ष्यञ्प्रत्ययः । तस्य वन्द्येन नमस्कार्येण कृतप्रणामः सन् । "ऋत्विक्पितृव्यश्वशुर-मातुलानां यवीयसाम् । प्रवयाः प्रथमं कुर्य्यात् प्रत्युत्थायाभिवादनम्" इति स्मरणात् । ह्रीमानभूत् । महादेवं प्रति स्वयमल्पत्वात् सङ्कोचं प्राप इत्यर्थः । ननु विदितेश्वरमाहिम्नः स्वयं प्रागेव प्रणतस्य जामातुः आचारमात्रस्वीकारे कः सङ्कोच इति शङ्कां निरस्यति— पूर्वमिति । हि यस्मात् सः हिमवान् पूर्वं प्रागेव तस्य ईश्वरस्य महिम्ना सामर्थ्येन दूरम् अत्यन्तम् आवर्जितं नमितम् आत्मशिरः

न विवेद। सत्यं स्वयं प्रणतत्वानुसन्धाने न सङ्कोचः। तदनुसन्धानन्त्वौत्सुक्यान्नास्तीति भावः॥ ५४

५४। हरेण तृतीया कर्त्तरि। महिम्ना कर्त्तरि तृतीया।

स प्रीतियोगाद्विकसन्मुखश्री-
र्जामातुरग्रेसरतामुपेत्य।
प्रावेशयन्मन्दिरमृद्धमेन-
माुल्फकीर्णापणमार्गपुष्पम्॥ ५५

अन्वयः। प्रीतियोगात् विकसन्मुखश्रीः स जामातुः अग्रेसरताम् उपेत्य एनम् आगुल्फकीर्णापणमार्गपुष्पम् ऋद्धं मन्दिरं प्रावेशयत्॥ ५५

स इति। प्रीतियोगात् सन्तोषसम्बन्धाद् विकसन्मुखश्रीः विकसन्ती मुखश्रीर्यस्य स तथोक्तः सः हिमवान्। जायां मिमीते जानातीति जामातुः वरस्य। (६, २, १०८ पा०) पृषोदरादित्वात् साधु। "जामाता दुहितुः पतिः" इत्यमरः। अग्रेसरतां पुरोगामित्वम् उपेत्य एनं देवम् आगुल्फं पादग्रन्थिपर्य्यन्तं कीर्णानि पर्य्यस्तानि आपणमार्गेषु पण्यवीथिकासु पुष्पाणि यस्मिन् तत् आगुल्फकीर्णापणमार्गपुष्पम्। "तद्ग्रन्थी घुटिके गुल्फौ" इत्यमरः। ऋद्धं समृद्धं मन्दिरं नगरम्। "मन्दिरं नगरेऽगारे मन्दिरो मकरालये" इति विश्वः। प्रावेशयत्॥ ५५

५५। प्रीतियोगात् हेतौ पञ्चमी।

तस्मिन् मुहूर्त्ते पुरसुन्दरीणा-
मीशानसन्दर्शनलालसानाम्।
प्रासादमालासु बभूवुरित्थं
त्यक्तान्यकार्य्याणि विचेष्टितानि॥ ५६

अन्वयः। तस्मिन् मुहूर्त्ते ईशानसन्दर्शनलालसानां पुरसुन्दरीणां प्रासादमालासु इत्थं त्यक्तान्यकार्य्याणि विचेष्टितानि बभूवुः॥ ५६

तस्मिन्निति। तस्मिन् मुहूर्त्ते हरपुरप्रवेशसमये ईशानस्य सन्दर्शने लालसानां लोलुपानाम्। "लोलुपो लोलुभो लोलो लालसो

लम्पटश्च सः" इति यादवः। पुरसुन्दरीणां प्रासादमालासु इत्थं वक्ष्यमाणप्रकारेण त्यक्तान्यकार्य्याणि विसृष्टकार्य्यान्तराणि विचेष्टितानि व्यापाराः। "नपुंसके भावे क्तः" (३, ३, ११४ पा०) इति क्तः। बभूवुः आसन्॥ ५६

५६। त्यक्तानि अन्यानि कार्य्याणि यैः।

आलोकमार्गं सहसा व्रजन्त्या
कयाचिदुद्वेष्टनवान्तमाल्यः।
बद्धुं न सम्भावितएव तावत्
करेण रुद्धोऽपि च केशपाशः॥ ५७

अन्वयः। आलोकमार्गं सहसा व्रजन्त्या कयाचित् उद्वेष्टनवान्तमाल्यः करेण रुद्धोऽपि च केशपाशः तावत् बद्धुं न सम्भावित एव॥ ५७

तान्येवाह पञ्चभिः श्लोकैः,—आलोकेति। आलोकमार्गं दर्शनपथं गवाक्षमित्यर्थः। सहसा व्रजन्त्या गच्छन्त्या कयाचित् उद्वेष्टनः द्रुतगतिवशात् उन्मुक्तबन्धनः अत एव वान्तमाल्यः उद्गीर्णमाल्यश्च यः सः उद्वेष्टनवान्तमाल्यः करेण रुद्धः गृहीतः। अपि च केशपाशः केशकलापः। "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" इत्यमरः। तावत् आलोकनमार्गप्राप्तिपर्य्यन्तं बद्धुं बन्धनाय इत्यर्थः। न सम्भावितः न स्मृत एव॥ ५७

५७। कया कर्त्तरि तृतीया। तावत् सम्यक्। करेण तृतीया करणे।

प्रसाधिकालम्बितमग्रपाद-
माक्षिप्य काचित् द्रवरागमेव।
उत्सृष्टलीलागतिरागवाक्षा-
दलक्तकाङ्कां पदवीं ततान॥ ५८

अन्वयः। काचित् प्रसाधिकालम्बितं द्रवरागमेव अग्रपादम् आक्षिप्य उत्सृष्टलीलागतिः (सती) आ गवाक्षात् पदवीम् अलक्तकाङ्कां ततान॥ ५८

प्रसाधिकेति। काचित् स्त्री प्रसाधिकया अलङ्कर्त्र्या आलम्बितं रञ्जनार्थं धृतं द्रवरागमेव। अग्रश्चासौ पादश्च अग्रपादः इति

समानाधिकरणसमासः "हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभ्याम्" इति वामनः। तम् आक्षिप्य आकृष्य उत्सृष्टलीलागतिः त्यक्तमन्दगमना सती आ गवाक्षात् गवाक्षपर्यन्तं पदद्वयमेतत्। पदवीमलक्तकाङ्कां लाक्षारसचिह्नां चकार ॥ ५८

५८। आ गवाक्षात् सीमायां पञ्चमीत्यर्थः।

विलोचनं दक्षिणमञ्जनेन
सम्भाव्य तद्वञ्चितवामनेत्रा।
तथैव वातायनसन्निकर्षं
ययौ शलाकामपरा वहन्ती ॥ ५९

अन्वयः। अपरा दक्षिणं विलोचनम् अञ्जनेन सम्भाव्य तद्वञ्चितवामनेत्रा (सती) शलाकां वहन्ती तथैव वातायनसन्निकर्षं ययौ ॥ ५९

विलोचनमिति। अपरा स्त्री दक्षिणं विलोचनम् अञ्जनेन सम्भाव्य अलङ्कृत्य तद्वञ्चितं तेन अञ्जनेन वर्जितं वामनेत्रं यस्याः सा तथोक्ता सती तथैव रूपेण शलाकाम् अञ्जनतूलिकां वहन्ती बिभ्रती वातायनसन्निकर्षं गवाक्षसमीपं ययौ, दक्षिणग्रहणं सम्भ्रमात् व्युत्क्रमद्योतनार्थं "सव्यं हि पूर्वं मनुष्या अञ्जते" इति श्रुतेः ॥ ५९

५९। अञ्जनेन तृतीया करणे। तथैव इत्यनेन यथापूर्वस्य आकाङ्क्षाभावः।

जालान्तरप्रेषितदृष्टिरन्या
प्रस्थानभिन्नां न बबन्ध नीवीम्।
नाभिप्रविष्टाभरणप्रभेण
हस्तेन तस्थाववलम्ब्य वासः ॥ ६०

अन्वयः। अन्या जालान्तरप्रेषितदृष्टिः (सती) प्रस्थानभिन्नां नीवीं न बबन्ध, नाभिप्रविष्टाभरणप्रभेण हस्तेन वासः अवलम्ब्य तस्थौ ॥ ६०

जालान्तरेति। अन्या स्त्री जालान्तरप्रेषितदृष्टिः गवाक्षमध्यप्रसारितदृष्टिः सती प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वस्त्रग्रन्थिम्। "नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि" इति विश्वः।

न बबन्ध न अबध्नात् । किन्तु नाभिं प्रविष्टा आभरणानाम् अलङ्काराणाम् प्रभा यस्य तेन । प्रभैव नाभेरावरणम् अभूदिति भावः । हस्तेन वासोऽवलम्ब्य धृत्वा तस्थौ ॥ ६०

६० । हस्तेन तृतीया करणे ।

अर्द्धाचिता सत्वरमुत्थितायाः
पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद्रशना तदानी-
मङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ६१

अन्वयः । सत्वरम् उत्थितायाः कस्याश्चित् अर्द्धाचिता पदे पदे दुर्निमिते गलन्ती (सती) रशना तदानीम् अङ्गुष्ठमूलार्पितसूत्रशेषा आसीत् ॥ ६१

अर्द्धेति । सत्वरं सवेगम् उत्थितायाः कस्याश्चित् अर्द्धमाचिता मणिभिर्गुम्फिता अर्द्धाचिता दुर्निमिते सम्भ्रमात् दुःखेन निक्षिप्ते "डुमिञ् प्रक्षेपणे" इति धातोः कर्म्मणि क्तः । पदे पदे प्रतिपदं, वीप्सायां द्विर्भावः । गलन्ती गलद्रत्ना सती रशना मेखला तदानीं तस्मिन्नवसरे अङ्गुष्ठमूले अर्पितं लगितं सूत्रम् एव शेषः यस्याः सा आसीत् ॥ ६१

६१ । सा एतावदुत्सुका जामातरं द्रष्टुं त्वरते, यत् ग्रथितानां मुक्तानां सूत्राद्वगलनं निवारयितुमवसरं न पश्यतीति भावः ।

तासां मुखैरासवगन्धगर्भै-
र्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः
सहस्रपत्राभरणा इवासन् * ॥ ६२

अन्वयः । सान्द्रकुतूहलानां तासाम् आसवगन्धगर्भैः विलोलनेत्रभ्रमरैः मुखैः व्याप्तान्तराः गवाक्षाः सहस्रपत्राभरणा इव आसन् ॥ ६२

---

* ६१—६२ श्लोकयोर्मध्ये श्लोकोऽयं दृश्यते—
स्तनन्धयं कापि सुतं विहाय विलोकनाय त्वरया व्रजन्ती ।
संप्रस्नुताभ्यां पदवीं स्तनाभ्यां सिषेच धावत्पयसा गवाक्षम् ॥

तासामिति । तदानीं सान्द्रकुतूहलानां तासां स्त्रीणाम् आसवगन्धो गर्भे येषां तैः । विलोलानि नेत्राणि एव भ्रमराः येषु तैर्मुखैर्व्याप्तान्तराः छन्नावकाशाः गवाक्षाः सहस्रपत्त्राभरणा इव आसन्, कमलालङ्कृता एव स्थिता इत्यर्थः ॥ ६२

६२। मदगन्धलालसाकुलभृङ्गव्याप्तत्वात् तासां मुखैः सह पद्मानां साम्यं युक्तमिति भावः ।

तावत् पताकाकुलमिन्दुमौलि-
रुत्तोरणं राजपथं प्रपेदे ।
प्रासादशृङ्गाणि दिवापि कुर्वन्
ज्योत्स्नाभिषेकद्विगुणद्युतीनि ॥ ६३

अन्वयः । तावद् इन्दुमौलिः दिवापि प्रासादशृङ्गाणि ज्योत्स्नाभिषेकद्विगुणद्युतीनि कुर्व्वन् पताकाकुलम् उत्तोरणं राजपथं प्रपेदे ॥ ६३

तावदिति । तावत् तस्मिन्नवसरे इन्दुमौलिः ईश्वरः दिवापि प्रासादशृङ्गाणि ज्योत्स्नाया अभिषेकेण स्नपनेन द्विगुणद्युतीनि द्विरावृत्तकान्तीनि । "गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु" इति वैजयन्ती । कुर्वन् पताकाभिराकुलं व्याकीर्णम् उत्तोरणं राजपथं प्रपेदे ॥ ६३

६३। तावदित्यनेन यावत् शब्दस्याकाङ्क्षाभावात् कालवाचकत्वेन सूचितमिति ।

तमेकदृश्यं नयनैः पिबन्त्यो
नार्यो न जग्मुर्विषयान्तराणि ।
तथाहि शेषेन्द्रियवृत्तिरासां
सर्वात्मना चक्षुरिव प्रविष्टा ॥ ६४

अन्वयः । एकदृश्यं तं नयनैः पिबन्त्यः नार्यः विषयान्तराणि न जग्मुः, तथाहि आसां शेषेन्द्रियवृत्तिः सर्वात्मना चक्षुः प्रविष्टेव ॥ ६४

तमिति । एकः एव दृश्यः दर्शनीयः तम् ईश्वरं नयनैः पिबन्त्यः अतितृष्णया पश्यन्त्य इत्यर्थः । "ताः शङ्करं दृष्टिभिरापिबन्त्यः" इति वा पाठः । नार्यो विषयान्तराणि ततोऽन्यान् विषयान्

शब्दादीन् इत्यर्थः। न जग्मुः, न विदुरित्यर्थः। तथाहि, आसां नारीणां शेषेन्द्रियवृत्तिः श्रोत्रादिप्रवृत्तिः सर्वात्मना स्वरूपकार्त्स्न्येन चक्षुः प्रविष्टेव। श्रोत्रादिनीन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्तेश्चक्षुरेव प्रविश्य कौतुकात् स्वयमप्येनमुपलभन्ते किमु? अन्यथा स्वस्वविषयाधिगमः किं न स्यादिति भावः॥ ६४

६४। नयनैः तृतीया करणे—सर्व्वात्मना इत्यत्र तृतीया करणे।

स्थाने तपो दुश्चरमेतदर्थ-
मपर्णया पेलवयापि तप्तम्।
या दास्यमप्यस्य लभेत नारी
सा स्यात् कृतार्था किमुताङ्कशय्याम्॥ ६५

अन्वयः। पेलवयापि अपर्णया (पार्व्वत्या) एतदर्थं दुश्चरं तपः तप्तं स्थाने, या नारी अस्य दास्यमपि लभेत सा कृतार्था स्यात्, (या अस्य) अङ्कशय्यां (लभेत सा) किमुत? ॥ ६५

अथ पौराङ्गना आहुः—स्थान इति। पेलवया कोमलया अपि अपर्णया पार्वत्या एतस्मै शिवाय इदम् एतदर्थम्। "अर्थेन सह नित्यसमासः सर्वलिङ्गता चे"ति (२, १, ३६ सू० वा०) विशेषनिघ्नत्वम्। दुश्चरं तपस्तप्तं स्थाने युक्तम्। कुतः? या नारी अस्य ईश्वरस्य दास्यं दासीत्वम् अपि लभेत सा कृतार्था स्यात्। या अङ्क एव शय्या ताम् अङ्कशय्यां लभेत सा किमुत? कृतार्था इति किमु वक्तव्यमित्यर्थः॥ ६५

६५। किमुत कृतार्था, कियत्परिमाणेन सफला तत् वक्तुं न शक्नोमीत्यर्थः।

परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत्।
अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां वितथोऽभविष्यत्॥ ६६

अन्वयः। स्पृहणीयशोभम् इदं द्वन्द्वं (प्रजानां पतिः) परस्परेण न चेत् अयोजयिष्यत् (तर्हि) प्रजानां पत्युः अस्मिन् द्वये रूपविधानयत्नः विफलः अभविष्यत्॥ ६६

परस्परेणेति। स्पृहणीयशोभं सर्वैराशस्यमानसौन्दर्य्यम् इदं द्वन्द्वं मिथुनं "द्वन्द्वं रहस्ये"त्यादिना ( ८, १, १५ पा० ) निपातः। परस्परेण न अयोजयिष्यत् चेत्? न योजयेत् यदि? प्रजानां पत्युः विधातुः अस्मिन् द्वये द्वन्द्वे रूपविधाने सौन्दर्य्यनिर्म्माणे यत्नः प्रयासः विफलोऽभविष्यत् भवेत्। एतदनुरूपस्त्रीपुंसान्तराभावादिति भावः। "लिङ्‌निमित्ते लृङ् क्रियातिपत्तावि"ति ( ३, ३, १३९ पा० ) लृङ्॥ ६६

६६। परस्परेण, परः परस्मेन कर्म्मधारयः निपातनात् सुड़ागमः सङ्गार्थस्य अप्रयोगे इति तृतीया।

न नूनमारूढ़रुषाशरीर-
मनेन दग्धं कुसुमायुधस्य।
व्रीड़ादमुं देवमुदीक्ष्य मन्ये
सन्नास्तदेहः स्वयमेव कामः॥ ६७

अन्वयः। आरूढ़रुषा अनेन कुसुमायुधस्य शरीरं न दग्धं नूनम्, किन्तु कामः अमुं देवम् उदीक्ष्य व्रीड़ात् स्वयमेव सन्नास्तदेह इति मन्ये॥ ६७

नेति। आरूढ़रुषा प्ररूढ़कोपेन अनेन हरेण कुसुमायुधस्य कामस्य शरीरं न दग्धं नूनं, किन्तु कामः अमुं देवमुदीक्ष्य दृष्ट्वा व्रीड़ात् सौन्दर्य्येण जितोऽस्मीति लज्जया स्वयमेव सन्न्यस्तदेहः त्यक्तदेह इति मन्ये इत्युत्प्रेक्षा। न स्वयं न्यस्ताकृतेः कोपः सम्भवतीति भावः॥ ६७

६७। अनेन तृतीया कर्त्तरि. व्रीड़ात् हेतौ पञ्चमी। साम्प्रतम् असौ शिवः मदनाधिकः मनोहरो भवतीति भावः।

अनेन सम्बन्धमुपेत्य दिष्ट्या
मनोरथप्रार्थितमीश्वरेण।
मूर्द्धानमालि! क्षितिधारणोच्च-
मुच्चैस्तरं वक्ष्यति शैलराजः॥ ६८

अन्वयः। हे आलि! शैलराजः दिष्ट्या अनेन ईश्वरेण मनोरथप्रार्थितं सम्बन्धम् उपेत्य क्षितिधारणोच्चं मूर्द्धानम् उच्चैस्तरं वक्ष्यति॥ ६८

काचित्काञ्चिदाह,—अनेनेति । हे आलि ! सखि ! "आलिः सखी वयस्या च" इत्यमरः । शैलराजः हिमवान् । दिष्ट्या इति आनन्देऽव्ययम् । मनोरथैः प्रार्थितम् अवरुद्धम्, अभिलाषविषयीकृतमित्यर्थः । "प्रार्थना याच्ञावरोधयोः" इत्यभिधानात् । अनेन ईश्वरेण सम्बन्धमुपेत्य अवाप्य क्षितिधारणेन उच्चम् उन्नतं मूर्द्धानम् उच्चैस्तरम् उन्नततरम् । उच्चैरित्यत्र तरप्प्रत्ययः । मूर्ध्नो द्रव्यत्वान्नमुप्रत्ययान्तः निपातः । "किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" इत्यादिना (५, ४, ११ पा०) अद्रव्यप्रकर्षे तस्य विधानादिति । वक्ष्यति धारयिष्यति, वहतेर्लृट् ॥ ६८

६८। अनेन सहार्थस्य अप्रयोगे तृतीया। दिष्ट्या भाग्येन आनन्दार्थकोऽव्ययः इति।

इत्योषधिप्रस्थ विलासिनीनां
शृण्वन् कथाः श्रोत्रसुखास्त्रिनेत्रः ।
केयूरचूर्णीकृतलाजमुष्टिं
हिमालयस्यालयमाससाद ॥ ६९

अन्वयः। त्रिनेत्रः ओषधिप्रस्थविलासिनीनाम् इति श्रोत्रसुखाः कथाः शृण्वन् केयूरचूर्णीकृतलाजमुष्टिं हिमालयस्य आलयम् आससाद ॥ ६९

इतीति । त्रिनेत्रः त्र्यम्बकः त्रिनेत्रत्रिनयनशब्दयोः "क्षुम्नादिषु चे"ति (८, ४, ३९ पा०) णत्वाभावः । इत्थम् ओषधिप्रस्थविलासिनीनां सम्बन्धिनीः श्रोत्रसुखाः श्रवणमधुराः कथाः आलापान् शृण्वन् केयूरैः अङ्गदैः चूर्णीकृताः लाजानां मुष्टयः यस्मिन् तं तथोक्तम् । तत्र अवकीर्णाः आचारलाजाः अन्तराल एव अङ्गदैः चूर्णपेषं पिष्यन्त इति पुरन्ध्रिजनसम्बन्धातिशयोक्तिः । हिमालयस्य हिमवतः आलयं भवनम् आससाद प्राप ॥ ६९

६९। विवाहोत्सवे समागतानाम् अङ्गनानामिति भावः।

तत्रावतीर्य्याच्युतदत्तहस्तः
शरद्घनाद्दीधितिमानिवोक्ष्णः ।
क्रान्तानि पूर्वं कमलासनेन
कक्ष्यान्तराण्यद्रिपतेर्विवेश ॥ ७०

अन्वयः । तत्र अच्युतदत्तहस्तः ( सः ) शरद्घनात् दीधितिमान् इव उक्ष्णः अवतीर्य कमलासनेन पूर्वं क्रान्तानि अद्रिपतेः कक्ष्यान्तराणि विवेश ॥ ७०

तत्रेति । तत्र हिमवदालये अच्युतेन विष्णुना दत्तहस्तः वितीर्णहस्तावलम्बः सन् शरद्घनात् शरन्मेघात् शरद्विशेषणात् मेघस्य शुभ्रत्वं गम्यते । दीधितिमान् सूर्य्यः इव उक्ष्णः वृषात् अवतीर्य्य कमलासनेन पूर्वम् अग्रे क्रान्तानि प्रविष्टानि अद्रिपतेः कक्ष्यान्तराणि गेहप्रकोष्ठान्तराणि विवेश । "कक्ष्या कक्षे वरत्रायां काञ्चयां गेहे प्रकोष्ठके" इति यादवः ॥ ७०

७० । कमलासनेन कर्त्तरि तृतीया ।

तमन्वगिन्द्रप्रमुखाश्च देवाः
सप्तर्षिपूर्वाः परमर्षयश्च ।
गणाश्च गिर्य्यालयमभ्यगच्छन्
प्रशस्तमारम्भमिवोत्तमार्थाः ॥ ७१

अन्वयः । इन्द्रप्रमुखा देवाः सप्तर्षिपूर्व्वाः परमर्षयश्च गणाश्च प्रशस्तम् आरम्भम् उत्तमार्था इव तम् अन्वग् गिर्य्यालयम् अभ्यगच्छन् ॥ ७१

तमिति । तम् ईश्वरम् अन्वक् अनुपदम् । अव्ययमेतत् । "अन्वगन्वक्षमनुगेऽनुपदं क्लीवमव्ययम्" इत्यमरः । इन्द्रप्रमुखा देवाश्च सप्त ऋषयः पूर्वे येषां ते सप्तर्षिपूर्वाः । "न बहुव्रीहौ" ( १, १, २९ पा० ) इति सर्वनामसंज्ञाप्रतिषेधः । परमर्षयः सनकादिमहर्षयश्च । "सन्महत्परमोत्कृष्टाः पूज्यमानै"रिति (२; १, ६१ पा० ) तत्पुरुषः । गणाः प्रमथाश्च उत्तमार्थाः महाप्रयोजनानि प्रशस्तं प्रकृष्टम् अमोघमित्यर्थः । आरभ्यत इति आरम्भः उपायः तम् इव गिर्य्यालयं हिमवन्मन्दिरम् अभ्यगच्छन् प्राविशन्नित्यर्थः ॥ ६१

७१ । यथा उत्तमप्रयोजनानि आरम्भं प्राप्नुवन्ति तथा ते हिमालयपुरमिति भावः ।

तत्रेश्वरो विष्टरभाग् यथावत्
सरत्नमर्घ्यं मधुमच्च गव्यम् ।
नवे दुकूले च नगोपनीतं
प्रत्यग्रहीत् सर्वममन्त्रवर्ज्जम् ॥ ७२

अन्वयः। तत्र ईश्वरः विष्टरभाक् सरत्नम् अर्घ्यं मधुमत् गव्यम्, नवे दुकूले च, नगोपनीतं सर्व्वम् अमन्त्रवर्ज्जं यथावत् प्रत्यग्रहीत्॥ ७२

तत्रेति। तत्र हिमवदालये, ईश्वरो विष्टरभाक् आसनगतः उपविष्ट इत्यर्थः। यथावत् यथार्हं विधिवदित्यर्थः। सरत्नं रत्न-सहितम् अर्घ्यम् अर्घ्यार्थं जलम्। मधु क्षौद्रमस्मिन्नस्तीति मधुमत्, गवि भवं गव्यं दधि च मधुपर्कमित्यर्थः। "दधिमधुनो· सर्पि-र्मध्वलाभः" इति आश्वलायनगृह्यसूत्रात्। नवे दुकूले च इति सर्वं नगोपनीतं हिमवदानीतम् अर्घ्यादिकं मन्त्रान् वर्जयित्वा मन्त्रवर्ज ततो नञ्समासः, अमन्त्रवर्ज्जं मन्त्रान् न वर्जयित्वा इत्यर्थः, "द्वितीयायाञ्चे"ति (३, ४, ५३ पा०) णमुल्प्रत्ययः, इत्याह—न्यासकारः "अनुदात्तं पदमेकवर्ज"मित्यत्र। प्रत्यग्रहीत् स्वीकृतवान्॥ ७२

७२। विष्टरभाक् विष्टरं भजते इति ण्विः। "विष्टरं वृक्षासनयो"रिति यत्नम्।

दुकूलवासाः स वधूसमीपं
निन्ये विनीतैरवरोधदक्षैः।
वेलासमीपं स्फुटफेनराजि-
र्नवैरुदन्वानिव चन्द्रपादैः॥ ७३

अन्वयः। दुकूलवासाः सः विनीतैः अवरोधदक्षैः वधूसमीपं स्फुटफेनराजिः उदन्वान् चन्द्रपादैः वेलासमीपमिव निन्ये॥ ७३

दुकूलेति। अथ दुकूलवासाः दुकूलं वसान इत्यर्थः। सः हरः विनीतैः अनुद्धतैः अवरोधेषु ये दक्षाः तैः अवरोधदक्षैः वधूसमीपं निन्ये नीतः। कथमिव? स्फुटा फेनानां राजिः यस्य सः, उदकमस्यास्तीति उदन्वान् समुद्रः। "उदन्वानुदधौ चे"ति (८, २, १३ पा०) निपातनात्साधुः। नवैः अचिरोदितैः चन्द्रपादैः चन्द्रकिरणैः वेलासमीपमिव॥ ७३

७३। अवरोधदक्षैः चन्द्रपादैरित्यत्र कर्त्तरि तृतीया।

तया प्रवृद्धाननचन्द्रकान्त्या
प्रफुल्लचक्षुःकुमुदः कुमार्य्या।

प्रसन्नचेत:सलिल: शिवोऽभूत्
संसृज्यमान: शरदेव लोक: ॥ ७४

अन्वय:। प्रहृष्टाननचन्द्रकान्त्या तया कुमार्य्या शिव: शरदा लोक इव संसृज्यमान: (सन्) प्रफुल्लचक्षु:कुमुद: प्रसन्नचेत:सलिल: अभूत् ॥ ७४

तयेति। आननं चन्द्र इवेत्युपमितसमास:। प्रहृष्टाननचन्द्रस्य कान्तिर्यस्यास्तया तथोक्तया तया कुमार्य्या शरदा लोक इव संसृज्यमान: सङ्गच्छमान: शिव:, चक्षूंषि कुमुदानि इव तानि प्रफुल्लानि यस्य स: तथोक्त:। चेत: सलिलमिव तत् प्रसन्नं यस्य स तथोक्त:। प्रसन्नचेत:सलिलोऽभूत्। शरल्लोकयोरपि यथोचित-विशेषणानि योज्यानि ॥ ७४

७४। तया शरदा च सहयोगे तृतीया।

तयो: समापत्तिषु कातराणि
किञ्चिद्व्यवस्थापितसंहृतानि।
ह्रीयन्त्रणां तत्क्षणमन्वभूव-
न्नन्योऽन्यलोलानि विलोचनानि ॥ ७५

अन्वय:। तयो: समापत्तिषु किञ्चिद्व्यवस्थापितसंहृतानि कातराणि अन्योन्यलोलानि विलोचनानि तत्क्षणम् ह्रीयन्त्रणाम् अन्वभूवन् ॥७५

तयोरिति। तयो: वधूवरयो: समापत्तिषु यदृच्छया सङ्गतिषु कातराणि चकितानि। "अधीरे कातरे" इत्यमर:। द्रष्टुमसमर्थानीति भाव:। किञ्चित् ईषत् व्यवस्थापितानि स्थिरीकृतानि पश्चात् संहृतानि निवर्त्तितानि चेति व्यवस्थापितसंहृतानि। "पूर्वकाले" त्यादिना (२, १. ४० पा०) तत्पुरुष: अन्योऽन्यस्मिन् लोलानि सतृष्णानि। "लोलश्चलसतृष्णयो:" इत्यमर:। विलोचनानि दृष्टय: तत् क्षणम् तस्मिन् क्षणे ह्रीयन्त्रणां ह्रिया निमित्तेन सङ्कोचं अन्वभूवन् ॥ ७५

७५। इदमेव प्रथमदर्शनं ततो तयो: व्रीड़ा सञ्जातेति भाव:।

तस्याः करं शैलगुरूपनीतं
जग्राह ताम्राङ्गुलिमष्टमूर्त्तिः ।
उमातनौ गूढ़तनोः स्मरस्य
तच्छङ्किनः पूर्वमिव प्ररोहम् ॥ ७६

अन्वयः । अष्टमूर्त्तिः तच्छङ्किनः उमातनौ गूढ़तनोः स्मरस्य पूर्वं प्ररोहमिव स्थितं शैलगुरूपनीतं तस्याः करं जग्राह ॥ ७६

तस्या इति । अष्टमूर्त्तिः शिवः तस्मात् ईश्वराच्छङ्कत इति तच्छङ्किनः । तद्भीतस्य अत एवोमातनौ उमाशरीरे गूढ़तनोः गुप्तशरीरस्य स्मरस्य पूर्वं प्ररोहमिव प्रथमाङ्कुरमिव स्थितं शैलगुरूपनीतं शैलगुरुणा हिमवता उपनीतं प्रापितम् । अथवा शैलगुरुणा हिमवत्पुरोधसा उपनीतं ताम्राङ्गुलिं रक्ताङ्गुलिं तस्याः पार्वत्याः करं जग्राह ॥ ७६

७६ । उमातनौ आधारे अधिकरणम् । कोपानलभस्मीभूतस्य स्मरस्य तच्छङ्कित्वं युज्यते इति भावः ।

रोमोद्गमः प्रादुरभूदुमायाः
स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत् ।
वृत्तिस्तयोः पाणिसमागमेन
समं विभक्तेव मनोभवस्य ॥ ७७

अन्वयः । उमायाः रोमोद्गमः प्रादुरभूत्, पुङ्गवकेतुः स्विन्नाङ्गुलिः आसीत्, पाणिसमागमेन मनोभवस्य वृत्तिः तयोः समं विभक्तेव ॥ ७७

रोमोद्गमेति । उमायाः रोमोद्गमः रोमाञ्चः प्रादुरभूत् । पुमान् गौः पुङ्गवः वृषभः । "गोरतद्धितलुकी"ति ( ५, ४, ९२ पा० ) टच् । सः केतुः चिह्नं यस्य सः पुङ्गवकेतुः शिव स्विन्नाङ्गुलिरासीत् । अत उत्प्रेक्षते पाणिसमागमेन पाण्योः संसर्गेन कर्त्रा । तयोः वधूवरयोः मनोभवस्य वृत्तिः अवस्थितिः समं विभक्तेव समीकृतेव इत्यर्थः । प्राक्सिद्धस्यापि अनुरागसाम्यस्य सम्प्रति तत्कार्य्यदर्शनात्

पाणिस्पर्शेऽन्तत्वमुत्प्रेक्ष्यते । ननु कन्या तु प्रथमसङ्गमे स्विन्नकरचरणा भवति, पुमांस्तु रोमाञ्चितो भवतीति वात्स्यायनेन विपरीतमुक्तमिति चेत्, नैष दोषः । एभिरनयोर्लाभं परोच्चेति वाक्यशेषे एभिरिति बहुवचने स्वेदरोमाञ्चग्रहणस्य सकलसात्त्विकोपलक्षणत्वावगमेन अनियमावधारणात् । अत एव रघुवंशे अन्यथाभिधानात् स्वोक्तिविरोध इत्यपास्तम् । तदेतद् रघुवंशसञ्जीवन्यां (७।२२) सुव्यक्तमवोचम् । सात्त्विकास्तु "स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रु वैस्वर्य्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिताः" इति ॥ ७७

७७ । पाणिसङ्गागमेन कर्त्तरि तृतीया, तयोः अधिकरणे सप्तमी ।

प्रयुक्तपाणिग्रहणं यदन्यत्
वधूवरं पुष्यति कान्तिमग्र्याम् ।
सान्निध्ययोगादनयोस्तदानीं
किं कथ्यते श्रीरुभयस्य तस्य ॥ ७८

अन्वयः । यत् प्रयुक्तपाणिग्रहणम् अन्यत् वधूवरं तदानीम् अनयोः सान्निध्ययोगात् अग्र्यां कान्तिं पुष्यति, तस्य उभयस्य श्रीः कथ्यते ? ॥७८

प्रयुक्तेति । यद् यस्मात्कारणात् प्रयुक्तं पाणिग्रहणं यस्य तत्तथोक्तम् अन्यत् लौकिकं वधूश्च वरश्च वधूवरं समाहारे द्वन्द्वैकवद्भावः । तदानीं पाणिग्रहणकाले अनयोः उमाशिवयोः सान्निध्ययोगात् अग्र्याम् उत्तमां कान्तिं शोभां पुष्यति पुष्णाति तस्योभयस्य उमामहेश्वररूपस्य मिथुनस्य श्रीः किं कथ्यते ? यत्प्रसादादन्यस्य शोभालाभः । तस्य शोभा किमु वक्तव्येत्यर्थः । "विवाहसमये गौरीशिवौ वधूवरावनुप्रविशेताम् इत्यागमः ॥ ७८

७८ । सान्निध्ययोगात् हेतौ पञ्चमी । अनयोः षष्ठी सम्बन्धे ।

प्रदक्षिणप्रक्रमणात् कृशानो-
रुदर्चिषस्तन्मिथुनं चकासे ।

मेरोरुपान्तेष्विव वर्त्तमान-
मन्योन्यसंसक्तमहस्त्रियामम् ॥ ७९

अन्वयः । (अन्योन्यसंसक्तं) तत् मिथुनम् उदर्चिषः कृशानोः प्रदक्षिणप्रक्रमणात् मेरोः उपान्तेषु वर्त्तमानम् अन्योन्यसंसक्तम् अहस्त्रियाममिव चकासे ॥ ७९

प्रदक्षिणेति । तन्मिथुनम् उदर्चिषः उन्नतज्वालस्य कृशानोः कर्मणः प्रदक्षिणप्रक्रमणात् प्रदक्षिणीकरणात् चकासे । किमिव मेरोरुपान्तेषु पारिसरेषु वर्त्तमानम् आवर्त्तमानं मेरुं प्रदक्षिणीकुर्वत् इत्यर्थः । अन्योन्येन संसक्तं सङ्गतं मिथुनस्यापि एतत् विशेषणम् । अहश्च त्रियामा च अहस्त्रियामं रात्रिन्दिवम् । समाहारे द्वन्द्वैक-वद्भावः ॥ ७९

७९ । प्रदक्षिणप्रक्रमणात् इती पञ्चमी । कृशानोः कर्मणि षष्ठी । यथा सुमेरोः पार्श्वेषु दिवारात्रिश्च वर्त्तते, तथा अग्नेः पार्श्वेषु हरः पार्व्वती च इति भावः ।

तौ दम्पती त्रिः परिणीय वह्नि-
मन्योन्यसंस्पर्शनिमीलिताक्षौ ।
स कारयामास वधूं पुरोधा-
स्तस्मिन् समिद्धार्चिषि लाजमोक्षम् ॥ ८०

अन्वयः । स पुरोधाः अन्योन्यसंस्पर्शनिमीलिताक्षौ तौ दम्पती वह्निं त्रिः परिणीय समिद्धार्चिषि तस्मिन् वधूं लाजमोक्षम् कारयामास ॥ ८०

ताविति । सः पुरस्तादेव हितं विधत्ते इति पुरोधाः पुरोहितः अन्यान्यस्य संस्पर्शेन स्पर्शसुखेन निमीलिताक्षौ तौ । जाया च पतिश्च दम्पती कर्मभूतौ । जायाशब्दस्य ( २, २, ३१ ग० सू० ) दम्भावो निपातितः । वह्निं त्रिः त्रिवारम् । "द्वित्रिचतुर्भ्यः सुजि"ति ( ५, ४, १८ पा० ) सुच् । परिणीय परितो नीत्वा प्रदक्षिणीकृत्य इत्यर्थः । नयतेर्द्विकर्मकात्ल्यप् । समिद्धार्चिषि दीप्तज्वाले तस्मिन् वह्नौ वधूं लाजमोक्षं लाजविसर्गं कारयामास । "हृक्रोरन्यतरस्या-मि"ति ( १, ४, ५३ पा० ) विकल्पादणिकर्त्तुः कर्मत्वम् ॥ ८०

८० । दम्पती, जम्पती, जायापती च पदत्रयं भवति ।

सा लाजधूमाञ्जलिमिष्टगन्धं
गुरूपदेशाद्वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या
मुहूर्त्तकर्णोत्पलतां प्रपेदे ॥ ८१

अन्वयः। सा गुरूपदेशात् वदनम् इष्टगन्धं लाजधूमाञ्जलिं निनाय, स कपोलसंसर्पिशिखः (सन्) तस्याः मुहूर्त्तकर्णोत्पलतां प्रपेदे ॥ ८१

सेति सा। सा बधूः गुरोः पुरोधसः उपदेशात् इष्टः घ्राणतर्पण इत्यर्थः गन्धः यस्य तं लाजधूमाञ्जलिं वदनं निनाय। कपोलसंसर्पिणी शिखा यस्य सः तथोक्तः स धूमः तस्याः गौर्य्याः मुहूर्त्तकर्णोत्पलतां प्रपेदे। धूमस्य विश्वमरत्वात् मुहूर्त्तग्रहणम् ॥ ८१

८१। गुरूपदेशात् इतौ पञ्चमी।

तदीषदार्द्रारुणगण्डलेख-
मुच्छ्वासिकालाञ्जनरागमक्ष्णोः ।
बधूमुखं क्लान्तयवावतंस-
माचारधूमग्रहणाद् बभूव ॥ ८२

अन्वयः। तद् बधूमुखम् आचारधूमग्रहणात् ईषत् आर्द्रारुणगण्डलेखम् अक्ष्णोः उच्छ्वासि कालाञ्जनरागं क्लान्तयवावतंसं बभूव ॥ ८२

तदिति। तद् वधूमुखम् आचारधूमग्रहणात् आचारप्राप्तधूमत्वाद् ईषदार्द्रे स्विन्ने अरुणे च गण्डलेखे गण्डस्थले यस्य तत् तथोक्तम् अक्ष्णोः उच्छ्वासी उद्गच्छन् कालाञ्जनस्य रागः अञ्जनं यस्य तत् तथोक्तम्। क्लान्ता यवावतंसः यवाङ्कुरकर्णपूरो यस्य तत्तथाभूतं बभूव। "लाजाञ्जलिं विसृज्य धूमाग्रं जिघ्रेत्" इति प्रयोगवृत्तिकारः ॥ ८२

८२। आचारधूमग्रहणात् इतौ पञ्चमी।

बधूं द्विजः प्राह तवैष वत्से
वह्निर्विवाहं प्रति कर्म्मसाक्षी ।

शिवेन भर्त्रा सह धर्म्मचर्य्या
कार्य्या त्वया मुक्तविचारयेति ॥ ८३

अन्वयः। द्विजः वधूं प्राह, हे वत्से ! एषः वह्निः तव विवाहं प्रति कर्म्मसाक्षी। भर्त्रा शिवेन सह मुक्तविचारया त्वया धर्म्मचर्य्या कार्य्या इति ॥ ८३

वधूमिति। अथ वधूं द्विज पुरोधाः प्राह। किमिति ? हे वत्से ! एष वह्निः तव विवाहं प्रति विवाहकर्मणीत्यर्थः। कर्मसाक्षी कर्मद्रष्टा। भर्त्रा शिवेन सह मुक्तविचारया निर्विचारया त्वया धर्मचर्य्या धर्माचरणं कार्य्या कर्त्तव्या इति। अयञ्च प्राजापत्य-विवाहो द्रष्टव्यः। यथाह आश्वलायनः—"सह धर्मञ्चरेदिति प्राजापत्ये" इति ॥ ८३

८३। शिवेन तृतीया सहयोगे। मुक्तः त्यक्तः विचारः यया सा तया अनुक्ते कर्त्तरि तृतीया।

आलोचनान्तं श्रवणे वितत्य
पीतं गुरोस्तद्वचनं भवान्या।
निदाघकालोल्वणतापयेव
माहेन्द्रमम्भः प्रथमं पृथिव्या ॥ ८४

अन्वयः। भवान्या श्रवणे आलोचनान्तं वितत्य गुरोः तद् वचनं निदाघकालोल्वणतापया पृथिव्या प्रथमं माहेन्द्रम् अम्भ इव पीतम् ॥ ८४

आलोचनान्तमिति। भवस्य पत्न्या भवान्या। "इन्द्रवरुण-भवशर्वरुद्रे"त्यादिना (४, १, ४८ पा०) ङीप्, आनुगागमश्च। आलोचनान्तं नेत्रान्तपर्य्यन्तम्। 'आङ्मर्य्यादाभिविध्योः' (२, १, १३ पा०) इत्यव्ययीभावः। श्रवणे श्रोत्रे वितत्य विस्तार्य्य तत् पूर्वोक्तं गुरोः याज्ञिकस्य वचनं, "सह धर्मं चरे"ति वाक्यं, निदाघ-काले ग्रीष्मकाले उल्वणतापया उत्कटसन्तापया पृथिव्या प्रथमम् आद्यं माहेन्द्रं पार्जन्यं अम्भ इव पीतम अत्यादरेण शुश्राव इत्यर्थः ॥ ८४

८४। यथा निदाघसन्तप्ता पृथिवी, प्रथमं मेघवर्षणं प्रेम्णा गृह्णाति तथा भवानी याज्ञिकस्य प्रथमम् उपदेशम् अत्यादरेणेत्यर्थः।

ध्रुवेण भर्त्रा ध्रुवदर्शनाय
प्रयुज्यमाना प्रियदर्शनेन ।
सा दृष्ट इत्याननमुन्नमय्य
ह्रीसन्नकण्ठी कथमप्युवाच ॥ ८५

अन्वयः । प्रियदर्शनेन ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना सा ह्रीसन्नकण्ठी कथमपि मुखमुन्नमय्य दृष्टः इत्युवाच ॥ ८५

ध्रुवेणेति । प्रियं दर्शनं यस्य कर्मभूतस्य तेन प्रियदर्शनेन ध्रुवेण शाश्वतेन भर्त्रा ध्रुवस्य नक्षत्रविशेषस्य दर्शनाय । "ध्रुवो भभेदे क्लीवन्तु निश्चिते शाश्वते त्रिषु" इत्यमरः । प्रयुज्यमाना दृश्यतामिति प्रेर्यमाणा ह्रीसन्नकण्ठी ह्रिया हीनस्वरा सा वधूः कथमपि आननमुन्नमय्य दृष्ट इत्युवाच ॥ ८५

८५ । भर्त्रा अनुक्ते कर्तरि तृतीया । ध्रुवदर्शनाय चतुर्थी निमित्तार्थे ।

इत्थं विधिज्ञेन पुरोहितेन
प्रयुक्तपाणिग्रहणोपचारौ ।
प्रणेमतुस्तौ पितरौ प्रजानां
पद्मासनस्थाय पितामहाय ॥ ८६

अन्वयः । इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ तौ प्रजानां पितरौ पद्मासनस्थाय पितामहाय प्रणेमतुः ॥ ८६

इत्थमिति । इत्थम् अनेन प्रकारेण । "इदमस्थमुः" इति (५, ३, २४ पा०) थमुप्रत्ययः । विधिज्ञेन विवाहप्रयोगज्ञेन शास्त्रज्ञेनेत्यर्थः । पुरोहितेन हैमवतेन प्रयुक्तपाणिग्रहणोपचारौ कृतविवाहकर्माणौ प्रजानां पितरौ तौ उमामहेश्वरौ पद्मासनस्थाय पद्मासनोपविष्टाय पितॄणां पित्रे पितामहाय ब्रह्मणे । "पितामहो विरिञ्चौ स्यात्तातस्य जनकेऽपि च" इति विश्वः । "पितृव्यमातुलमातामहपितामहाः" इति (४, २, ३६ पा०) निपातनात्साधुः । प्रणेमतुः नमश्चक्रतुः । पितामहस्य पित्रोरपि पूज्यत्वादिति भावः ॥ ८६

८६। पुरोहितेन तृतीया अनुक्ते कर्त्तरि। पितामहाय क्रियार्थांगे चतुर्थी।

वधूर्विधात्रा प्रतिनन्द्यते स्म
कल्याणि वीरप्रसवा भवेति।
वाचस्पतिः सन्नपि सोऽष्टमूर्त्तौ
त्वाशास्य चिन्तास्तिमितो बभूव॥ ८७

अन्वयः। वधूः विधात्रा "हे कल्याणि! वीरप्रसवा भव" इति प्रतिनन्द्यते स्म, सः वाचस्पतिः सन्नपि अष्टमूर्त्तौ तु आशास्य चिन्तास्तिमितः बभूव॥ ८७

वधूरिति। वधूः कन्या विधात्रा ब्रह्मणा हे कल्याणि! शोभने! वीरः प्रसवोऽपत्यं यस्याः सा वीरप्रसवा वीरसूः भवेति प्रतिनन्द्यते स्म आशिषमुक्तेत्यर्थः। सः विधाता वाचस्पतिः वागीश्वरः अपि सन्। "कस्कादिषु" (८, ३, ४८ पा०) पाठात्साधुः। अष्टमूर्त्तौ शिवे तु आशास्यम् आकाङ्क्ष्यं तत्र चिन्ता विचारः तस्यां स्तिमितः मन्दः बभूव। यस्य निरीहस्य आशास्याभावात् आशिषि स्तिमितत्वमित्यर्थः॥ ८७

८७। विधात्रा तृतीया कर्त्तरि। वाचां पतिः कस्कादित्वात् सुडागमः।

क्लृप्तोपचारां चतुरस्रवेदीं
तावेत्य पश्चात् कनकासनस्थौ।
जायापती लौकिकमेषणीय-
मार्द्राक्षतारोपणमन्वभूताम्॥ ८८

अन्वयः। तौ जायापती पश्चात् क्लृप्तोपचारां चतुरस्रवेदीम् एत्य कनकासनस्थौ सन्तौ लौकिकम् एषणीयम् आर्द्राक्षतारोपणम् अन्वभूताम्॥ ८८

क्लृप्तेति। तौ जायापती वधूवरौ पश्चात् नमस्कारानन्तरं क्लृप्ताः रचिताः उपचाराः पुष्परचनादयो यस्यां तां चतुरस्रवेदीम् एत्य प्राप्य कनकासनस्थौ सन्तौ लौकिकं लोके विदितम् आचार-प्राप्तमित्यर्थः। अत एव एषणीयम् आशास्यम्। "तथाहि लौकिका-

चारं मनसापि न लङ्घयेत्" इतिशास्त्रादवश्यकर्त्तव्यमित्यर्थः। इषेरिच्छार्थादनीयःप्रत्ययः। अर्द्धारोपणम् अन्वभूताम् ॥ ८८

८८। जाया च पतिश्च जायापती। इष्+अनीयः कर्म्मणि।

पत्त्रान्तलग्नैर्जलविन्दुजालै-
राकृष्टमुक्ताफलजालशोभम्।
तयोरुपर्य्यायतनालदण्ड-
माधत्त लक्ष्मीः कमलातपत्त्रम् ॥८९

अन्वयः। लक्ष्मीः पत्त्रान्तलग्नैः जलविन्दुजालैः आकृष्टमुक्ताफलजालशोभम् आयतनालदण्डं, कमलातपत्रं तयोः उपरि आदत्त ॥ ८९

पत्त्रान्तेति। लक्ष्मीः श्रीदेवी पत्त्रान्तेषु दलप्रान्तेषु लग्नैर्जलविन्दुजालैः आकृष्टा आहृता मुक्ताफलजालेन प्रान्तस्थिना मुक्ताकलापेन या शोभा सा येन तत्तथोक्तम्। आयतं दीर्घं नालम् इव दण्डः यस्य तत कमलम् एव आतपत्रं तत् तयोः उपरि आधत्त दधौ ॥ ८९

८९। जलविन्दुजालैरिति तृतीया कर्त्तरि।

द्विधा प्रयुक्तेन च वाङ्मयेन
सरस्वती तन्मिथुनं नुनाव।
संस्कारपूतेन वरं वरेण्यं
वधूं सुखग्राह्यनिबन्धनेन ॥ ९०

अन्वय। सरस्वती द्विधाप्रयुक्तेन वाङ्मयेन तत् मिथुनं नुनाव च संस्कारपूतेन वरेण्यं वरम्, सुखग्राह्यनिबन्धेन वधूम् (नुनाव) ॥ ९०

द्विधेति। सरस्वती वाग्देवी द्विधा संस्कृतप्राकृतरूपेण द्वैविध्येन प्रयुक्तेन उच्चारितेन वाङ्मयेन शब्दजालेन तन्मिथुनं नुनाव। "णु स्तुता"विति धातोर्लिट्। केन कमित्याह,संस्कारेति। संस्कारेण शास्त्रव्युत्पत्त्या पूतेन प्रकृतिप्रत्ययविभागशुद्धेन संस्कृतेनेत्यर्थः, वरेण्यं वरणीयं श्लाघ्यमित्यर्थः। वृणोतेरौणादिकः "वृञएन्य" इति (३,

९८ सू० ) एन्प्रत्ययः । वरं वोढारं सुखेन ग्राह्यं सुबोधं निबन्धनं रचना यस्य तेन वाङ्मयेन प्राकृतभाषया इत्यर्थः । वधूं नुनाव इत्यनेन सम्बन्धः ॥ ९०

९० । वाङ्मयेन तृतीया करणे । संस्कारेण पूतः तेन तृतीया तत् ।

तौ सन्धिषु व्यञ्जितवृत्तिभेदं
रसान्तरेषु प्रतिबद्धरागम् ।
अपश्यतामप्सरसां मुहूर्तं
प्रयोगमाद्यं ललिताङ्गहारम् ॥ ९१

अन्वयः । तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागं ललिताङ्गहारम् अप्सरसाम् आद्यं प्रयोगम् मुहूर्तम् अपश्यताम् ॥ ९१

तावित्ति । तौ दम्पती सन्धिषु मुखादिनिर्वहणान्तेषु पञ्चसन्धिषु । तदुक्तं दशरूपके । "मुखं प्रतिमुखं गर्भः सावमर्षोपसंहृतिः" इति व्यञ्जितवृत्तिभेदं स्फुटीकृतकौशिक्यादिवृत्तिविशेषं रसानुगुण्येन इति शेषः । तदुक्तं भूपालेन "कौशिकी स्यात्तु शृङ्गारे रसे वीरे तु सात्त्वती । रौद्रबीभत्सयोर्वृत्तिर्नियतारभटी पुनः । शृङ्गारादिषु भावज्ञैः रसेष्विष्टा तु भारती ॥" तथा कौशिक्यारभटी चैव सात्त्वती भारती तथा । चतस्रो वृत्तयो ज्ञेयास्तासु नाट्यं प्रतिष्ठितम्" इति । रसान्तरेषु शृङ्गारादिरसभेदेषु" ( शृङ्गारादौ विषे वीर्य्ये गुणे राग द्रवे रसः इत्यमरः) शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्साद्भुतशान्ताख्या रसाः पूर्वैरुदाहृता" इति । प्रतिबद्धराग प्रतिनियमेन प्रवर्त्तितः वसन्तललितादिरागा यस्मिन् तं, यस्मिन् रसे यो रागो विहितस्तदनुसारेण प्रयुक्तरागमित्यर्थः । यथाह काहलः । रौद्रेऽद्भुते तथा वीरे पुंरागेण प्रगीयते । शृङ्गारहास्यकरुणाः स्त्रीरागेण प्रकीर्त्तिताः । भयानके च वीभत्से शान्ते गेयो नपुंसके" इति । ललिताङ्गहारं मधुराङ्गविक्षेपं "अङ्गहारोऽङ्गविक्षेप" इत्यमरः । आदौ भवम् आद्यं रूपकान्तरप्रकृतिभूतमित्यर्थः । तदुक्तम् "आहुः प्रकरणादीनां नाटकं प्रकृतिं बुधाः" इति अप्सरसाम् उर्वश्यादीनाम् प्रयुज्यत इति प्रयोगः, रूपकं

नाटकमित्यर्थः। आद्यमिति विशेषणात्। तं मुहूर्त्तमपश्यतां दृष्टवन्तौ। "पाघ्राध्मास्थे"त्यादिना (७, ३, ७८ पा०) दृशेः पश्यादेशः॥ ९१

९१। मुहूर्त्तं व्याप्त्यर्थे द्वितीया।

देवास्तदन्ते हरमूढ़भार्य्यं
किरीटबद्धाञ्जलयो निपत्य।
शापावसाने प्रतिपन्नमूर्त्तेः
ययाचिरे पञ्चशरस्य सेवाम्॥ ९२

अन्वयः। देवाः तदन्ते, ऊढ़भार्य्यं हरं किरीटबद्धाञ्जलयः निपत्य शापावसाने प्रतिपन्नमूर्त्तेः पञ्चशरस्य सेवां ययाचिरे॥ ९२

देवा इति। देवाः इन्द्रादयः तदन्ते तस्य प्रयोगदर्शनस्यान्ते अवसाने ऊढ़भार्य्यं परिणीतदारं हरं किरीटेषु बद्धाः अञ्जलयः येषां ते तथोक्ताः सन्तः निपत्य प्रणम्य शापावसाने प्रतिपन्नमूर्त्तेः लब्धशरीरस्य। "परिणेष्यति पार्वतीं यदा" इत्यादिना शापस्य पार्वतीपरिणयान्तत्वादित्यर्थः। पञ्चशरस्य कामस्य कर्त्तुः सेवां ययाचिरे। पुनः समासादितशरीरस्य तस्य सेवा स्वीक्रियतामिति प्रार्थयामासुः इत्यर्थः। "दुह्या"त्यादिना द्विकर्मकत्वम्॥ ९२

९२। देवानां प्रार्थनया अस्मिन् अवसरे पञ्चशरः अजायत इति।

तस्यानुमेने भगवान् विमन्युः
व्यापारमात्मन्यपि सायकानाम्।
कालप्रयुक्ता खलु कार्य्यविद्भिः
विज्ञापना भर्त्तृषु सिद्धिमेति॥ ९३

अन्वयः। विमन्युः भगवान् आत्मन्यपि तस्य सायकानां व्यापारम् अनुमेने, कालविद्भिः कालप्रयुक्ता भर्त्तृषु विज्ञापना सिद्धिम् एति॥ ९३

तस्येति। विमन्युः विगतक्रोधः भगवान् ईश्वरः आत्मन्यपि तस्य कामस्य सायकानां व्यापारमनुमेने। तथाहि कार्य्यविद्भिः कार्य्यज्ञैः।

अथवा कालविद्भिः अवसरज्ञैः काले योग्यावसरे प्रयुक्ता अनुष्ठिता भर्त्तृषु स्वामिषु विषये विज्ञापना सिद्धिमेति खलु, सफला भवतीत्यर्थः। अयमेव अस्य स्मरसेवास्वीकारः, यत् आत्मन्यपि तत्सायकव्यापारम् अङ्गीकृतवानिति ॥ ९३

९३। कालविद्भिरित्यत्र तृतीया अनुक्ते कर्त्तरि।

अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य
क्षितिधरपतिकन्यामाददानः करेण।
कनककलशयुक्तं भक्तिशोभासनाथं
क्षितिविरचितशय्यं कौतुकागारमागात् ॥ ९४

अन्वयः। अथ इन्दुमौलिः तान् विबुधगणान् विसृज्य क्षितिधरपतिकन्यां करेण आददानः कनककलशयुक्तं भक्तिशोभासनाथं क्षितिविरचितशय्यं कौतुकागारम् आगात् ॥ ९४

अथेति। अथेन्दुमौलिः ईश्वरः तान् विबुधगणान् विसृज्य क्षितिधरपतिकन्यां पार्वतीं करेण आददानः कनककलशयुक्तं मङ्गलार्थमन्तर्निहितहैममयपूर्णकुम्भं भक्तयः पुष्पादिरचनाः तासां शोभया सनाथं सहितमित्यर्थः। क्षितिविरचितशय्यं क्षितौ विरचिता स्थण्डिले कल्पिता शय्या तल्पं यस्मिन् तत् तथोक्तम्। कौतुकागारमागात् शय्यागृहं जगाम। अत्र आश्वलायनः। "अत ऊर्द्ध्वमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणौ स्याताम्" इति। अत ऊर्द्ध्वं विवाहादूर्द्ध्वम् आत्रिरात्रादिति शेषः। "त्रिरात्रं द्वादशरात्रं वा" इति वचनात्। तथा कामशास्त्रेऽपि "अथ परिणयरात्रौ प्रक्रमेणैव किञ्चित् तिसृषु च रजनीषु स्वस्वभावा दुनोति। त्रिदिनमिह, न भिन्द्याद् ब्रह्मचर्य्यं न चास्या हृदयमननुरुध्य स्वेच्छया नर्म कुर्य्यात्" ॥ ९४

९४। करेण तृतीया करणे।

नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृताक्षेपमीशः।

अपि शयनसखीभ्यो दत्तवाचं कथञ्चित्
प्रमथमुखविकारैर्हासयामास गूढम् ॥ ९५

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
उमापरिणयो नाम सप्तमः सर्गः ॥ ७

अन्वयः । तत्र ईशः नवपरिणयलज्जाभूषणां तत्कृताक्षेपं वदनम् अपहरन्तीं शयनसखीभ्योऽपि कथञ्चित् दत्तवाचं गौरीं प्रमथमुखविकारैः गूढं हासयामास ॥ ९५

नवेति । तत्र कौतुकागारे ईशः ईश्वरः नवपरिणयेन नवोद्वाहेन या लज्जा सा भूषणं यस्यास्ताम् अत एव तेन ईश्वरेण कृताक्षेपं कृताकर्षणम् उन्नमितमिति यावत् । वदनमपहरन्तीं साचीकुर्वन्तीम् अयं लज्जानुभावः अनुभावान्तरमाह । शयनसखीभ्यः अपि शयने सहशायिनीभ्योऽपि नर्मसहचरीभ्योऽपीत्यर्थः । कथञ्चित् कृच्छ्रेण दत्तवाचं दत्तोत्तरां गौरीं प्रमथाः भृङ्गरीटिप्रभृतयः हास्यरसाधिदेवताः पशुपतेः पारिषदाः । यथाह भरतः—"शृङ्गारो विष्णुदेवत्यो हास्यः प्रमथदैवतः" इति । "प्रमथाः स्युः पारिषदाः" इत्यमरः । तेषां मुखविकारैः मुखविकृतचेष्टितैः गूढम् अप्रकाशं हासयामास, हासाद्युपायैर्लज्जामपाकर्त्तुं प्रवृत्त इत्यर्थः । यथाह गोनर्दः—"हासेन मधुना नर्मवचसा लज्जितां प्रियाम् । विलुप्तलज्जां कुर्वीत निपुणैश्च सखीजनैः" इति ॥ ९५

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायामुमापरिणयो
नाम सप्तमः सर्गः ॥ ७

---

# कुमारसम्भवचन्द्रिका ।

## प्रथमः सर्गः ।

वाच्यान्तरम् । दैवतात्मना हिमालयेन नगाधिराजेन भूयते । (येन) मानदण्डेन इव स्थितम् ॥ १

सरलार्थः । उत्तरस्यां दिशि दैवताधिष्ठाता हिमालयोनाम पर्व्वताधिराजोऽस्ति । स खलु पूर्वपश्चिमसमुद्रौ प्रविष्टः पृथिव्या विस्तारं परिमातुं विधात्रा निर्म्मिततुलादण्ड इव लक्ष्यते ॥ १

बङ्गानुवाद । উত্তরদিকে দেবতা-স্বরূপ হিমালয় নামক এক শ্রেষ্ঠ পর্ব্বত আছে। ইহার এক দিক্ পূর্ব্ব ও অন্য দিক্ পশ্চিম সমুদ্রে নিমগ্ন থাকায় বোধ হয়, যেন এই পর্ব্বত পৃথিবীর পরিমাণ করিবার জন্য তুলাদণ্ডরূপে বিদ্যমান রহিয়াছে ॥ ১

Eng Tran.—There is in the northern part of the world, a great mountain named Himalaya, which is worthily called the emperor of Hills. It is animated by a divine spirit, it spreads plunging itself into two seas east and west and thus looks as the measuring rod of the earth. (1)

हिन्दी अनुवाद । उत्तर दिशामें देवता प्रतिष्ठाता हिमालय नामका पूर्व और पश्चिम समुद्रकी सीमाको जताता हुआ, पृथ्वीका मानदण्डकी तरह स्थित है ॥ १

वाच्यान्तरम् । सर्व्वशैलैः पृथूपदिष्टा धरित्री दुदुहे ॥ २

सरलार्थः । अपरे पर्व्वता यम् वत्सं परिकल्प्य दोहनदक्षे सुमेरौ स्थिते सति गोरूपधरां पृथिवीम् उज्ज्वलानि रत्नानि ओषधीश्च दुदुहुः ॥ २

बङ्गानुवाद । অন্যান্য পর্ব্বতসকল ইহাকে ধেনুবৎস কল্পনা করিয়া দোহনদক্ষ সুমেরুর সমক্ষে পৃথুরাজের আজ্ঞায় গোরূপধারিণী পৃথিবী হইতে উজ্জ্বল রত্ন ও মহৌষধিসমূহ দোহন করিয়াছিলেন ॥ ২

Eng. Tran.—This is the selfsame mountain, which, as the story goes, the other mountains used as a calf; and the mount Meru served as a skilful milkman, of cows, It was on this occasion that the earth took the form of a milch cow, and the glittering gems and good many medicinal herbs of excellent virtue were milched from her. (2)

हिन्दी अनुवाद । जिस हिमालयको वत्स कल्पितकर गौ समान सुमेरु द्वारा शैलोंने पृथ्वीमेंसे सुन्दर रत्नादि और औषधियां दैवलोक दुहे ॥ २

वाच्यान्तरम् । हिमेन सौभाग्यविलोपिना न जातम् । एकेन दोषेण निमज्जति अङ्केन इव ॥ ३

सरलार्थः। अपरिमितरत्नप्रभवस्य हिमाद्रेस्तुषारं सौन्दर्यविघातकं न अभूत्। चन्द्रकिरणेषु कलङ्कवत् खलु दोषोऽमितगुणेषु विलीयते ॥ ३

बङ्गानुवाद। তুষারে আবৃত হইলেও বিবিধ রত্নের আকর এই হিমালয়ের সৌন্দর্য্য নষ্ট হয় নাই। যেমন চন্দ্রের কিরণ দ্বারা চন্দ্রের কলঙ্ক দূর হইয়া যায়, সেইরূপ নানাগুণের মধ্যে একমাত্র দোষ থাকিলে তাহা আর লক্ষ্য হয় না ॥ ৩

Eng. Tran.—It is the same Himalaya which is as if a mine of an unlimited quantity of gems so the snow on the peak of this mountain has not destroyed its beauty, because where there are great many qualifications, only one fault is not taken into account, just as the black spots of the moon are not noticed in its shining rays. (3)

हिन्दी अनुवाद। अनन्तरत्न प्रसव उस हिमालयकी सौभाग्यका शीतलतारूपी दोष लोप नहीं करसका क्योंकि चन्द्रकी शुभ्र किरणोंमें एक दोष भी गुणरूपही होता है ॥ ३

वाच्यान्तरम्। येन सम्पादयिची बलाहकच्छेदविभक्तरागा अकालसन्ध्या इव धातुमत्ता ध्रियते ॥ ४

सरलार्थः। असौ शिखरे बहुविधान् धातून् विभर्त्ति एतेषां धातूनां रक्तिमा मेघेषु संक्रमितः अकालसन्ध्यानिर्वीत्पाद्य अप्सरसां विभूषणे त्वरयति ॥ ४

बङ्गानुवाद। এই পর্ব্বতের চূড়ায় নানাবর্ণের বিবিধ ধাতু থাকায় ঐ সকল ধাতুর বর্ণসমূহ খণ্ড খণ্ড মেঘের উপর প্রতিফলিত হইলে মনে হয়,যেন অসময়ে সন্ধ্যা সমাগত হইয়াছে; তাহা দেখিয়া পর্ব্বতবাসী অপ্সরোগণ ত্বরান্বিত হইয়া বেশভূষা ধারণ করিতে উদ্যোগী হইয়া থাকেন ॥ ৪

Eng. Tran.—There is on the top of the mountain a large quantity of mineral earth which provides materials for the nymphs for the decoration of their own persons, while its reddish hues cast upon the fleecy clouds, are mistaken for the untimely appearance of evening. (4)

हिन्दी अनुवाद। जो हिमाद्रि अप्सराओंकी विलासोंकी सम्पादन करनेवाली मेघोंके खण्ड खण्डमें भिना है राग जिसका ऐसी अकालसन्ध्याकी तरह धातुमत्ता ( सुन्दर धातु ) धारण करता है ॥ ४

वाच्यान्तरम्। सिद्धैः उद्वेजितैः आश्रीयन्ते ॥ ५

सरलार्थः। सिद्धा अस्य मध्यदेशे सञ्चरतां मेघानां नितम्बस्थितसानुगतां छायां निषेव्य तत्र वृष्टिभिः क्लेशिताः सन्तः रौद्रवन्ति शृङ्गाणि आश्रयन्ते ॥ ५

बङ्गानुवाद। এই পর্ব্বতের মধ্যদেশ পর্য্যন্ত মেঘসকল বিচরণ করিয়া থাকে। তাহাতে তাহার সানুদেশে মেঘের ছায়া পতিত হয়। সেই স্থানে সিদ্ধগণ বিশ্রাম করিতে করিতে যখন বৃষ্টিধারায় ক্লিষ্ট হন, তখন তাঁহারা মেঘমালার উপরিস্থিত রৌদ্রতপ্ত শৃঙ্গসমূহ আশ্রয় করিয়া থাকেন ॥ ৫

Eng. Tran.—Here Siddhas enjoy cool shade of the clouds which wander up to the middle part of the hill, but when it rains they being

troubled on the lower region, take shelter on the top upon which the sun shines. (6)

हिन्दी अनुवाद। कटि तक सञ्चार करनेवाले मेघोंकी अधःतटगत छाया आश्रय कर दृष्टिसे क्लेशित भये हुए सिद्धगण उस हिमालयके उच्चशृङ्गोंका आश्रय लेते हैं ॥ ५

वाच्यान्तरम्। किरातैः मार्गः विद्यते ॥ ६

सरलार्थः। यत्र किराताः हिमस्रावेण धौतशोणितं गजान् निहत्य यथेष्टचारिणां मृगेन्द्राणां वर्त्म अनालोक्यापि नखमुक्तमुक्ताफलैर्जानन्ति ॥ ६

बङ्गानुवाद। এই পর্ব্বতে যখন সিংহগণ হস্তি নিধন করিয়া রক্তরঞ্জিত-পদবিন্যাসপূর্ব্বক অন্যত্র গমন করে, তখন সেই রক্ত তুষারজলে ধৌত হইয়া যায়, সুতরাং সিংহগণ যে কোন্ পথে গিয়াছে, তাহা পদচিহ্ন দ্বারা স্থির করা যায় না; কিন্তু ব্যাধেরা সিংহদিগের নখরন্ধ্র হইতে পতিত গজমুক্তা দেখিয়া তাহাদিগের গমনপথ জানিতে পারে। ৬

Eng. Tran.—Here the hunters find out the path of the lions by means of pearls which have been dropped from the cavity of their claws and are scattered about the way, for when the lions kill elephants, the pearls of the heads of the elephants enter into their claws and the bloody footprints are effaced by the melting snow. (6)

हिन्दी अनुवाद। जिस पर्वतके ऊपर व्याध लोक हिमनिष्यन्दसे चालित है रक्त जिसका ऐसा, मारा है हाथियोंको जिनोंने ऐसे सिंहोंका पद न देखते हुए भी हाथियोंके गण्डस्थल स्थित मोती सिंहोंके नखरन्ध्रसे सर्वत्र पड़े देख मार्गका अनुमान करते हैं ॥ ६

वाच्यान्तरम्। धातुरसेन न्यस्ताक्षराभिः कुञ्जरबिन्दुशोणाभिः भूर्ज्जत्वग्भिः उपयोगः व्रज्यते ॥ ७

सरलार्थः। भूर्जयुक्तो धातुबहुलो हिमालयः अप्सरसां मदनलेखनसाधनानि सम्पादयामास यतस्ताः भूर्ज्जत्वचु सिन्दूरादिधातुद्रवेण स्वाभिप्रायव्यञ्जकानि पदानि लिखित्वा रक्ताक्षरविन्यासात् पद्मकाञ्चितकरिगात्रोपमानि तानि भूर्ज्जपत्राणि प्रियजनेभ्यः प्रेरयन्ति ॥ ७

बङ्गानुवाद। এই হিমাচলে বিদ্যাধরীগণ যখন প্রেম-পত্র লিখিয়া থাকেন, তখন তাঁহারা ভূর্জ্জপত্রের উপর সিন্দূরাদি ধাতুরস দ্বারা লিখিয়া থাকেন, তাহাতে সেই ভূর্জ্জপত্র হস্তিশিরস্থিত রক্তবর্ণ বিন্দুসমূহের ন্যায় অনুমিত হইয়া থাকে। হিমালয়ের ভূর্জ্জপত্রসকল এইরূপ কামব্যঞ্জক পত্র লিখন কার্য্যে বিশেষ উপকার করিয়া থাকে ॥ ৭

Eng. Tran.—In this mountain pieces of bark of birch-trees with letters written upon them by means of liquified mineral earth look as red as the spots which are seen on an elephant's skin and serve as the love-letters to the ladies of the Vidyadhar tribe. (7)

हिन्दी अनुवाद। जिस हिमाचल पर सिन्दूरादि द्रवसे लिखितवर्ण इसी लिए हाथीके बिन्दुओंकी तरह रक्तवर्ण भूर्जपत्र विद्याधरोंके स्त्रियोंके मदन लेख क्रियाके उपयोगमें आते हैं, दिव्याङ्गनाओंके विहार योग्य है यह तात्पर्य्य ॥ ७

वाच्यान्तरम्। येन पूरयता श्रूयते ॥ ८

सरलार्थः। यः गुहामुखोत्थितेन वायुना वंशानां रन्ध्रप्रदेशं धमन् उच्चैः गानं करिष्यताम् किन्नराणां तानप्रदायित्वं इच्छतीव ॥ ८

बङ्गानुवाद। यथन हिमालयस्थित कीचकजातीय वंशের ছিদ্রসমূহ গুহামুখোৎপন্ন বায়ুতে পরিপূরিত হইয়া বংশীর ন্যায় শব্দ করিতে থাকে, তখন মনে হয়, যেন কিন্নরেরা উচ্চৈঃস্বরে গান করিবে ভাবিয়া তাঁহাদিগের গানে তান প্রদান করিবার নিমিত্ত হিমালয় বংশীবাদন করিতেছেন ॥ ৮

Eng. Tran.—This mountain fills the pores of the singing bamboos with a breeze coming from the mouth of the caves and as if desires to play on the flute at the time when the Kinnars are ready to sing at the top of their voice. (8)

हिन्दी अनुवाद। जो हिमाद्रि दरीरूपी जो मुख उससे निकले हुए कीचकोंके (वायुसे बजनेवाले बांसके) छिद्रोंका पूरण करते वायुसे ऊंचे स्वरसे गान करनेवाले किन्नरोंके तान क्रियाको सम्पूर्णरूपसे धारण करता है ॥ ८

वाच्यान्तरम्। प्रसूतेन गन्धेन सुरभीक्रियन्ते ॥ ९

सरलार्थः। यस्मिन् गजैः गण्डस्थलखर्जूं तानि अपनेतुं घर्षितानां सरलद्रुमाणां चरितानि क्षीराणि गन्धैः सानूनि सुरभीकुर्व्वन्ति ॥ ९

বঙ্গানুবাদ। এই পর্ব্বতে হস্তিগণ গণ্ডকণ্ডূয়ন নিবারণের নিমিত্ত সরল নামক সৌরভশালী দেবদারু বৃক্ষে গণ্ডস্থল ঘর্ষণ করে, তাহাতে সেই বৃক্ষের নির্য্যাস ক্ষরিতে থাকে এবং তাহার সৌরভে তটপ্রদেশসকল আমোদিত হইয়া থাকে ॥ ৯

Eng. Tran.—In this mountain when the elephants shake the pine trees and rub their itching cheeks against their trunks the juice comes out and the uplands are filled with its sweet odour. (9)

हिन्दी अनुवाद। हाथियोंने कपोलगत कण्डू दूर करनेके लिए घीसा है माथा जिसपर ऐसे सरल वृक्षोंका गन्ध चारों तरफ फैलकर सुगन्ध देता है ॥ ९

वाच्यान्तरम्। दरीगृहोत्सङ्गनिषक्तभाभिः औषधिभिः अतैलपूरैः सुरतप्रदीपैः भूयते ॥१०

सरलार्थः। यत्र गुहागृहाभ्यन्तरे संसक्तकिरणा ओषधयः पत्नीभिः सार्द्धं क्रीड़तां वनेचराणां अनपेक्षिततैलसेकाः सुरतकार्य्येषु प्रदीपाः भवन्ति ॥ १०

বঙ্গানুবাদ। এইস্থানে ওষধি নামে এক লতা আছে, রাত্রিকালে তাহার জ্যোতি নির্গত হয়। সেই জ্যোতি গুহাগৃহের অভ্যন্তরে পতিত হইয়া থাকে। সেই গুহাগৃহে সস্ত্রীক কিরাতগণ বাস করে; তাহারা যথন সুরতসুখসম্ভোগে রত হয়, তখন সেই ঔষধি তৈলবিহীন প্রদীপের কার্য্য সম্পন্ন করিয়া থাকে ॥ ১০

Eng. Tran—There is in this mountain a certin kind of herbs. At night they are luminous and the cave becomes lit up with the light, so the herbs serve as lamps without oil when the the men of the forest enjoy the company of their wives. (10)

हिन्दी अनुवाद। जिस हिमाचलपर रमसाथ वनचरोंके रात्रिमें दरीरूपी गृहसे निकली है दीप्ति जिनकी ऐसी औषधियां विना तैलके दियाका काम करती हैं ॥ १०

वाच्यान्तरम् । दुर्व्वहश्रोणिपयोधरभाराभिः अश्वमुखीभिर्मन्दा गतिः न भिद्यते ॥ ११

सरलार्थः । अथ तुषाराच्छन्ने पथि गच्छन्तीनां योषितां अङ्गुलिपार्ष्णिभागेषु सञ्जाते क्लेशेऽपि नितम्बपयोधरभारात् मन्दा गतिर्बभूव एव ॥ ११

বঙ্গানুবাদ। এখানকার উপরিস্থিত পথগুলি তুষারে আবৃত থাকায় গমন করিবার সময় পদতলে অত্যন্ত যন্ত্রণা অনুভূত হয়। তবুও কিন্নরীগণ স্ব স্ব গুরু নিতম্বে এরূপ দুর্ব্বহভারক্লিষ্টা যে, তাঁহারা সেই পথে গমন করিবার সময়ে আপনাদের মন্থরগতি ত্যাগ করিতে পারে না॥ ১১

Eng. Trin. - In this mountain the horsefaced females of the kinnar tribe though trading the tracks which are covered by the solid snow that strikes chill to the soles on their foot, can not abandon their usual slow movement, as they are laden with their heavy brea t and hips. (11)

हिन्दी अनुवाद । अङ्गुलियोंको स्पर्श होतेही क्लेश देनेवाला घनीभूत हिम रहते भी किन्नरोंकी स्त्रियां दुर्वह पयोधरके भारसे अपने मन्दगतिको नहीं छोड़ती है ॥ ११

वाच्यान्तरम् । येन दिवाभीतः लीनः अन्धकारः रक्ष्यते । ममत्वेन भूयते ॥ १२

सरलार्थः । योऽद्रि गुहालीनं दिवालोकभीतमिवान्धकारं सौरकरात् रक्षति यतः नीचे जनेऽपि शरणागते सति महतां तत्र ममता वर्त्तते ॥ १२

বঙ্গানুবাদ। এই হিমালয়গুহাস্থ অন্ধকার যেন দিবাভাগে ভীত হইয়া লুকাইয়া থাকে, এবং পর্ব্বতরাজ যেন সেই অন্ধকারকে সূর্য্যের হস্ত হইতে রক্ষা করিয়া থাকেন; কারণ মহৎ ব্যক্তির স্বভাবই এই, নীচব্যক্তিও শরণাগত হইলে তাহার প্রতি সজ্জনের ন্যায় স্নেহ প্রদর্শন করেন॥ ১২

Eng. Tran.—Darkness being afraid as it were of the light of the sun has taken refuge in its caves and the mountain saves it from the sun, for all noble souls take pity on the low, exactly as they feel regard for the worthy persons, when the low search for a refuge with them. (12)

हिन्दी अनुवाद । दिवाकर ( सूर्य्य ) से डरे हुए अन्धकारको जो हिमाचल अपने गुहामें दिवाभीतकी तरह आश्रय देता है क्योंकि महानुभावोंकी यह प्रकृतीही है कि क्षुद्र भी यदि शरणागत हो जाय तो उसकी रक्षा करना ॥ १२

वाच्यान्तरम् । चमरीभिः गिरिराजशब्दः अर्थयुक्तः क्रियते ॥ १३

सरलार्थः । चमर्थ्यः सन्ततं लाङ्गूलविधननविसारिकान्तिभिः ज्योत्स्नावत् शुभ्रैः चामरैः अस्य हिमालयस्य गिरिराज इति नाम अर्थयुक्तं कुर्वन्ति ॥ १३

বঙ্গানুবাদ। হিমালয় যে গিরিরাজ, সেই নামের সার্থকতা সম্পাদন করিবার নিমিত্ত চমরী মৃগগণ ইতস্ততঃ পুচ্ছ সঞ্চালন করিয়া জ্যোৎস্নাবৎ শুভ্রবর্ণ চামরের শোভা চতুর্দ্দিকে বিস্তার করিয়া থাকে॥ ১৩

Eng. Tran.—In this mountain the female yaks wave their spreading tails which are white as the beams of the moon hither and thi-

ther and provide that insignia of royalty, the chowri brush for this mountain king, whose sovereign title thus ceases to be a vain and unmeaning name. (13)

हिन्दी अनुवाद। लाङ्गूलोंके विक्षेपसे विसृमर ( फैली हुई है ) शोभा जीनकी ऐसी मृगियां चन्द्रकिरणोंके समान शुभ्र चामरोंको इधर उधर घुमाकर राजा यह शब्द सफटकर रही है ( हिमाचल राजा है इसीलिए चामर मस्तकपर घुमाती है )॥ १३

वाच्यान्तरम्। दरीगृहद्वारविलम्बिबिम्बैः जलदैः तिरस्करिणीभिः भूयते ॥ १४

सरलार्थः। हिमालयगुहासु कान्तैर्वसनेषु आच्छिन्नेषु किन्नर्यो लज्जया प्रतिपत्तिमूढा यदा भवन्ति, तावद्दैवगत्या गुहामुखेषु आपतिताः तोयदाः काण्डपटकार्थं सम्पाद्य तासां आलीनताजाड्यं त्याजयन्ति ॥ १४

वङ्गानुवाद। এই পর্ব্বতের গুহাগৃহমধ্যে কিন্নর-কিন্নরীগণ সুরত সম্ভোগ করেন,যখন কিন্নর কর্ত্তৃক কিন্নরীগণ অ ক্ষিপ্তবস্ত্রা হইয়া লজ্জা পাইতে থাকেন, তখন সহসা লম্বিত মেঘমালা গুহ দ্বারের সম্মুখে আসিয়া যবনিকার ন্যায় কার্য্য করে,তাহাতে তাহাদের লজ্জা নিবারিত হয়॥১৪

Eng. Tran.—The hor efaced tribe both male and female enjoyed the company of one another and conducted sexual intercourse in the cave of this mountains when the females of kinnurs having been made naked, would feel delicacy, then the patches of clouds in front of their cave, served the purpose of a curtain and thus saved them from shame. ( 14 )

हिन्दी अनुवाद। जिस हिमाचलपर वस्त्रापहरणसे लज्जित किम्पुरुषोंकी स्त्रियोंको दरीरूपी जो गृह उसके द्वार लम्बायमान मेघमण्डल तिरस्कृत करते हैं॥ १४

वाच्यान्तरम्। वोढारं कम्पितदेवदारुं भिन्नशिखण्डिबर्हं यद्वायुं अन्विष्टमृगाः किराताः आसेवन्ते ॥ १५

सरलार्थः। अत्र गङ्गाशीकरशीतलैः देवदारुकम्पनेन सुरभिभिः कटिबद्धानि मयूरपुच्छानि ईषद्विश्लेषयद्भिः मन्दैः समीरणैः क्रियते मृगान्वेषणे तत्पराणां क्लान्तानां व्याधानां श्रान्तिविनोदः ॥ १५

वङ्गानुवाद। এখানকার বায়ু গঙ্গাপ্রবাহের জলকণা বহন করিয়া পুনঃপুনঃ দেবদারু বৃক্ষ আন্দোলন পূর্ব্বক ময়ূরপুচ্ছসকল বিভাগ করিয়া দেয় এবং মৃগানুসন্ধানে প্রবৃত্ত কিরাতগণ সেই বায়ু সেবন করে॥ ১৫

Eng. Tran.—Here the hunters who are tired by chasing the beasts, enjoy the breeze, that bears particles of water from the springs of the Bhagirathi, shakes the Debadaru tree again and again and gently separates the feathers on the peacock's tail. (15)

हिन्दी अनुवाद। गङ्गाप्रवाह पयः कणोंका वहन करनेवाला पुनःपुनः कम्पित किया है देवदारु ( वृक्ष ) जिसने मयूरोंके परोंको भिन्न करता हुआ वायु जिस हिमाचलपर मृगोंको खोजनेवाले व्याधोंसे सेवित होता है॥ १५

वाच्यान्तरम्। अधः परिवर्त्तमानेन विवस्वता प्रबोध्यन्ते ॥ १६

सरलार्थ। सप्तर्षयः अस्य उच्चे शिखरे स्थिते सरसि जातानि पद्मानि उच्चिन्वन्ति, अवशिष्टानि ऊर्द्धस्थितानि पद्मानि अधोवर्त्तमानस्य सूर्य्यस्य ऊर्द्धगामिभिः किरणैः विकाशं भजन्ते ॥ १६

बङ्गानुवाद। এই পর্ব্বতরাজ এত উচ্চ যে, তাঁহার শিখরদেশের নিম্নে সূর্য্যদেব পরিভ্রমণ করেন, সেই পর্ব্বতের উর্দ্ধশিখরস্থ সরোবরে যে সকল পদ্ম সপ্তর্ষি কর্ত্তৃক চিত হইয়া অবশিষ্ট থাকে, তাহার অধোদেশে সূর্য্যদেব অবস্থান পূর্ব্বক উর্দ্ধে কিরণজাল বিস্তার করিয়া তাহ দিগকে প্রস্ফুটিত করিয়া থাকেন। ১৬

Eng. Tran.—B l w the peak of this mountain the sun perf rms its diurnal rev lution and it shines forth upwardly to cause the lotuses on its topmost lake to bl w which remain after the S ven Saints have gathered a number with their hands. (16)

हिन्दी अनुवाद। सप्तर्षियोंके हस्तसे लूनहीने पर बचे हुए कमल जिस हिमालयके सूर्य्य नीचे जाता हुआ पद्मोंको फुलाता है॥ १६

वाच्यान्तरम्। प्रजापतिना अन्वभीयत॥ १७

सरलार्थः। हिमालये यज्ञसाधनानि सोमलतादीनि बाहुल्येन उत्पद्यन्ते असौ हि भूभारधारणक्षमः इति विविच्य धाता यज्ञे भस्यांशं निरूप्य एनं शैलाधिपं ज्ञातवान्॥ १७॥

बङ्गानुवाद। বিধাতা ঐ পর্ব্বতের যজ্ঞীয় বস্তু উৎপাদন ও ভূধারণ যোগ্য ক্ষমতা দেখিয়া তাঁহার জন্য তাঁহাকে যজ্ঞের একভাগ বিধান পূর্ব্বক সকল পর্ব্বতের রাজা করিয়াছেন॥ ১৭

Eng. Tran. Providence himself wil ingly made this mountain the lord of hills because it brings forth articles used in sacrificial rites and sustains the earth with its massive and substantial form. He conferred on him also the right to participate in offerings performed at sacrificial rites. (17)

हिन्दी अनुवाद। जिस हिमालयको पृथ्वी धारण करने योग्यता और यागमें उपयोगी वस्तुओंका उत्पत्ति स्थानत्व देख ब्रह्माने स्वयं कल्पित किया है भाग जिसका ऐसा पर्वतोंका आधिपत्य दिया॥ १७

वाच्यान्तरम्। मेरुसखेन स्थितिज्ञेन तेन मानसी माननीया आत्मानुरूपा मेना नाम कन्या उपयेमे॥ १८

सरलार्थः। बन्धुसम्पन्नः मर्य्यादाभिज्ञः स हिमालयः पितॄणां मनःसङ्कल्पजन्यां मुनीनामपि पूज्यां स्वानुरूपां मेनकानाम्नीं कन्यां कुलरक्षार्थं यथाशास्त्रं परिणीतवान्॥ १८

बङ्गानुवाद। পিতৃপুরুষদিগের মানসোদ্ভবা মেনকা নাম্নী এক কন্যা ছিল, তিনি বিদ্যাবতী ও মুনিগণেরও পূজনীয়া ছিলেন। সম্মানাভিজ্ঞ হিমালয় শাস্ত্রের আদেশ অনুসারে সেই মেনকাকে আপনার যোগ্য বিবেচনা করিয়া যথাশাস্ত্র বিবাহ করিয়াছিলেন॥ ১৮

Eng. Tran.—He knew the ordinance (that householders should marry) and being accompanied by his friend Meru, married in proper form for the purpose of perpetuating his race, Menaka, a lady who was the mind-born daughter of the Pitries, who was very much

regarded by the pious saints and became a worthy wife in all respects (18)

हिन्दी अनुवाद। पितरोंके कुलकी वृद्धि करनेके अभिप्राय उस हिमालयने अपने अनुरूप मेनकासे विवाह किया॥ १८

व्याख्यान्तरम्। गर्भं···अभूयत॥ १९

सरलार्थः। अथ कालक्रमेण मेनकाहिमवतोः सुरतकर्म्मणि प्रवृत्तयोः सत्योः पर्व्वतराजमहिषी मेनका गर्भवती बभूव॥ १९

बङ्गानुवाद। कालक्रमে মেনকা ও হিমালয় প্রেমসুখসম্ভোগে প্রবৃত্ত হইলে মনোহারিণী যৌবনশালিনী মেনকা গর্ভধারণ করিলেন॥ ১৯

Eng. Tran.—They were both very beautiful. So in course of time when they were engaged in sexual intercourse, the wife of the lord of mountains, who was beautiful and who just arrived at her prime of youth shewed a sign of pregnancy. (19)

हिन्दी अनुवाद। कालक्रमसे उन दोनोंके सुरत प्रसङ्ग होने पर पर्वतराज पत्नी युवावस्थाको धारण करनेवाली मेनका सुन्दर गर्भको धारण करती भयि॥ १९

व्याख्यान्तरम्। तया नागवधूपभोग्य अम्भोनिधिबद्धसख्यः अवेदनाज्ञः सुतः अमूयत॥२०

सरलार्थः। अथ काले मेनका नागकन्यां परिणेतारम् मैनाकं सुषुवे। यः समुद्रेण सह मैत्रींकुर्व्वन् इन्द्रस्य कुलिशाघातं परिहाय समुद्रे कालं निनाय॥ २०

বঙ্গানুবাদ। অতঃপর মেনকা মৈনাক নামক পুত্র প্রসব করিলেন। যখন দৈত্যারি ইন্দ্র পর্ব্বতদিগের প্রতি কুপিত হইয়া পক্ষচ্ছেদনোদ্যত হইলেন, তখন তিনি সমুদ্রের সহিত বন্ধুত্ব স্থাপন পূর্ব্বক তদীয় বজ্রাঘাতের যন্ত্রণা অনুভব করেন নাই। সমুদ্র মধ্য দিয়া তিনি পাতালে প্রবেশ পূর্ব্বক নাগকন্যাগণকে বিবাহ করিয়া কালাতিপাত করিয়াছিলেন॥ ২০

Eng. Tran—She brought forth a son named Mainaka, who became the favourite husband of damsels of the serpent-race, made friends with the ocean-gods and did never know the wounds inflicted by the thunderbolt of Indra though the latter who killed the demon Britra and clipped the wings of hills, had got very angry. (20)

हिन्दी अनुवाद। नवमास पूरे हो जाने पर पर्वत कन्याओंसे उपभोग्य समुद्रके साथ सख्य जोड़नेवाले मैनाकको उसने उत्पन्न किया जिसने इन्द्र क्रुद्ध होने पर भी वज्रकी वेदनाको नहीं जाना॥ २०

व्याख्यान्तरम्। कन्यया भवपूर्वपत्न्या सत्या सत्या प्रयुक्तया योगविसृष्टदेहया शैलवधूः प्रपेदे॥ २१

सरलार्थः। दक्षयज्ञे पतिनिन्दया आत्मानम् अवमानितं मन्यमाना पित्रे क्रुद्धा सती योगमार्गेण प्राणान् त्यक्तवती। पुनरपि उत्पत्तये मेनकायाः गर्भसनुप्राविशत्॥ २१

বঙ্গানুবাদ। অনন্তর মহাদেবের প্রথমপত্নী দক্ষকন্যা পতিব্রতা সতী পিতৃকৃত অপমান সহ্য করিতে না পারিয়া যোগবলে তনুত্যাগ পূর্ব্বক মেনকার গর্ভে জন্মগ্রহণ করিতে উপস্থিত হইলেন॥ ২১

Eng. Tarn.—Now Sati, daughter of Daksha, who was the first wife of Mahadeva and who was devoted to her husband, destroyed her life by ascetic meditation owing to her father's rudeness having hurt her departed spirit came to the above mentioned bride of the Hill to take birth. ( 21 )

हिन्दी अनुवाद। बाद योगसे देहको त्यागनेवाली दक्षकन्या महादेवजीकी पूर्व पत्नी सती, मेनकाके गर्भसे उत्पन्न हुई॥ २१

वाच्यान्तरम्। भूधराणामधिपः भव्यां तां उत्साहगुणः सम्पदमिव उदपीपदत् ॥ २२

सरलार्थः। कल्याणी सा सती हिमवता नियमवत्याम् मेनकायां यथायथाचरणात् सुचेष्टायां नीतौ उत्साहशक्त्या सम्पदिव उत्पादिता ॥ २२

বঙ্গানুবাদ। যেমন বুদ্ধি পূর্ব্বক নীতি প্রয়োগ করিলে তাহা উৎসাহের সংযোগে সম্পদ প্রসব করে, সেইরূপ পর্ব্বতরাজ শুদ্ধাচারিণী নিজ মহিষীর গর্ভে ভূতপূর্ব্ব দক্ষকন্যাকে জন্মদান করিলেন॥ ২২

Eng. Tran.—Just as activity produces fortune out of a well pursued plan of action so she who was a blessed girl of good qualities, was born of Menaka,who was devoted to pious works, by him the monarch of the sustainers of the earth. ( 22 )

हिन्दी अनुवाद। भव्या सती भूधरराज ( पर्वतराज ) ने नियमसे रहनेवाली मेनकामें उत्तम प्रयोग उत्पन्नकी हुई सम्पदकी तरह पार्वतीको उत्पन्न किया ॥ २२

वाच्यान्तरम्। प्रसन्नदिशा, पांशुविविक्तवातेन, शङ्खस्वनानन्तरपुष्पवृष्टिना तज्जन्मदिनेन बभूवे ॥ २३

सरलार्थः। सतीजन्मदिने दिशः निर्म्मला अभवन्, मन्दाः सुरभयः शीतलाः धूलिसम्पर्कशून्याः वाताः ववुः देवाः शङ्खशब्दानन्तरं पुष्पाणि ववर्षुः। तद्दिनं देवतिर्य्यङ्मनुष्यादीनाम् आनन्दाय बभूव ॥ २३

বঙ্গানুবাদ। যে দিন তাঁহার জন্ম হইল, সে দিন দিক্ সকল নির্ম্মল ছিল ও ধূলিশূন্য, বায়ু মন্দ মন্দ বহিতে লাগিল। দেবলোকে শঙ্খধ্বনি এবং তাহার পর পুষ্পবৃষ্টি হইতে লাগিল, সুতরাং সেইদিনে স্থাবরজঙ্গমাদি সকল প্রাণীর সুখের উদয় হইয়াছিল॥ ২৩

Eng. Tran.—On the day of her birth, the horizon was unclouded, breezes blew free from dust, conch-shells were blown and floral shower followed. So it was a joyous day for all corporeal beings whether stationery or moving. ( 23 )

हिन्दी अनुवाद। पार्वतीके उत्पन्न होने पर आकाशसे पुष्पवृष्टि हुई दुन्दुभि नाद हुआ सारांश वह जन्मदिन स्थावर जङ्गम दोनो देहधारियोंका सुखदायक हुआ ॥ २३

वाच्यान्तरम्। सविता विदूरभूम्या इव चकाशे ॥ २४

सरलार्थ.। यदासौ कन्या प्रसूता तदास्याः शरीरप्रभया नवमेघशब्दात् उद्गच्छन्त्या रत्नशलाकया विदूरभूमिरिव प्रसूती अतीव रराज ॥ २४

বঙ্গানুবাদ। মেঘের শব্দ হইলে বিদুর নামক পর্ব্বতস্থলী যেমন উজ্জ্বলকান্তিবিশিষ্ট মণিসমূহে শোভিত হয়, সেইরূপ মেনকা নবপ্রসূত সৌন্দর্য্যসম্পন্না কন্যার রূপে শোভা পাইয়াছিলেন॥ ২৪

Eng. Tran.—The newborn babe, who was of a radiant form, illuminated her mother, as the tract near the Vidur hill, glitters with the vein of precious stones which emerges from under the ground at the time when the newly gathered clouds roar aloft. (24)

हिन्दी अनुवाद। देदीप्यमान उस कन्यासे मेनका मेघशब्दके बाद उत्पन्न भई बिजलीकी तरह शोभी॥ २४

वाच्यान्तरम्। दिनोदयया तया चान्द्रमस्या लेखया इव परिवर्द्धमानया लावण्यमयाः विशेषाः पुपुषिरे॥ २५

सरलार्थः। यथा चन्द्रकला उदिता प्रतिदिनं नवनवज्योत्स्नापरिपूर्णकलया परिवर्द्धमाना वर्द्धते तथा सा हिमराजकन्या मनोज्ञैः अङ्गप्रत्यङ्गैः लावण्यपरिपूर्णा सती ववृधे॥ २५

বঙ্গানুবাদ। নবোদিত চন্দ্রকলা যেমন প্রতিদিন নূতন নূতন জ্যোৎস্নাময়ী কলাসংযোগে পুষ্টিলাভ করে সেইরূপ সেই নবজাত বালিকার কলেবর বৃদ্ধি পাইতে লাগিল এবং শরীর অপূর্ব্ব লাবণ্যে পরিপূর্ণ হইতে লাগিল॥ ২৫

Eng. Tran.—Just as the lunar digit appearing after the new moon grows larger and larger day by day adding to its size fresh and fresh parts each being steeped in lustre as it were, so did she grow day by day and the beauty seemed to supply the material with which the limbs of her body were formed. (25)

हिन्दी अनुवाद। दिनों दिन वह पार्वती चन्द्रमाकी लेखा जैसी बढ़ती हुई दीप्ति है भीतर जिनके ऐसी चन्द्रमाकी कलाकी तरह लावण्यमय अङ्गोंकी वृद्धि करने तत्पर दिखाई॥ २५

वाच्यान्तरम्। बन्धुजनेन बन्धुप्रिया सा जुहुवे, निषिद्धया तया सुमुख्या उमाख्या जग्मे॥ २६

सरलार्थः। ज्ञातिवर्गः पित्रादिपूर्वसम्बन्धोपाधिकेन पार्वतीइतिनाम्ना ताम् आहुतवान् पश्चात् शिवम् आराधयितुं यदा सा तपश्चरितुम् उपचक्रमे तदा मेनका (उः भोः वत्से) मा तपः कुरु इत्यादि वाक्यैरेनां निषिद्धवती तदा प्रभृति सा उमा इति नाम प्राप्तवती॥ २६

বঙ্গানুবাদ। ক্রমে বালিকা আত্মীয়স্বজনদিগের প্রিয়পাত্রী হইয়া উঠিলেন। তাঁহারা পিতার সম্বন্ধ অনুসারে তাঁহাকে পার্ব্বতী বলিয়া ডাকিতেন। পরে মেনকা উ—মা (না গো মা) তপস্যা করিও না এই কথা বলিয়া তাঁহাকে তপস্যা করিতে নিষেধ করিয়াছিলেন বলিয়া তাঁহার উমা নাম হয়॥ ২৬

Eng. Tran.—All her relatives called her Parvati—a name derived from the family of her father, After this when her mother desisted

her from practising penance by saying "उ—मा Oh no" the beautiful girl was thence forward named Uma. (25)

हिन्दी अनुवाद। बान्धवप्रिया उस पार्वतीको बन्धुजन पार्वती कहकर पुकारें, उ, इसका अर्थ सम्बोधन होता है अर्थात् हे बाले मा मत करो इस चालसे मातासे तपाचरणमें बार बार निषिद्ध वह बाला उमा नामकी प्राप्त हुई ॥ २६

वाच्यान्तरम्। दृष्ट्या तृप्तिः न जग्मे हिरिफमालया सविशेषसङ्गया भूयते ॥ २७

सरलार्थः। हिमवतो बहुषु अपत्येषु सत्सु तस्यां दुहितरि नितरां स्नेह आसीत्. यथा वसन्तऋतौ कुसुमेषु प्रस्फुटितेषु अपि भृङ्गाः आम्रमुकुलेषु विशेषासक्ताः भवन्ति ॥ २७

বঙ্গানুবাদ। হিমালয়ের অনেক পুত্রকন্যা সত্ত্বেও যেন সেই কন্যাটিকে দেখিয়া তাঁহার নয়নের তৃপ্তি হইত না। দেখ, বসন্তকালে অনেক পুষ্প ফুটিয়া থাকে, কিন্তু ভ্রমরকুল আম্র-মুকুলেই একান্ত আসক্ত হইয়া থাকে ॥ ২৭

Eng. Tran.—Just as a string of black bees which are seen in spring, especially attaches itself to the blossom stalk of the mango-tree leaving the endless number of flowers at the time, so though the mountain-god had many sons and daughters, yet he was never satiated with gazing at that newborn female child (27)

हिन्दी अनुवाद। अनन्तर पुत्र होने पर भी पार्वती परसे हिमालयकी दृष्टि क्षणमात्र भी हटि नहीं (देखने तृप्ति नहीं पाया) क्योंकि वसन्तमें बहुत पुष्प होने पर भी भ्रमर दल चूतपुष्पसे कदापि हटते नहीं ॥ २७

वाच्यान्तरम्। प्रभामहती शिखा दीपमिव, त्रिमार्गा मार्गमिव, संस्कारवती गीः मनीषिणमिव, सा तं पूतवती, विभूषितवती च ॥ २८

सरलार्थः। पावनस्यापि: सम्पर्कात् पवित्रः प्रभापटलेनालङ्कृतः दीप इव मन्दाकिन्या सुरवर्त्म इव व्याकरणजन्यशुद्ध्युपेतया वाचा विद्वज्जन इव तया पार्वत्या स हिमालयः पवित्रः अलङ्कृतश्च बभूव ॥ २८

বঙ্গানুবাদ। যেমন অত্যুজ্জ্বল শিখা দ্বারা প্রদীপ সুন্দর ও পবিত্র হয়, যেমন স্বর্গপথে মন্দাকিনী থাকায় তাহার শোভা ও পবিত্রতা উভয়ই হইয়াছে, যেমন বিদ্বজ্জন পরিশুদ্ধ বাক্য প্রয়োগ করিতে সক্ষম হইলে তিনি লোকের নিকট শ্রদ্ধাস্পদ ও পবিত্র হইয়া থাকেন, সেইরূপ গিরিরাজের এই কন্যা জন্মগ্রহণ করাতে তাঁহার গৃহ পবিত্র ও শোভিত হইয়াছিল ॥ ২৮

Eng. Tran.—Her father is both sanctified and adorned by her birth, as a lamp is by a large and glowing flame, as the path of heaven by the river that flows in three separate streams, and as a learned man by language which is correct and chaste. (28)

हिन्दी अनुवाद। बड़ी प्रभासे दीपकी तरह मन्दाकिनी (गङ्गासे) आकाशमार्गकी तरह और शुद्धवाणीसे वह विद्वान्की तरह वह पार्वतीसे शोभा ॥ २८

वाच्यान्तरम्। क्रीडारसं निर्विंशन्ती इव तया मध्यगतया रेमे ॥ २९

सरलार्थः। इयं बाला बाल्ये सखीभिः परिवृता क्रीडासुखमनुभवितुमिव गङ्गायाः

पुलिनेषु वालुकामयवेदीनां निर्म्माणेन कन्दुकक्रीड़या कृत्रिमपुत्रिकादिकं विधाय च रेमे ॥ २९

বঙ্গানুবাদ। সেই বালিকা আর একবার বাল্যখেলার আস্বাদ লইবার ইচ্ছায় যেন সখী-গণবেষ্টিত হইয়া ক্রীড়াচ্ছলে মন্দাকিনী তীরে বেদীরচনা পূর্ব্বক গোলক ও পুত্তলিকা লইয়া খেলা করিতেন। ২৯

Eng. Tran.—In infancy she being surrounded by friends of her own sex and age was very fond of playing, building small altars of sand on the banks of the heaven- descended Ganga's stream, playing balls and acting the fostermother to her dolls as if willing to enjoy the diversions relished by young girls. (29)

हिन्दी अनुवाद। वह पार्व्वती वाल्यावस्थामें सखियोंके साथ कृत्रिम पुत्रोंके साथ खेलती हुई वारवार शोभी ॥ २९

वाच्यान्तरम्। हंसमालाभिः गङ्गा इव। आत्मभाभिः महौषधिरिव प्राक्तनजन्म-विद्याभिः स्थिरोपदेशया सा प्रपेदे ॥ ३०

सरलार्थः। यथा हंसमालाः शरत्काले गङ्गां प्रपद्यन्ते रजन्याम् ओषधयः स्वामर्चिषं लभन्ते एवं पार्व्वती पूर्व्वजन्मनि अर्ज्जिताः समस्ता एव विद्याः मेधाविलात् कैशोरे प्राप्त-वती ॥ ३०

বঙ্গানুবাদ। যেমন শরৎ কালে দলে দলে হংস আসিয়া গঙ্গার বক্ষে উপস্থিত হয়, যেমন রাত্রিকালে ওষধিলতার আলোকমালা স্বতঃই উদয় হইয়া থাকে, সেইরূপ ইহ জন্মে সেই বালিকার বিদ্যাশিক্ষার সময় উপস্থিত হইলে পূর্ব্বজন্মার্জ্জিত সমস্ত বিদ্যা আপনা হইতে তাঁহার অন্তঃকরণে আসিয়া স্ফূর্ত্তি পাইল। ৩

Eng. Tran.—As flocks of ganders are seen to appear in autumn on the Ganga's stream, as the natural luminosity appears at night in the glowing plant, so the knowledge acquired in her previous birth, manifested themselves just at the age, when literary education was given to her, such a firm hold she got of knowledge that she had acquired once. (30)

हिन्दी अनुवाद। पार्वतीकी उपदेशकालहीमें सर्व विद्या आगई जैसे शरत्काल हंसमाला गङ्गामें जाती है अथवा रात्रिमें तेज जैसे औषधियोंमें जाता है ॥ ३०

वाच्यान्तरम्। तया प्रपेदे ॥ ३१

सरलार्थः। अथ कालेन सा पार्वती यौवनमधिरुरोह यौवने तस्याः शरीरं कृत्रिम-शोभां विनापि अलङ्कृतमासीत् तस्याः वपुः मद्यमिव चित्तोन्मादकं मदनस्य पुष्पादिभिन्नम् अस्त्रभूतं स्मरभावसन्दीपकमभवत् ॥ ३१

বঙ্গানুবাদ। অতঃপর যে বয়স দেহলতিকার পক্ষে অকৃত্রিম অলঙ্কার স্বরূপ, যাহা মদিরা নামে প্রসিদ্ধ নহে, অথচ উন্মত্তার উৎপাদক।এবং যাহা পুষ্প না হইয়াও মদনের অস্ত্রস্বরূপ কার্য্য করিয়া থাকে, পার্ব্বতী বাল্যকালের পরবর্ত্তী সেই নবযৌবন প্রাপ্ত হইলেন। ৩১

